श्रीविद्यानन्दनाथविरचिता

# ज्ञानदीपविमर्शिनी

कुलपतेः डॉ. मण्डनमिश्रस्य प्रस्तावनया समलङ्कृता

सम्पादकः

आचार्यश्रीव्रजवल्लभद्विवेदः

सह-सम्पादकः

डॉ. शीतलाप्रसाद उपाध्यायः

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः



वाराणसी

योगतन्त्र-ग्रन्थमाला
[२६]

श्रीविद्यानन्दनाथविरचिता

# ज्ञानदीपविमर्शिनी

कुलपतेः डॉ. मण्डनमिश्रस्य प्रस्तावनया समलङ्कृता

सम्पादकः
आचार्यश्रीव्रजवल्लभद्विवेदः

सह-सम्पादकः
डॉ. शीतलाप्रसाद उपाध्याय

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः
वाराणसी

YOGATANTRA-GRANTHAMĀLĀ

[ 26 ]

# JÑĀNADĪPAVIMARŚINĪ

OF

## ŚRĪ VIDYĀNANDA NĀTHA

*FOREWORD BY*

**DR. MANDAN MISHRA**

VICE-CHANCELLOR

*EDITED BY*

**ĀCĀRYAŚRĪ VRAJAVALLABHA DVIVEDĪ**

Ex-Head of the Dept. of Sāṅkhyayogatantrāgama

Sampurnanand Sanskrit University

Varanasi

*ASSISTED BY*

**DR. SHITALA PRASADA UPADHYAYA**

Lecturer in the Dept. of Sāṅkhyayogatantrāgama

Sampurnanand Sanskrit University


VARANASI

1996

Research Publication Supervisor–
**Director, Research Institute,**
Sampurnanand Sanskrit Univesity
Varanasi.

❑ PUBLISHED UNDER 'REVOLVING FUND' SCHEME FINANCED BY GOVERNMENT OF UTTAR PRADESH

Published by–
**Dr. Harish Chandra Mani Tripathi**
Publication Officer,
Sampurnanand Sanskrit University
Varanasi-221 002.

❑

Available at–
**Sales Department**
Sampurnanand Sanskrit University
Varanasi-221 002.

❑

First Edition, 500 Copies
Price Rs. 220.00

❑

Printed by–
**Tara Printing Works**
Kamachha,
Varanasi-221 010

योगतन्त्र-ग्रन्थमाला

[ 26 ]

श्रीविद्यानन्दनाथविरचिता

# ज्ञानदीपविमर्शिनी

**कुलपतेः डॉ. मण्डनमिश्रस्य प्रस्तावनया समलङ्कृता**


*सम्पादकः*

**आचार्यश्रीव्रजवल्लभद्विवेदः**

सांख्ययोगतन्त्रागमविभागाध्यक्षचरः

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

वाराणसी

*सह-सम्पादकः*

**डॉ. शीतलाप्रसाद उपाध्यायः**

प्राध्यापकः, सांख्ययोगतन्त्रागमविभागस्य

सम्पूर्णानन्दसंस्कृतविश्वविद्यालये

वाराणसी



वाराणस्याम्

२०५३तमे वैक्रमाब्दे १९१८तमे शकाब्दे १९९६तमे खैस्ताब्दे

अनुसन्धानप्रकाशनपर्यवेक्षकः —

**निदेशकः, अनुसन्धानसंस्थानस्य**

सम्पूर्णानन्दसंस्कृतविश्वविद्यालये

वाराणसी।

❑ **उत्तर प्रदेश शासनेन वित्तपोषितायां 'रिवाल्विग फण्ड' - योजनायां प्रकाशितः**

प्रकाशकः —

**डॉ. हरिश्चन्द्रमणित्रिपाठी**

प्रकाशनाधिकारी,

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

वाराणसी— २२१ ००२.

❑

प्राप्तिस्थानम्—

**विक्रय-विभागः,**

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

वाराणसी-२२१ ००२.

❑

प्रथमं संस्करणम्, ५०० प्रतिरूपाणि

मूल्यम्— २२०.०० रूप्यकाणि

❑

मुद्रकः —

**तारा प्रिंटिंग वर्क्स**

कमच्छा, वाराणसी

# प्रस्तावना

अस्य विश्वविद्यालयस्य योगतन्त्रविभागाध्यक्षचरैः सुगृहीतनामधेयैः पद्मविभूषणादिनानाविरुदालङ्कृतैः पुण्यश्लोकैः श्रीमद्भिर्गोपीनाथकविराज-महोदयैः प्रारब्धा खलु योगतन्त्रग्रन्थमाला एतद्विषयकाणां महनीयग्रन्थानां प्रकाशनाय। तत्राद्यावधि नैके विशिष्टा ग्रन्थाः प्राकाश्यमापुः। अधुना तस्यामेव ग्रन्थमालायां षड्विंशतितमपुष्पत्वेन विद्यानन्दविरचिता ज्ञानदीप-विमर्शिनीनाम्नी भगवत्यास्त्रिपुरसुन्दर्या आन्तरबाह्यवरिवस्याप्रदर्शिनी पद्धतिरियं तन्त्रशास्त्ररसिकानां विदुषां पुरतः सप्रमोदं समुपस्थाप्यते।

नित्याषोडशिकार्णवाख्यस्य चतुष्षष्टितन्त्राण्यतीत्य वर्तमानस्य महनीयस्य तन्त्रस्यार्थरत्नावलीनाम्नी टीका ह्यनेनैव ग्रन्थकारेण सम्प्रदायद्वयज्ञेन रचिता योगतन्त्रग्रन्थमालायां प्रथमपुष्पत्वेन पूर्वमेव प्रकशिता। तस्यैव विदुषो वर्ततेऽयमपरो ग्रन्थः। अर्थरत्नावल्यां स्वयं ग्रन्थकारेण ज्ञानदीपविमर्शिनी स्मर्यत इति ततः पूर्वमेवास्या रचना समजायत। योगिनीहृदयदीपिकायाः कर्ता योगी अमृतानन्दोऽपि तामेनां पद्धतिं सस्मारेति वर्ततेऽस्य ग्रन्थस्य कोऽपि विशिष्टो महिमा।

ग्रन्थ-ग्रन्थकारादिविषये प्रास्ताविके सर्वमुक्तमेव। अस्य ग्रन्थस्य समुपलब्धासु मातृकासु वर्तते परस्परं साम्यं वैषम्यं च। तत्र समाः पाठा मूलग्रन्थे, असमाश्च विभिन्नेषु परिशिष्टेषु स्थापिताः। शोधकार्यसाहाय्यार्थं च नैकाः सूच्यः संयोजिताः। मातृकाविशिष्टपत्राणां छायाचित्राण्यपि समावेशितानि। मन्येऽनेन परिकरेण शोधार्थिनो लाभान्विताः स्युः।

एतादृशानां विरलप्रायाणां दुर्लभानां ग्रन्थानां प्रकाशनेन तन्त्रशास्त्रस्य ग्रन्थानामुद्धारः संरक्षणं प्रचारः, सहैव वैदिक-पौराणिक-तान्त्रिकविद्याध्येतॄणां वैदिक-पौराणिकविषयैः सह तान्त्रिकविषयाणां तुलनात्मकाध्ययने प्रवृत्तिरपि भविष्यति। नैके विषयाः सन्ति प्रतिपादितास्तन्त्रागमवाङ्मये येषां वैदिक-पौराणिकवाङ्मये नामान्यपि नोपलभ्यन्ते। एकं निदर्शनमत्र पर्याप्तमस्ति। दमनकपूजाविषये श्रूयते—

**स्वच्छन्दभैरवे तन्त्रे यद्यपीदमुदाहृतम् ।**
**तथापीह समानत्वात् सिद्धान्तेऽप्युपयुज्यते ।।** इति।

सेयं दमनकपूजा विस्तरेणात्र विवृता। एवमेव पवित्रारोपणमपि वर्तते तन्त्रागमशास्त्राणां विशिष्टो विषयः। एतादृशानामर्चापद्धतीनां तौलनिकमनुशीलनं महते लाभाय स्यादिति वयं मन्यामहे।

विश्वविद्यालयस्यास्य तन्त्रसाहित्यप्रकाशने सम्पादने च स्वनामधन्यानां महामहोपाध्यायश्रीगोपीनाथकविराजमहोदयानां शिष्यैः पण्डितश्रीव्रजवल्लभद्विवेदिमहोदयैः सुमहत् प्रयतितम्। अत्रत्ये प्रास्ताविके तैः संक्षेपेणास्य ग्रन्थस्य वैशिष्ट्यं निदर्शितम्। वस्तुतस्तन्त्रागमक्षेत्रे साम्प्रतमपि बहु कर्तव्यमस्ति।

समादरणीयाः श्रीव्रजवल्लभद्विवेदिमहोदयाः कविराजमहाभागानां परम्परां विद्यया साधनया च संवर्धयन्तीति राष्ट्रस्य कृते गौरवस्य विषयः। तेषां शिष्यपरम्परापि तन्त्रसाहित्यस्य अध्ययने, अध्यापने, ग्रन्थसम्पादन-लेखादिभिः विकासेऽपि संलग्ना इति हर्षप्रकर्षस्य विषयः। ते हि सौम्य-मूर्तयः, अध्यापने लेखने भाषणे च समानरूपेण दक्षा अस्य विश्वविद्यालयस्य सांख्ययोगतन्त्रागमविभागस्य आचार्यत्वेन अस्याः संस्थायाः महिमानं पोषितवन्तः, तदर्थमिदं विद्याकेन्द्रं तेषाम् अधमर्णतां बिभर्ति। ते हि संस्कृतविद्याया असाधारणवैदुष्यसम्पन्नाः, अत एव महामहिमशालिभिर्भारतराष्ट्रपतिभिः आजीवनं विंशतिसहस्ररूप्यकमितेन वार्षिकमानदेयेन सम्मानपत्रेण च सम्मानिताः, सम्प्रत्यपि काश्यां विराजमाना म.म. श्रीगोपीनाथकविराजमहाशयानां मार्गमनुसृत्य तन्त्रवाङ्मयं प्रसारयन्तीति अस्माकं सौभाग्यसम्पत्। तेषामेव शिष्यैरहर्निशं विश्वविद्यालयमिमं सेवमानैः डॉ. शीतलाप्रसाद-उपाध्यायमहोदयैर्ग्रन्थस्यास्य सम्पादनेऽपि श्रीद्विवेदिमहोदयानां साहाय्यमाचरितमिति गुरुपरम्परानिर्वाहस्य गुरुसपर्यायाश्च उत्तमं निदर्शनम्।

प्रसङ्गेऽस्मिन्नहं तत्रभवद्भ्यः श्रीव्रजवल्लभद्विवेदिमहोदयेभ्यः स्वकीयं कृतज्ञताञ्जलिं डॉ. शीतलाप्रसाद -उपाध्यायेभ्यश्च अभिनन्दनानि, प्रकाशनाधिकारिणे श्रीहरिश्चन्द्रमणित्रिपाठिने तारायन्त्रालयसञ्चालकाय श्रीरविप्रकाशपण्ड्यामहानुभावाय च धन्यवादान् समर्पयन् ग्रन्थमिमं मनीषिभ्यः समर्पयामि।

**वाराणसी**
गुरुपूर्णिमा
वि.सं. २०५३
(३०.७.१९९६ खैस्ताब्दः)

**मण्डनमिश्रः**
कुलपतिः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

# प्रास्ताविकम्

अथायं समुपस्थाप्यते तन्त्रागमशास्त्ररसिकानां विशेषतो भगवत्यास्त्रिपुरसुन्दर्याः समुपासकानां पुरतो ज्ञानदीपविमर्शिन्याख्य आन्तरबाह्यवरिवस्यास्वरूपप्रतिभासकः पद्धतिग्रन्थः। ग्रन्थस्यास्य प्रणेता विद्यते तत्रभवान् अर्थरत्नावल्याख्याया नित्याषोडशिकार्णवस्य व्याख्यायाः प्रणेता सम्प्रदायद्वयज्ञो विद्यानन्दनाथः। एतद्ग्रन्थद्वयव्यतिरिक्तोऽस्यान्योऽपि कश्चन ग्रन्थो विद्यते न वेत्यद्यावधि नास्माभिः परिज्ञातम्। ग्रन्थकारस्य कालादिविषयेऽन्येषां विद्यानन्दादीनां च विषये नि.षो. उपोद्घाते (पृ. २१-२२) एवास्माभिः सर्वं लिखितमिति नात्र प्रतन्यते।

## मातृकापरिचयः

मातृकापञ्चकसाहाय्येन ग्रन्थोऽयं सम्पादितः। तत्र प्रथमा १९६१ संख्याका बटोदरगायकवाड़शोधसंस्थानमातृका (क.), द्वितीया १२७८ संख्याका त्रिवेन्द्रम्शोधसंस्थानमातृकाप्रतिलिपिः (ख.), तृतीया ९० संख्याका उदयपुरप्राच्यविद्यामन्दिरमातृका (ग.), चतुर्थी पञ्चमी च नेपालजर्मनप्रशासनयोः सहयोगेन छायाचित्रीकृते। तत्र चतुर्थी देवनागरीलिपिलिखिता ५-४९०४ संख्याका (घ.), पञ्चमी च नेवारीलिपिनिबद्धा १९७० संख्याका (ङ)। आसु क.संकेतिता मातृका, ख. संकेतिता मातृकाप्रतिलिपिश्च सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य पूर्वकुलपतीनां श्रीमतां पण्डितसुरतिनारायणमणित्रिपाठिमहोदयानाम्, अत्रत्यस्यैव शोधसंस्थानस्य पूर्वतननिदेशकानां श्रीमतां तत्रभवतां पण्डितक्षेत्रेशचन्द्रचट्टोपाध्यायमहोदयानां च साहाय्येन समुपलब्धे आस्ताम्। तदनु च तत्र तत्र गत्वा बटोदरमातृकाया उदयपुरमातृकायाश्च छायाप्रती समुपलब्धे अस्माभिस्तत्रत्याधिकारिणां सहयोगेनानुमत्या च। अन्तिमे द्वे छायाचित्रीकृते मातृके अस्मभ्यं फ्रांसदेशीयेन तन्त्रागमशास्त्रविदुषा श्रीमता डॉ० आन्द्रेपादुमहोदयेन प्रेषिते।

आसु क. मातृका प्राचीनतमा प्राचीनदेवनागरीलिपिनिबद्धा। ख.ग. मातृकाभ्यां संशोध्यात्रत्य एव पाठो मूलग्रन्थरूपेणात्र स्थापितः, ख.ग.पुस्तकयो-

रधिकाः पाठाश्च तिर्यक्कोष्ठकेषु [] धृताः। अत्र ४३-९२ पृष्ठेषु तिर्यक्-कोष्ठकस्थापितः पाठोऽस्यां मातृकायां कस्याश्चन[१] त्रुटेरभावेऽपि नास्तीति स ख.ग. मातृकासंवादेन पूरितः। एवमेव चतुष्षष्टियोगिनीनामावली[२]-गुरुपारम्पर्य-क्रमप्रतिपादकयोः प्रकरणयोः पाठोऽत्र व्यत्यस्तो वर्तते। स च मातृकान्तर-साहाय्येनार्थरत्नावलीसंवादेन च सक्रमतामापादितः। शिष्टाश्चात्रत्याः परस्परम-संबद्धाः पाठाः प्रथमे परिशिष्टे[३] (पृ. १६९-१७३) संनिवेशिताः। अत्र च केचन श्लोका ग्रन्थसमाप्तिस्था दृश्यन्त इति ते ग्रन्थान्ते (पृ. १६८) समायोजिताः। १३८०-९४ ई. लिखिताऽस्य ग्रन्थस्य काचन मातृका नेपालदेशे समुपलभ्यत इति "न्यू कैटलाग्स कैटलागरम्" (भा. ७, पृ. ३२५) इत्यत्र[४] सूच्यते। नास्माभिः सोपलब्धा। तस्याः साहाय्येनैतास्त्रुटयः संमार्जिताः स्युरिति वयं संभावयामः।

## मूलग्रन्थः परिशिष्टानि च

क. मातृकालेखनसमयेऽत्रत्ये न्यासप्रकरणे कियन्तो न्यासा उपन्यस्ता आसन्निति न वक्तुं शक्यते। ख.ग. मातृकयारुभयोः संवादिनो न्यासा एव मूल-ग्रन्थे स्थापिताः। [५]विसंवादिनस्तु न्यासाश्चतुर्थे परिशिष्टे संनिवेशिताः। स्तोत्र-पद्धतौ क. मातृकायामन्यासु च संवादिनः श्लोकाः प्रथमं स्थापिताः, तदनु च ख.मातृकायां परिदृश्यमानाः पाठाः, यत्र हि त्रिपुरसुन्दरीदण्डकं सौभाग्यहृदयंनाम स्तोत्रं च दृश्यते। ग्रन्थद्वयमेतन्नित्याषोडशिकार्णवपरिशिष्टे प्रस्तुतमातृकासाहा-य्येनैव मुद्रितमासीदिति हि जानन्त्येव विद्वांसः। ख. मातृकायां जपपद्धतिर्जप-लक्षणमिति, पवित्रपद्धतिः पवित्रारोपण इति, दमनकपद्धतिश्च दिनदीपोत्सव-नाम्ना धृता। सेयं ख.मातृका दीक्षापद्धतिपर्यन्तमुपलब्धा १५८ तमे पृष्ठे

१. क. मातृकाया विंशतिसंख्याकस्य पत्रस्य छायाचित्रं द्रष्टव्यम्।

२. क. मातृकायाः ४८-५६ संख्याकानां पत्राणां छायाचित्राण्यवलोकनीयानि।

३. क. मातृकायाः ४३ संख्याकस्य पत्रस्य छायाचित्रं पश्यताम्।

४. ईशवीयचतुर्दशशताब्दलिखिता मातृकाऽस्य ग्रन्थस्य प्राप्यत इति ततः प्राचीन एवैष ग्रन्थकार इति विभावनीयम्। स्वात्मानन्द इति नाम्नाऽप्ययं प्रसिद्ध इति तु समालोच-नीयमस्माभिः। तत्तु यथावसरं क्रियत एव।

५. मूलग्रन्थे न्यासप्रकरणसमाप्तौ—"मुद्रानवकं प्रदर्श्य ध्यानं कुर्यात्" (पृ. ५१) इत्युक्ते-रनन्तरमपि न्यासप्रपञ्चो दृश्यते ख.मातृकायाम् (पृ. ३३)। स च चतुर्थे परिशिष्टे द्रष्टव्यः।

समाप्तिमेति। गुरुपारम्पर्यक्रमोऽत्र न दृश्यते। समाप्तौ च "मध्यमपद्धतिः सम्पूर्णा" इति दृश्यते।

ग.घ.ङ. मातृकासु सूर्यार्चनद्वारपालार्चनपद्धत्योरन्तरा मण्डपवर्णनपद्धतिर्वर्तते। घ.ङ.मातृकयोरस्या नाम मण्डललक्षणमिति वर्तते। कुण्डमण्डपविषयकाः केचन श्लोकाः प्रथमे परिशिष्टेऽपि दृश्यन्ते क.ख.मातृकयोरनुपलम्भादस्य समावेशोऽस्माभिः परिशिष्टे द्वितीये कृतः। एवमेव मन्त्रोद्धारपद्धतौ[१] ग.घ.ङ.मातृकासु महान् विस्तरो वर्तते। अत्रापि क.ख.मातृकयो--रनुपलब्धा अंशास्तृतीये परिशिष्टे स्थापिताः। न्यासप्रकरणीया विसंवादिनः पाठाश्चतुर्थे परिशिष्टे स्थापिता इति तु ख.मातृकापरिचये प्रोक्तमेव। आसु ग.मातृकायां पवित्रपद्धतिसमाप्तिः पूर्वमेव १२९तमपृष्ठस्थटिप्पणीप्रदर्शितस्थलेऽवसिता भवति। अत्र चतुर्दशी पद्धतिर्नाङ्किता, दूतीयागपद्धतिश्च सप्तदशीत्वेन स्थापिता।

घ.ङ.संज्ञिके उभे नेपालमातृके प्रायः समानमेव स्वरूपं धारयतः। उभयोरप्यनयोः षष्ठी सूर्यपूजापद्धतिः स्नानपद्धतित्वेन स्थापिता। मण्डपलक्षणपद्धतौ संख्या न दृश्यते। ग.मातृकायां सप्तदशीत्वेन स्थापिता दूतीयागपद्धतिरनयोर्दशमीत्वेन स्थापिता। एवमेव बाह्यन्यासपद्धतिर्द्वादशी, आन्तरन्यासपद्धतिश्च त्रयोदशी वर्तते। अत्रत्यायां सप्तदश्यां चक्रार्चनपूजाहोमजपपद्धतौ मुद्रा-होम-जप-अक्षमालापद्धतीनां विषयाः सहैव विवेचिता दृश्यन्ते। अनयोर्न्यासध्यानपद्धत्योरन्तराले समुपलभ्यमानोऽथ चान्यासु त्रिषु मातृकास्वनुपलब्धः पाठोऽत्र पञ्चमे परिशिष्टे स्थापितः। एवमेवानयोः स्तोत्रपद्धतावपीतरासु मातृकास्वनुपलभ्यमानाः श्लोकाः षष्ठे परिशिष्टे द्रष्टव्याः। अत्रैव केचन श्लोकाः क्रमस्तोत्रवचनैः संवदन्तीति विभावनीयम्। गुरुपारम्पर्यपद्धतिरत्र पारम्पर्यपद्धतिनाम्ना स्थापिता। अनयोः परिदृश्यमाना द्वीपाम्नायपद्धतिस्तु नान्यासु मातृकासु वर्तत इति सात्र सप्तमे परिशिष्टे समावेशिता। वाराणसीतो गोरक्षसंहितानाम्ना प्रकाशिते मतोत्तराख्ये ग्रन्थेऽपि दृश्यते द्वीपाम्नायपटलः (पृ. ३७५-३९७)। तेन चात्रत्यो विषयः संवदतीति विभावनीयं श्रीमद्भिः।

१. ख.मातृकायामुद्धारपद्धतिरिन्येव नाम। अत्रत्याः केचनांशाः क.ख.मातृकाभ्यां संवदन्ति, शिष्टास्तु प्राचीनैराचार्यैरङ्गीकृतां मन्त्रोद्धारपद्धतिं नानुसरन्तीति विभावनीयम्।

अनयोरूनविंशतिपद्धतिर्नाङ्किता। ततः परं च पवित्रारोहण इति, दमनारोपण इति, काम्यसाधन इति पारम्पर्य इति च पद्धतीनां नामानि सन्ति। ङ-संज्ञकनेवारीलिपिनिबद्धनेपालमातृकायां ग्रन्थसमाप्त्यनन्तरं परस्परमसंबद्धानि [१]कानिचन पत्राणि सन्ति। तत्रत्यो विषयोऽपि त्रिपुरासम्प्रदायेन ग्रन्थेनानेन च संबद्ध इति ग्रन्थान्तरसाहाय्येन संगतिमापाद्याष्टमपरिशिष्टत्वेनात्र स्थापितः। अत्र शङ्कराचार्यविरचितः कश्चन स्तोत्रग्रन्थोऽपि वर्तते। स्तोत्रस्यास्य ह्रीङ्कारमेवेति पञ्चमः श्लोकः सौन्दर्यलहरीटीकायां सौन्दर्यवर्धन्यां (पृ. ४५) शङ्कराचार्यकृतक्रमस्तोत्रत्वेन स्मर्यते। स्तोत्रमिदं दतियानगरस्थपीताम्बरापीठतः प्रकाशितायां श्रीमहात्रिपुरसुन्दरीपूजापद्धत्यां (पृ. ७५-७७) ब्रह्मविरचितकल्याणीस्तोत्रनाम्ना प्रकाशितम्। म.म.प. गोपीनाथकविराजमहोदयैः स्वकीये "भारतीय संस्कृति और साधना" (पृ. १०५) इत्याख्ये ग्रन्थे शङ्कराचार्यकृतिषु कल्याणवृष्टिस्तोत्रनाम्ना स्मृतमिदमेव स्तोत्रम्। महिम्नस्तोत्र-जितन्तास्तोत्रेत्यादिष्वाद्यपदमुद्दिश्य यथा स्तोत्रनाम ख्यापितमभूत्, तथैव कल्याणवृष्टिरित्याद्यपदमाधृत्य तन्नाम्नैवेदं स्तोत्रं प्रथितमभूदिति युक्तमेव प्रतिभाति। शङ्कराचार्यकृतस्तोत्रसंग्रहेऽपि स्तोत्रमिदं प्रकाशितं स्यात्।

आसां सर्वासां मातृकाणां सामान्याः पाठभेदाष्टिप्पणीषु संयोजिताः। किन्त्वासु सन्ति नानास्थलानि, यत्र प्रतिपाद्या विषया भिन्नयैव शब्दशय्यया वर्णिता वर्तन्ते। नित्याषोडशिकार्णवव्याख्यायामर्थरत्नावल्यामपि दृश्यन्ते तादृशानि स्थलानि। तानि यथा तत्र मुख्यपाठेन सहैव सूक्ष्माक्षरेषु स्थापितानि, तथाऽत्रापि स एव नियमोऽङ्गीकृतः। यथा अर्घ्यसाधनपद्धतौ २८-३२ पृष्ठेषु ग.मातृकापाठः सूक्ष्माक्षरेषु सहैव स्थापितः। एवमेव न्यासपद्धतौ ४६-५० पृष्ठेषु सूक्ष्माक्षरेषु ग.पाठः, ५२-५५ पृष्ठेषु च घ.ङ.पाठस्तयैव पद्धत्या विन्यस्तः। पूजापद्धतौ ६३ पृष्ठे घ.ङ.पाठः, ७३-७५ पृष्ठेषु ग.पाठः, ७५-७६ पृष्ठेषु घ.ङ.पाठः, पुनः ८४-१०३ पृष्ठेषु घ.ङ.पाठः स्थापितो वर्तते। अत्रैव ९३-९५ पृष्ठेषु ख.मातृकायाः, ग.मातृकायाश्च पाठो भिद्यते। एषु पृष्ठेषु प्रथमं ख.पाठः, ततः परं ग.पाठः, सर्वान्ते च घ.ङ.मातृकयोः पाठो विन्यस्तः। दीक्षापद्धतौ १४०-१५८ पृष्ठेषु ख.पाठो भिन्नप्रकारको वर्तते। अत्रैव १५८-१६१

---

१. अत्रत्यानां पत्राणां छायाचित्राण्यवलोकनीयानि।

पृष्ठेषु घ.ङ.पाठोऽपि तथैवेति सोऽपि भिन्नाक्षरेषु विन्यस्तः। एवमत्र क.ख.मातृकयोः संवादिनोंऽशा एव मूलग्रन्थे पाठान्तरैः सह स्थापिताः। ये च विषयास्तयोर्न दृश्यन्ते, तेषां सर्वेषां समावेशः परिशिष्टेष्वत्र पूर्वोक्तपद्धत्या कृत इति विभावनीयं कृपालुभिर्विपश्चिद्भिः ।

**ग्रन्थ-ग्रन्थकारपरिचयः**

ग्रन्थकारस्य विद्यानन्दस्य तद्रचितग्रन्थस्यार्थरत्नावलीसमाख्यस्य च नि.षो.व्याख्यानभूतस्य परिचयोऽस्माभिः पूर्वमेव नि. षो. उपोद्घाते (पृ. २१-२२) प्रदत्तः। "अमरानन्दनाम्नेयं विद्यानन्देन धीमता" (पृ. १६८) इति वचनादमरानन्द इति तस्यैवापरं नाम। न्यू॰ कै॰ कै॰ इति बृहत्सूच्यामुक्तस्थले स्वात्मानन्द इति तस्य नामान्तरं स्मर्यते, अत्रापि दीक्षापद्धतिसमाप्तौ ख. पाठे (पृ. १५९) स्वात्मानन्द इति नाम दृश्यते। तेन विद्यानन्दस्यैव स्वात्मानन्द इत्यपि नाम निश्चेतुं शक्यते, किन्तु ऋजुविमर्शिनी (पृ. २)-अर्थरत्नावली (पृ. ४) प्रमाणाभ्यां स्वात्मानन्द इति शिवानन्दगुरुः, विमलस्वात्मशम्भुरिति च विद्यानन्द इति परिज्ञातत्वात् स्वात्मानन्देन रचिता दीक्षापद्धतिरेवात्र समावेशितेत्यप्यनुमातुं शक्यते। अत्रार्थरत्नावल्यां नैकेषु स्थलेषु समुद्धृतत्वाज्ज्ञानदीपविमर्शिनी ततः पूर्वं संदृब्धेति सुतरां ज्ञायते। ग्रन्थकारेणार्थरत्नावलीमङ्गलपद्येषु प्रथमे महावनः, द्वितीये प्रियानन्दः, चतुर्थपञ्चमपद्ययोश्च गुरू रत्नेशः प्रणम्यते। अत्र रत्नेशो विद्यानन्दस्य गुरुरिति स्पष्टमेव। प्रियानन्दोऽस्य परमगुरुः, महावनमुनिश्च परमेष्ठिगुरुरिति संभावयितुं शक्यते। अत्र (पृ. १६२) विद्यानन्देन स्वगुरुः स्मर्यते। नाम तु तत्र न निर्दिष्टम्। "श्रीविद्याधराय नमः। श्रीयोगानन्दमुनये नमः" (पृ. १६८) इत्यत्र च विद्याधर-योगानन्दमुनिपदाभ्यां कयोर्ग्रहणमित्यन्वेषणीयम्।

ग्रन्थारम्भेऽत्र त्रयोदश नमस्कारपद्धतिश्लोकाः सन्ति। तत्र चतुर्षु भगवती त्रिपुरा स्तुता। पञ्चमे गुरुः, षष्ठसप्तमयोर्गणनायकः, अष्टमे बटुकः, नवमे योगिन्यः, दशमे च श्लोके क्षेत्रपालः स्तूयते। अन्तिमेषु त्रिषु श्लोकेषु विद्यानन्देन धीमताऽऽगमसागराद् [१]वामकेश्वराम्नायमुन्नीय लोपामुद्रामतानुसारिणी

१. जयरथेन स्मृतेषु सिद्धा-मालिनी-नामकतन्त्रेषु तृतीयं नाम वामक इति स्यात्, तेन च वामकेश्वरतन्त्रस्य ग्रहणं विधेयमित्यास्माकीनं प्रस्तावं श्रीमन्तो बलजिन्नाथपण्डितमहोदया अप्यङ्गीकुर्वन्ति। वामकेश्वरपदेन केवलं वामकेश्वरीमताख्यस्य नित्याषोडशि-

ज्ञानदीपविमर्शिनीनाम्नी पद्धतिरियं क्रियत इति भणितम्। अग्रे स्नानसन्ध्यादि-पद्धतिष्ववान्तरस्नान-सन्ध्या-तर्पण-सूर्यपूजा-द्वारपालार्चन-चक्रोद्धार-अर्घ्य-साधन-न्यास-पूजा-मुद्रा-होम-पवित्र-दमनकानां[१] स्वरूपं वामकेश्वरदर्शन-जिज्ञासूनां परमप्रमोदकरं भवेदिति वयमाशास्महे। उदयाकरपद्धति-षट्सहस्र-भट्टारकादीनां येषां ग्रन्थानां साहाय्येनेयमान्तरी वरिवस्या प्रतिपाद्यते, तेषां परिचयोऽनुपदमेव प्रदीयते। अत्र विद्यानन्देन स्वकीयाः श्लोकाः (पृ. २५) स्मर्यन्ते। निर्दिष्टे पृष्ठे एक एव श्लोको दृश्यते। २६तमे पृष्ठे निर्दिष्टौ श्लोका-वपि तस्यैव स्यातामित्यनुमातुं शक्यते। दीक्षापद्धतिरपि ग्रन्थकारेण श्लोका-त्मिकैव संदृब्धा। अत्र प्रथमे परिशिष्टे १७०तमे पृष्ठे स्थापिताः श्लोका अपि ग्रन्थसमाप्तिस्था एव स्युः। तत्र हि वर्ण-मण्डल-मन्त्र-धाम-संवित्स्वरूपिणी महात्रिपुरसुन्दरी सविशेषं स्तूयते। अयं च विषयोऽर्थरत्नावल्यां (पृ. ३, ३६-३९) महार्थमञ्जरीपरिमले (पृ. ८९-९४) च द्रष्टुं शक्यते। अन्यासु कास्वपि मातृकासु श्लोकानामेतेषामनुपलब्धेः क्रम एषां स्थापयितुं न शक्य इति स्फुट-तयैव श्लोका एतेऽत्र समुपन्यस्ताः। अस्मिन्नपि विषये पूर्वसूचिता प्राचीन-नेपाल- मातृकैव नः शरणम्।

"अक्षोभ्याद्याश्चतुष्षष्टियोगिन्यः"(पृ. ३७९-३८०) इत्यमृतानन्दो योगिनी-हृदयदीपिकायां भणति। तासां नामानि तत्र न दृश्यन्ते। तानि नामान्यत्र (पृ. १५४-१५८) द्रष्टव्यानि। एतत्समानैव नामावली अग्निपुराणे (१४६. १२-२१) प्रतिष्ठालक्षणसारसमुच्चये (६.३२७-३३५) च दृश्यत इति ते अप्यत्र टिप्पण्यां स्थापिते (पृ. १५४-१५७)। जबलपुर(मध्यप्रदेश)समीपस्थे नर्मदातटीये 'भेड़ा-घाट' इत्याख्ये स्थाने वर्तते चतुष्षष्टियोगिनीमन्दिरम्। तत्र नामोल्लेखपुरस्सरं चतुष्षष्टियोगिनीनां मूर्तयः स्थापिताः सन्ति। कानिचन नामानि खण्डितानि,

---

कार्णवस्यैव ग्रहणं क्रियते चेत्, "मध्ये शास्त्रस्य तस्यास्ति नित्याषोडशिकार्णवः" (नि० षो० पृ. ३) इति शिवानन्दोक्तिरसमञ्जसा स्यात्। अतस्तादृशं वामकेश्वरशास्त्रमन्वेषणी-यम्, यस्य मध्ये नित्याषोडशिकार्णवस्य स्थितिः स्यात्।

१. "स्वच्छन्दभैरवे तन्त्रे यद्यपीदमुदाहृतम्। तथापीह समानत्वात् सिद्धान्तेऽप्युपयुज्यते॥" (श्लो. ५०१) इति सोमशम्भुवचनाद् दमनकपूजा प्राधान्येन भैरवतन्त्रेषु तदनुवर्तिषु शाक्ततन्त्रेषु च विधीयते। सिद्धान्ततन्त्रेष्वपि तस्या ग्रहणमत्र शाक्तमतप्रभावद्योतकम्, यो हि मध्यप्रदेशे प्रसृतेषु शैवमठेषु शनैः शनैः पदं न्यधत्त।

अथापि नामावलीनामासां तया विसंवाद एवेत्यधुनातन-जबलपुर-यात्रायां परिज्ञातम्। नानाविधा हि चतुष्षष्टियोगिनीनामावल्यो दृश्यन्ते। तास्वत्रत्या नामावली प्राचीनतमेति वयं संभावयामः। भीमादीनां चतुष्षष्टियोगिनीनां नामावली विमलप्रभायां कालचक्रतन्त्रटीकायां (भा. २, पृ. १२६) दृश्यते। सैषा बौद्धतन्त्राङ्गीकृता नामावली शैवशाक्ततन्त्रेषु नोपलभ्यते। सोमतिलकसूरिकृतायां लघुस्तवव्याख्यायां (पृ. १८) धृता नामावली जैनतन्त्राङ्गीकृतयोगिनीनां स्यात्।

## उद्धृता ग्रन्था ग्रन्थकाराश्च

ज्ञानदीपविमर्शिन्यां स्मृतेषु ग्रन्थेषु ग्रन्थकारेषु चास्यैव ग्रन्थकारस्यार्थरत्नावली, दीपकनाथस्य त्रिपुरसुन्दरीदण्डकम्, शङ्करभगवत्पादस्य प्रपञ्चसारः, भगवद्गीता, मूलसूत्रम्[१] (नित्याषोडशिकार्णवः), मूलागमः[२] (उत्तरषट्कम्), सोमशम्भुपद्धतिः (कर्मकाण्डक्रमावलिः), सौभाग्यहृदयस्तोत्रं (शिवानन्दस्य) चेत्येते ग्रन्था मुद्रिताः समुपलभ्यन्ते। कालिकाकल्पः कालीकल्पो वा लुप्ता० उपो० (पृ. २६) इत्यत्र विवृतः। केशवाचार्यस्य क्रमदीपिकाख्यो ग्रन्थो वाराणसीतो मुद्रितो वर्तते। तत्रात्रत्यमुद्धृतवचनमन्वेषणीयम्। अत्रोद्धृतौ त्रिपुरार्णवश्लोकावन्यत्रापि स्मृतौ दृश्येते। तौ च मुद्रिते त्रिपुरार्णवे न स्त इति[३] प्राचीनोऽयं त्रिपुरार्णवोऽद्यापि गवेषणापदवीमेवारूढः। एवमेवात्र प्रकारान्तरेण स्मृतानि रुद्रयामलवचनानि मुद्रिते रुद्रयामले न सन्तीति प्राचीनं रुद्रयामलमपि गवेषणीयमेव।

---

१. "तथा च मूलसूत्रे" (पृ. ५२) इत्युक्त्वा नित्याषोडशिकार्णवश्लोक (१.१२६) उद्धृत इति मूलसूत्रेण नित्याषोडशिकार्णवस्यैव ग्रहणं कृतमिति ज्ञातव्यम्।

२. "फलाधिक्यमपि शतलक्षकोटिभेदेनोत्तरोत्तरवैशिष्ट्यं मूलागमेषु द्रष्टव्यम्" (पृ. ११०) इत्यत्र वाचिकोपांशुमानसजपानां फलाधिक्यं चर्च्यते। तच्च—"लक्षं चोपांशुना कृतम्। मानसेन महेशानि कोटिजापफलं लभेत्॥" (५.१८) इत्येवं नि. षो. इत्यत्र दृश्यते। जपसंख्याबलेनापि फलाधिक्यं तत्रैव (५.१०-१७), उत्तरषट्के (५.२७-४१) चावलोकनीयम्। तेन मूलागमपदेनोभयोर्ग्रहणं कर्तुं शक्यते।

३. सम्पूर्णानन्दसंस्कृतविश्वविद्यालयतो मुद्रितस्य त्रिपुरार्णवस्य परिशिष्टम् (पृ. १४०-१५३) अवलोकनीयम्। अत्र विद्यार्णवादिषु समुद्धृतानि त्रिपुरार्णवस्य कानिचन वचनानि संगृहीतानि। तत्र रामेश्वरकृतपरशुरामकल्पसूत्रव्याख्यायां परमानन्दटीकायां च धृतानि वचनान्येव मुद्रिते त्रिपुरार्णवे समुपलभ्यन्ते, न विद्यार्णवादिषु धृतानि। तेन भिन्नावेतौ ग्रन्थौ, न त्वेक एव महान् ग्रन्थ इति ज्ञेयम्।

लक्ष्मणदेशिकेन्द्रः शारदातिलककर्ता। योगिनीहृदयदीपिकाकारेणास्य वचनद्वयमागमान्तरवचनत्वेन (पृ. ३२९-३३०), तन्त्रान्तरवचनत्वेन (पृ. २८७) च स्मर्यते। अत्र (ज्ञानदीपविमर्शिन्यां) च केवलं घ.ङ.मातृकयोरेव स स्मर्यते। अमृतानन्दप्रामाण्येन शारदातिलकस्य स्थितिस्ततः पूर्वतनीति सुतरां ज्ञायते, तथाप्यागमान्तरनाम्ना तन्त्रान्तरनाम्ना वा तत्र स्मृतत्वादस्य ग्रन्थस्य श्रीशास्त्र-(त्रिपुराशास्त्र)त्वं कथमपि साधयितुं न शक्यते। अत्र यद्वक्तव्यं तदुक्तमस्माभि-र्लुप्ता॰ उपो॰ पृ. ४६ टिप्पण्याम्। हालैण्डदेशीयस्तन्त्रागमशास्त्रनिष्णातो विद्वान् डॉ॰ तूनगान्द्रियानमहोदयो लक्ष्मणदेशिक एकादशशताब्दीभव इति भणति (हिन्दू तान्त्रिक लिटरेचर, पृ. १३५)।

कुब्जिकामतस्य संस्करणद्वयमुपलभ्यते— एकः ३५०० श्लोकात्मकः कुलालिकाम्नायनाम्ना प्रसिद्धो रोमनलिप्यां मुद्रितः[1], अपरश्च षट्सहस्रश्लो-कात्मकः षट्साहस्रसंहितानाम्ना प्रथितः। अस्याः संहिताया अपि पञ्च पटलानि रोमनलिप्यामेव [2]मुद्रितानि सन्ति। उभयोरप्येतयोः संस्करणयोरत्रोद्धृतं वचनं नोपलभ्यते, न च सम्पूर्णा मुद्रिता षट्साहस्री संहिता। षट्सहस्रभट्टारकस्या-त्रत्यः श्लोकस्तस्या एव संहितायाः स्यात्। शैवसिद्धान्तग्रन्थेष्वपि षट्साहस्री संहिता स्मर्यते। कालोत्तरागमस्यैव [3]षट्सहस्रश्लोकात्मकं संस्करणमेतदिति विभावनीयम्। अत्रोद्धृतः श्लोकस्तत्रत्यो नैव स्यात्।

"अनन्तशक्तिभट्टारकैस्त्रिपुरसुन्दरीकल्पलतायाम्" (पृ. १३०) इति वच-नेनाऽत्रत्येन ज्ञायते यत् त्रिपुरसुन्दरीकल्पलतायाः कर्ताऽनन्तशक्तिभट्टारक इति। अनन्तशक्तिभट्टारकविषये लुप्ता॰ उपो॰ (पृ. १६) इत्यत्र, नित्या॰ उपो॰ (पृ. ३१) इत्यत्र च, तथैव त्रिपुरसुन्दरीकल्पलताया महात्रिपुरसुन्दरीकल्पलतायाश्च विषये

---

१. कुब्जिकामततन्त्रनाम्ना ग्रन्थोऽयं हालैण्डदेशीयाभ्यां विद्वद्भ्यां डॉ.तूनगान्द्रियान-जे. ए. सोत्रामनमहोदयाभ्यां सम्पादितः, तत्रत्यैव प्राचीनतमया 'ई. जे. ब्रिल' इति प्रकाशनसंस्थया च १९८८ ई. वर्षे प्रकाशितः। कलिकातातस्तन्त्रसंग्रहे प्रकाशितं कुब्जिकातन्त्रमितः सर्वथा भिन्नमित्यवधेयम्।

२. षट्साहस्रसंहितानाम्नाऽस्य ग्रन्थस्य पञ्चपटलात्मको भागो हालैण्डदेशीयेन डॉ.जे.ए. सोत्रामनमहोदयेन सम्पादितः, तत्रत्यया 'ब्रिल' इति संस्थया च १९८२ ई. वर्षे प्रकाशितः।

३. लुप्ता॰ उपो॰ (पृ. ७२) इत्यत्र षट्साहस्रिकविवरणं द्रष्टव्यम्।

नित्या० उपो० (पृ. ३७-३८) इत्यत्र, अर्थरत्नावली (पृ. ११५) इत्यत्र च द्रष्टुं शक्यन्ते।

आगमपदेन, आगमान्तरपदेन च कस्य ग्रन्थस्य ग्रहणमिति न परिज्ञातमस्माभिः। तदुक्तमित्युक्त्वा स्मृतेषु वचनेषु १११तमपृष्ठस्थं वचनं सिद्धनाथपादस्यैव, ऋजुविमर्शिनी-अर्थरत्नावली-प्रामाण्यात्। अन्येषां वचनानां स्थानानि नाभिज्ञातानि। अत्र स्मृतौ कुलोदयः क्रमसागरश्चेति द्वौ ग्रन्थौ न कस्यामपि बृहत्सूच्यां विवरणग्रन्थे वा "तान्त्रिक साहित्य" सदृशे धृतौ। यागसार-लघु--चर्चाकुलयोरपि स्थितिस्तथैव। एवमेव रत्नावली-[1]शिवशासनपदाभ्यां कयोर्ग्रन्थयोर्ग्रहणमिति नाधुना वक्तुं शक्यते। सुवर्णत्रिंशिका चाद्यवर्णत्रिंशिकातोऽभिन्नैव स्यात्। [2]आद्यवर्णत्रिंशिकादीनामन्येषामत्रोद्धृतानां ग्रन्थानां परिचयो नित्या० उपो०, लुप्ता० उपो० च प्रदत्त एवेति जिज्ञासुभिस्तत्र तत्रैव द्रष्टव्यम्।

परिशिष्टभागे मूलग्रन्थातिरिक्ता अपि केचन विशिष्टा ग्रन्था उद्धृता दृश्यन्ते। तेष्वष्टचक्रेश्वरो भट्टशिवानन्देन श्रीविद्यार्चनचन्द्रिकायामुद्धृतस्तन्त्रग्रन्थः। अस्य ५६११ संख्याका मातृकोज्जयिनीस्थशोधसंस्थाने समुपलभ्यते। उड्डामराख्यस्योड्डीशतन्त्रस्य रावणविरचितस्य नैकानि संस्करणान्यद्यावधि संजातानि। कुमारीविजयम्, कुम्भसद्ग्रहः, देवराजपद्धतिरित्येतेषां ग्रन्थानां न कापि सूचना कुत्रचिदप्युपलभ्यते। कुलसारसंग्रहाख्यः ३६ पटलात्मकस्तन्त्रग्रन्थो नेपालसूच्यां विवृतः। नेत्रगह्वर इति [3]वर्णगह्वर इति च कयोश्चन ग्रन्थयोर्नामनी, अथवा पारिभाषिकावेतौ शब्दाविति निर्धारणीयमास्ते। नवशती--शास्त्रस्य विवरणं नित्या० उपो० (पृ० ३९-४०) द्रष्टव्यम्। अत्र—"यथोक्तं

---

१. "रत्नावल्यां कथितत्रिखण्डमुद्रया" (पृ. १००) इत्यत्र स्मृता रत्नावली नि० षो० टीकाऽर्थरत्नावलीतोऽभिन्ना स्यात्, तत्र तृतीये पटले त्रिखण्डाख्यमुद्राया व्याकृतत्वात्। नात्र विस्तरेण सा प्रपञ्चितेत्यन्योऽपि रत्नावल्याख्यो ग्रन्थः संभावयितुं शक्यते।

२. अत्रत्यः "अबिन्दुमविसर्गं च" (पृ. ४०, १७८) इत्यादिकः श्लोको विज्ञानभैरवेऽपि (श्लो. ८८) दृश्यते।

३. षट्साहस्रसंहितायाः पञ्चपटलात्मकसंस्करणस्य परिशिष्टभागे तत्सम्पादकेन डॉ० जे. ए. सोत्रामनमहोदयेन मुकुन्दराजविरचितसंवर्तार्थप्रकाशग्रन्थसाहाय्येन चतुर्दशविधप्रस्ताराणां गह्वराणां च सचित्रं विवरणमुपस्थापितम्। तत्र वर्तते वर्णगह्वरोऽप्येकः प्रकारः। तदेतस्माद् वर्णगह्वरादेव पद्म-खड्ग-मुरज-चक्र-गोमूत्रिकादिबन्धानामलङ्कारशास्त्रेषु शब्दालङ्कारप्रकरणे निबद्धानां किमु प्रसूतिरभूत्?

सिद्धनाथेन नवशत्याम्" (पृ. १८५) इति वचनेन सिद्धनाथरचितोऽयं ग्रन्थ इति स्पष्टीभवति। लपटकं (लम्पाकं) स्वरभैरवं चेति द्वौ ग्रन्थौ स्वरशास्त्रीयाविति 'आफ्रेख्ट'-सूच्यां निर्दिष्टौ। शाबरतन्त्रमिति नाम्ना च लोकभाषानिबद्धा मन्त्र-शास्त्रग्रन्थाः परिचीयन्ते, "भाषासाधनमुत्तमम्" (४.११.९३) इति हि शक्तिसंगम-तन्त्रे शाबरप्रकरणे दृश्यते।

इतो भिन्नानामपि लुप्ता० उपो० (पृ. ११ इत्यत्र) त्रिपुरातन्त्रत्वेन धृताना--मशेषकुलवल्लरीप्रभृतीनां ग्रन्थानां परिचयो लुप्ता० उपो०, नित्या० उपो० च वर्णा-नुक्रमेण स्थापितो द्रष्टव्यः। इयांस्तु विशेषः — आलोकमाला बौद्धसिद्धेन कम्बलपादेन रचिता साम्प्रतं मुद्रिता वर्तते। उत्तरषट्कम् (उत्तरपदम्) अपि सव्याख्यमधुनैव मुद्रितम्। नवनित्यातन्त्राणां नामानि मनोरमा (तन्त्रराजव्याख्या) प्रामाण्येन लुप्ता० उपो० (पृ. ४३) धृतानि सन्ति। नागभट्टस्त्रिपुरासारसमुच्चय-कर्ता कविहस्तिमल्लनाम्नाऽपि प्रसिद्ध आसीदिति, ग्रन्थश्चायं मुद्रित इति च नित्या० उपो० (पृ० ४०), "आगम और तन्त्रशास्त्र" इत्यत्र संगृहीते "योगी अमृ-तानन्द" इति शीर्षके निबन्धे (पृ. ८४-८६) च सूचितमेव। भुवनेश्वरीकल्प इति च प्रपञ्चसारस्थदशमपटलस्य नाम, भोजदेवकृततत्त्वप्रकाशस्य तात्पर्यदीपिका-टीकायां कुमारकृतायां (पृ. ९) तन्नाम्ना स्मृतस्य "बोधस्वरूपवाची" (१०.३) इति वचनस्य तत्रोपलब्धेः। महाज्ञानार्णवो योगिनीहृदये (२.७७) स्मृतः प्राचीनो ग्रन्थः। साम्प्रतं मुद्रितो ज्ञानार्णवस्तु शिवानन्द-विद्यानन्द-अमृतानन्दादिभिर्न क्वापि स्मृतः। सिद्धान्तदीपिका सर्वात्मशम्भुना रचिता साम्प्रतं सिद्धान्तप्रका-शिकानाम्ना काशीजंगमवाडीमठस्थितशैवभारतीशोधप्रतिष्ठानतः प्रकाशिता, तंजोरसरस्वतीमहलपुस्तकालयशोधपत्रिकायामपि ग्रन्थोऽयं प्रकाशितो वर्तते। सिद्धान्तसारावल्या अपि सटीकायाः प्रकाशनं मद्रासराजकीयपुस्तकालयशोध-पत्रिकायां विभिन्नेष्वङ्केषु समजायत।

श्रीकुल(त्रिपुरासम्प्रदाय)साहित्यविषये डॉ. तूनगान्द्रियानमहोदयेन स्वकीये ग्रन्थे प्रोक्तमेव। अत्रास्मदीयो योगिनीहृदयदीपिकाया हिन्दीभाषामय उपोद्घातोऽपि द्रष्टुं शक्यते (पृ. ६-१३)। त्रिपुरार्णवविषयेऽत्रोक्तमेव। शङ्करा-नन्दनाथस्य सुन्दरीमहोदयः सम्पूर्णानन्दसंस्कृतविश्वविद्यालयतोऽधुनैव प्रका-

शितः। डॉ. आन्द्रे-पादुमहोदयेन नेपाल-जर्मनयोजनायां छायाचित्रीकृतेषु ग्रन्थेषु त्रिपुरासम्प्रदायीयानां द्विशताधिकानां ग्रन्थानां प्रथमपृष्ठच्छायाचित्राणि संप्रेष्य, यत्र तेषां परिचय उट्टङ्कितो वर्तते, अनुगृहीता वयम्। सरस्वतीभवनस्थानां ललितार्चनचन्द्रिका-सौभाग्यरत्नाकरसदृशानां त्रिपुरार्चासंबद्धानां पद्धतीनां विवरणान्यस्मत्सविधे वर्तन्ते, सन्ति च भूयांसः पद्धत्यादिग्रन्था बड़ोदा-मद्रास-त्रिवेन्द्रम्-जोधपुरस्थितेषु शोधसंस्थानेषु। तेषु च केचन डॉ. तूनगान्द्रियानग्रन्थे, "तान्त्रिक साहित्य" इत्याख्ये विवरणग्रन्थे च समुपन्यस्ताः, अन्ये चाधुनापि स्वपरिचयदानाय कमपि मेधाविनं शोधनिरतं विद्वांसं प्रतीक्षन्ते। अतीव विशालो वर्तते भगवत्या त्रिपुरसुन्दर्या संबद्धं वाङ्मयम्। एवमेव भगवतीनां काली-तारा-भुवनेश्वरीप्रभृतीनामान्तरबाह्यवरिवस्याप्रतिपादकेन वाङ्मयेनापि न वयमतीव परिचिताः स्मः। अवसरप्राप्तमपि तन्नाधुना विव्रियते। प्रवर्तन्तां नाम केचन शोधनिरता विद्वांसोऽत्रेति वयं भगवन्तं ज्ञानगुरुं श्रीकाशीविश्वेश्वरं प्रार्थयामहे।

## आभाराभिव्यक्तिः

सव्याख्यस्योत्तरषट्कस्य ज्ञानदीपविमर्शिन्याश्च मातृकाः, प्रतिलिपयः, छायाचित्राणि वाऽस्माभिः संगृहीतान्यासन्। किन्तु ग्रन्थद्वयस्यास्य सम्पादनं प्रकाशनं च सम्पूर्णानन्दसंस्कृतविश्वविद्यालये सांख्ययोगतन्त्रागमविभागे प्राध्यापकस्य डॉ. शीतलाप्रसाद-उपाध्यायस्य परिश्रमेणैवाभूत्, भवति च। पाठभेदादीनां परिशिष्टादीनां च संयोजनेऽनेन महानायासोऽङ्गीकृत इति तस्य सर्वविधोदर्काय भवानीजानिर्ज्ञानगुरुर्भगवान् विश्वेश्वरः प्रार्थ्यते। तत्र सव्याख्यमुत्तरषट्कं पूर्वतनकुलपतिपद्मश्रीविरुदालङ्कृत-प्रो. वि. वेङ्कटाचलम्-महोदयस्य शिवसङ्कल्पेन सह १९९४ ई. वर्षे सम्पूर्णानन्दसंस्कृतविश्वविद्यालययोगतन्त्र--ग्रन्थमालायां प्रकाशितमभूत्, भवति चाधुना ज्ञानदीपविमर्शिन्याः पूर्वतनकुल--पतिपद्मश्रीविरुदालङ्कृतेन प्रो. विद्यानिवासमिश्रमहोदयेन सम्पूर्णानन्दसंस्कृत-विश्वविद्यालयतः प्रकाशनार्थमङ्गीकृताया वर्तमानकुलपति-डॉ० मण्डनमिश्र-महोदयस्य प्रस्तावनया सह प्रकाशनम्। येषां महानुभावानां साहाय्येन सहयोगेन च ग्रन्थद्वयस्य मातृकाः प्रतिलिपयश्छायाचित्राणि वाऽधिगतानि, तेषां

सर्वेषामुल्लेखस्तत्र तत्र कृतोऽस्माभिः। सर्व एते महानुभावास्तस्यास्तस्याः शोधसंस्थाया अधिकारिणश्च, तेषां सर्वेषामाभारः सादरमत्र स्वीक्रियते। उदयपुर (ग.)- मातृकाविशिष्टपाठानां प्रतिलिपिकरणे श्रीहरिहरदत्तदीक्षितः, नेपालनेवारीलिपि- (ङ.)मातृकातः पाठसंकलने च श्रीविजयवज्राचार्यः साहाय्यमाचरितवान्। अस्याः संस्थायाः प्रकाशनाधिकारी श्रीमान् डॉ. हरिश्चन्द्रमणि--त्रिपाठी तत्सहयोगिनश्च श्रीहरिवंशपाण्डेयादयः प्रकाशनकर्मणि मनोयोगेन संलग्नाः सन्ति। एवमेव तारायन्त्रालयस्य स्वामी श्रीमान् रमाशंकर-पंड्या तत्सहयोगिनश्च मुद्रणकर्मणि सम्यक् प्रवृत्ताः सन्तीति सर्व एते धन्यवादशतैः सभाज्यन्ते॥

विदुषां वशंवदः

**व्रजवल्लभद्विवेदः**

गुरुपूर्णिमा, संवत् २०५३
जंगमवाड़ीमठः, वाराणसी।

# विषय-सूची

## प्रथमं परिशिष्टम्



## द्वितीयं परिशिष्टम्



## तृतीयं परिशिष्टम्



## चतुर्थं परिशिष्टम्



## पञ्चमं परिशिष्टम्



## षष्ठं परिशिष्टम्

## सप्तमं परिशिष्टम्



## अष्टमं परिशिष्टम्



## अनुक्रमण्यः



■

[ॐ] [1]नमो भगवते वासुदेवाय

# गुरुध्यानपद्धतिः

स्वप्रकाशविमर्शाख्यां[2] बीजाङ्कुरलतां पराम् ।
शृङ्गाटपीठनिलयां वन्दे त्रिपुरसुन्दरीम् ॥

विमर्शैकरसा[3]सारामाद्यबीजस्य[4] गर्भगाम् ।
कलां सप्तदशीं वन्दे त्रिपुरां[5] त्रिपुरातनीम् ॥

त्रित्रिभेदत्रिनिलयां बिन्दुस्फुटनसंभवाम् ।
हकारार्धकलां वन्दे पूर्णां त्रिपुरसुन्दरीम् ॥

पूर्णादिप्रथमान्तां[6] यां त्रिपञ्चतिथिगामिनीम् ।
तां कलारूपिणीं नित्यां वन्दे कालापहारिणीम् ॥

दग्ध्वा पाशाटवीं सर्वां[7] शार्वं[8] धाम समर्पयेत् ।
यदाज्ञा तानहं[9] वन्दे गुरून् कारुण्यवारिधीन् ॥

निहत्य विघ्नसंघातमिष्टमाशु तनोति यः ।
तमहं शाम्भवीसूनुं वन्दे[10] तं गणनायकम् ॥

द्वैताद्वैतमहामोहविघ्नसंघातमर्दिनीम् ।
गणनाथमयीं वन्दे प्रतिभां पारमेश्वरीम् ॥

---

१. हरिः। श्रीगणपतये नमः। अविघ्नमस्तु–ख., श्रीगणेशाय नमः–ग., ॐ श्रीगुरुभ्यो नमः–घ.ङ.। २. ख्य–ख.ग.। ३. रसां–ख.ग.। ४. स–ग.। ५. रा–क.। ६. न्ताग्रां–कटि., न्तं या–ख.घ.ङ, न्ता–ग.। ७. सर्वं–क, सर्वा–घ.। ८. र्थ–क.। ९. 'तामहम्' इत्यशुद्धः पाठः–क.। १०. न्देऽहं–ख.ग.घ.ङ.।

अपरां चित्क्रियारूपामानन्दभरनिर्भराम् ।
बटुकाख्यामहं वन्दे ह्याम्बिकेयीं कलां पराम्[१] ॥
[२]रसवेदमया देव्यो रथाङ्गनिलयाः[३] सदा ।
स्वसंविद्विप्रुषो[४] नौमि योगिनीः कालमोचिकाः ॥
शिवाद्यवनिपर्यन्तं क्षेत्रं [५]सत्पालयत्यलम् ।
क्षेत्रपालमयीं वन्दे प्रतिभां [६]शाम्भवीमजाम् ॥
श्रीवामकेश्वराम्नायमुन्नीयागमसागरात् ।
प्रपन्नजनताबोध[७]ध्वान्तविच्छेदभानुना ॥
क्रियते पद्धतिः सम्यग् [८]विद्यानन्देन धीमता ।
[९]नित्यं नैमित्तिकं यत्र काम्यं दीक्षा बुधोत्तमैः ॥
[१०]सम्यक् संज्ञायते साधु लोपामुद्रामतस्थितैः ।
सद्भिः [११]संसेवनीयेयं ज्ञानदीपविमर्शिनी[१२] ॥

**[[१३]इति नमस्कारपद्धतिः]**

ब्राह्मे मुहूर्ते [शयनतल्पाद्] उत्थाय स्वशिरसि श्वेतसहस्रारव्योमाम्बुजोदरगत[रक्तबिम्बं सञ्चिन्त्य तन्मध्ये]पूर्णेन्दुबिम्बमध्ये शुद्धस्फटिकसंकाशं श्वेतवस्त्र[परिधानं] गन्धानुलेपनं वरदाभयपाणिनं[१४] द्विनेत्रं कारुण्यावलोकिनं[१५] वामोरुगतया रक्तशक्त्या वामेनोत्पलधारिण्या दक्षिणेन पाणिनाऽऽलिङ्गितं परमानन्द-

१. परां कलाम्–ख.। २. वेदतर्कमयीं देवीं–ग. घ. ङ.। ३. यां–ग.। ४. प्लुषो–क., प्नुषो–घ., रुषो–ङ.। ५. यत्–ख.ग.। ६. पारमेश्वरीम्–ग.। ७. बोधभ्रा–ख., दुःख–घ.ङ.। ८. स्वात्मानन्देन–ख.। ९. नित्यनैमित्तिकं यत्र काम्यदीक्षादिकं बुधैः–ख.। १०. सुष्ठु–क., सुस्पष्टं–ख.ग.। ११. संवेदिनी–क.। १२. र्षिणी–घ., षिणीम्–ङ.। १३. नास्ति–ख.ग.घ.ङ.। १४. णिं–ख.। १५. लोकनं–ग.।

नन्दितं [१]मन्दस्मितेन युतं निजगुरुं[२] ध्यात्वा [ह्रीं श्रीं] अमुकानन्दनाथ [पादं ह्रीं श्रीं] अमुकशक्तिर्[३]युक्तपादुकां पूजयामीति मानसैर्गन्धाक्षतकुसुमैर्बाह्यैर्वा यथा[४]सामर्थ्यमभ्यर्च्य[५] नीराजनादिताम्बूलान्तानुपचारान् [६]दत्त्वा नित्यकर्मानुष्ठानार्थमनुज्ञां गृहीत्वा श्रीगुरुं स्वस्थाने विसर्ज्य[७] तां दिशं [प्रति] पञ्चाङ्गेन[1] नमस्कुर्यात्[८] ।

॥ इति श्री[९]विद्यानन्द[नाथ] विरचितायां [श्रीमत्] त्रिपुरसुन्दरीपद्धत्यां ज्ञानदीपविमर्शिन्[१०]यां गुरुध्यानपद्धतिः प्रथमा ॥

■

१. सदा–ग. । २. देशिकं–ख., रूपं–घ. ङ. । ३. नास्ति–ग., युक्तनाथ–ख., युक्तश्री–घ. ङ. । ४. सम्भव–ग. । ५. र्थनं–क. । ६. विधाय–ख. । ७. विसृज्य–क. ख. घ. ङ. । ८. नमस्कारं कुर्यात्–ग. । ९. 'विद्या .... र्शिन्यां' नास्ति–ख. । १०. र्षिण्यां–घ. ङ. ।

1. *ग्रथिताङ्गुष्ठकौ कृत्वा करौ सक्ताग्रतर्जनी ।*
*जानुभ्यामवनिं गत्वा पञ्चाङ्गं प्रणमेद् गुरुम् ॥ (७.६९)*
*इत्येवं पञ्चाङ्गनमस्कारप्रकारः कुलार्णवे दृश्यते ।*

# मन्त्रध्यानपद्धतिः

अथ [रहःस्थले] ह्रीं श्रीं[१] आधारशक्तिकमलासनाय नम इति स्वासनं मृदु श्लक्ष्णं [२]हृद्यरक्तोत्तराम्बर[च्छद]मभ्यर्च्य स्वासने सुपूजिते समुपविश्य रेचक-पूरककुम्भकक्रमेण प्राणायामत्रयं [३]विदध्यात् । तद्यथा—दक्षिणनासाग्रे त्रिकोणं सविसर्गं [४]ह्रूं ह्रूं बीजसहितं ज्वलदग्निप्रभं[५] ध्यात्वा वामनासाग्रे [६]स्वबीजोपेतं वर्तुलं चन्द्रमण्डलं संचिन्त्य वामया प्राणमापूर्य दक्षिणयाऽग्निमण्डले [वि]रेचयेत् । पुनर्दक्षिणया[७] समापूर्य वामया सोममण्डले [वि]रेचयेत् । इत्थं बहुशः कृत्वा तेन विशुद्धनाडिको[८] मध्यपथं प्रविश्य[९] [१०]कुम्भकमभ्यसेत् । तद्यथा—आधारहृदय-भ्रूमध्येषु वह्निसूर्यसोममण्डलानि दशद्वादशषोडशकलानि परिभाव्य तेषु [मूल]वाग्भवकामराजशक्तिबीजानि [११]वह्न्यर्कशशिनिभानि परस्परसंसक्तनाद-शिखानि ब्रह्मरन्ध्रान्तं[१२] परिभाव्य [१३]अकुलामृतरूपेण पूरेण तत्तदाधा[१४]र-तत्तद्धातु-तत्तद्वर्ण-तत्तदधिपतीनाप्लावयेत् । [ते च मूलाधारस्वाधिष्ठानमणिपूरानाहत-विशुद्धाज्ञाख्याः], [1]त्वगसृङ्मांसमेदोऽस्थि[रक्त ?]मज्जाशुक्राख्या धातवः, वादिसाङ्कितं चतुर्दलपद्मं मूलाधारम्, बादिलाङ्कितं षड्दलं स्वाधिष्ठानम्, डादि-फाङ्कितं दशदलं मणिपूरकम्, कादिठाङ्कितं भानुदलमनाहतम्, आदिविसर्गाङ्कितं षोडशदलं विशुद्धम्, हक्षाङ्कितं द्विदलपद्ममाज्ञाख्यम्, ब्रह्मविष्णुरुद्रेश्वरसदाशिव-शक्त्याख्याधिपतयः प्रत्यङ्गकं पीतरक्तश्यामधूम्रशुक्ला(त्मि ? त्म)का ध्येया[ः] ।

---

१. 'ह्रीं श्रीं' नास्ति– ग., ॐ– घ.ङ. । २. हृद्यं– ख., हृद्या– ग. । ३. कुर्यात्– ख.घ.ङ. । ४. हृ– ख., ह्रूं– ग., हर– घ.ङ. । ५. रूपं– ख.घ.ङ. । ६. क्ष्वमिति– ख., वमिति– ग. । ७. यापूर्य– ख., नासया प्राणमा– ग. । ८. नाडीकः कुम्भकं– ख., डिका– ग. । ९. श्याभ्यसेत्– ख. । १०. योगेन मन्त्रध्यान– ग. । ११. तटिदलक्तकशशि– ख. । १२. न्ध्रगतसह-स्रान्तं– ग. । १३. कुलामृतापूरेण– ख.ग.घ.ङ. । १४. तत्तच्चातु– क., दाभा– ख. ।

---

1. *"त्वगसृङ्मांसमेदोऽस्थिमज्जाशुक्राणि धातवः" (प्र. सा. २.१६)।*

ततो मातृकान्यासं बीजद्वयसहितं विधाय मूलविद्याङ्गानि कराग्रेषु[१] विन्यस्याभ्यन्तरे कामकला[२]रूपपरापरकुण्डलिनीद्वयं[३] संपुटीकृत्य[४] पुनस्तया चतुर्थस्वररूपिण्या मुखस्तनयोनिसर्वाङ्गकल्पनं[५] कृत्वा देवीरूपमात्मानं परिभाव्य गमागमेन मूलविद्यां यथाशक्ति मानसेन विधिना जपित्वा बहिर्निर्गत्याऽऽवश्यकादिकं[६] निर्वर्त्य[७] कृतशौचाचमनदन्तधावनमुखप्रक्षालनः स्नानं कुर्यात् ।

॥ इति [[८]श्रीविद्यानन्दनाथविरचितायां ज्ञानदीपविमर्शिन्यां]
मन्त्रध्यानपद्धतिर्द्वितीया ॥

■

१. ङ्गेषु– ख., ङ्गुलिषु– घ. ङ. । २. रूपिणीं– ख., रूपं– ग. घ. ङ. । ३. लीद्वयं– ख. । ४. संपुट्य– ख. । ५. सर्वाङ्गानि कवचीकृत्य– ग. । ६. दि कर्म– ख. । ७. निर्वृत्य– ग. । ८. 'श्रीविद्या .... र्शिन्यां' नास्ति– क. ख. ।

# स्नानपद्धतिः

स्नानं तु द्विविधम्[१]—जलस्नानमान्तरस्नानमिति[२]। तत्र जलस्नानं क्रियानुवर्तिनां साधकसामयिकपुत्रकाचार्याणाम्[३]। योगिनां[४] त्वान्तरमेव स्नानं प्रशस्तम्। तत्रादौ जलस्नानं लिख्यते। यथा—सुगन्धामलकोदकादिना यथाविधि मलशोधनस्नानं[५] निर्वर्त्य मन्त्रस्नानं कुर्यात्[1]। [६]ल व र य हाक्षराणि सबिन्दुकानि कृत्वा अस्त्रपरिशोधितवारिधानीजलं[७] दक्षिणहस्ते[८] गृहीत्वा भूतपञ्चकबीजैः सप्तधाऽभि[९]मन्त्र्य मूलमन्त्रेण वामाङ्गुलीच्छटायोगात् त्रिधा मस्तकसेकान्मन्त्रस्नानं[१०] निर्वर्त्यावशिष्टं [जलं] वामनासाविवरेण प्रवेश्यान्तःकुम्भितनिखिलकल्मषप्रक्षालनेन कृष्णरूपं पिङ्गलया विरेच्यास्त्रमन्त्रेण वज्रशिलायां ताडयेत्।

अथ योगिनामान्तरस्नानं लिख्यते। यथा—शृङ्गाटनिलयां[११] कुलशक्तिमुत्थाप्य अकुलशृङ्गाटोदरगतपरबिन्दुं निर्भिद्य परिस्रुतपरमामृतमय्या[१२] सुधाधारयाऽविच्छिन्नरूपया[१३] मूलशृङ्गाटगर्भं परिपूर्य तयोः [१४]सामरस्यनद्यां निमग्नस्तिष्ठेत्। तदुक्तम् **उदयाकरपद्धत्याम्**—

---

१. 'बाह्याभ्यन्तरभेदेन' इत्यधिकः पाठः—ग.घ.ङ.। २. मन्त्र—ग.घ.ङ.। ३. काचार्यादीनाम्—ख.। ४. नामा—ग.। ५. कुर्यात्—ग.। ६. लां वां रां यां हां अक्ष—ग.। ७. समानीय—ग.। ८. हस्तेन—घ.ङ.। ९. सप्तत्वा—क., सप्तवार—ग.। १०. काभिषेकान्—ग.। ११. यामधः—ग.। १२. 'मय्या' इति नास्ति—ग.। १३. यानव—ग.। १४. समरस—ख.ग.घ.।

---

*1. 'कुर्यात् .... ताडयेत्' इत्यस्य स्थाने ख. पाठ एवं वर्तते—तद्यथा, कृतसकलीकरणस्तीर्थजलमङ्कुशमुद्रया हृन्मन्त्रेण सवितृमण्डलादाकृष्य जलान्तर्निमज्य मूलमन्त्रमेकविंशतिवारमावर्त्योत्थायात्मानं मूलमन्त्रेण कलशमुद्रया सप्तधाऽभिषिच्य तीरमागत्य वाससी परिधायाचम्य सकलीकृत्य तत्त्वत्रयमन्त्रैः स्वधान्तैस्त्रिः पीत्वाचम्य वामाऽङ्गुलिच्छटायोगेनास्त्रशोधिततीर्थजलं दक्षहस्तेन गृहीत्वा लं वं रं यं हं इति भूतबीजैः सप्तधाभिमन्त्र्य मूलविद्यया वामाङ्गुलिभिस्त्रिः शिरसि सम्प्रोक्ष्य शिष्टं ज्योतीरूपमिडयाकृष्यान्तः कुम्भितनिखिलकिल्बिषप्रक्षालनेन कृष्णरूपं पिङ्गलया विरेच्यास्त्रमन्त्रेण वामभागे वज्रशिलायां संताड्य मूलमन्त्रसप्ताभिमन्त्रितजलं ज्योतीरूपं पीत्वाचमनं कुर्यात्।*

वाडवाख्यपदप्रोत्था वाडवी वाडवाध्वगा ।
संप्राप्य वाडवं धाम प्रलीना शाम्भवे पदे ॥

तयोर्द्वयोः समायोगा[1]ल्लभते शाश्वतं पदम् ।
तत्र मग्नस्तु यः स्नायात् स मुक्तो भवबन्धनात् ॥ [2]इति ।

अस्यार्थः[3]—**वाडवं** संवर्तकरूपमूर्ध्वाग्रत्रिकोणं [4]वह्निरूपम्, तदिह संसार-समु[5]द्रमध्यवर्तित्वादितरवाडवाग्निवद् वाडवमुच्यते । तदेव पदम्, पद्यत इति । तस्मादुत्था[6]य । हार्धकलारूपिणी [कुल]कुण्डलिनी त्वकुलपदं यान्ती सा **वाडवी**त्युच्यते । वाडवानलसम्बद्धा[7] वाडवी **वाडवाध्वगा** । [8]वाडवः संहारक्रमः, तद्गता, संहार[9]क्रमगतेति भावः । **वाडवम्** अकुलशृङ्गाटम् [10]अग्निरूपं कुल-कलापजल[11]ग्रसिष्णु, तदेव **धाम**, परमप्रकाशाख्या[12]ऽवर्णशिवरूपत्वात् । **प्रलीना** प्रकर्षेण लीना सामरस्यपदं[13] याता, बीजभावं [14]गता वा । **शाम्भवे पदे** चन्द्र-सूर्यात्मकबिन्दुद्वयसामरस्यं यान्ती तार्तीयबिन्दुमहावह्निभावं गतेति भावः । **तयो-र्द्वयो**रिति । तयोः शक्तिशिवयोः कुलाकुलयोः **समायोगात्** सामरस्यात् **शाश्वतं पदं** प्रकाशविमर्शैक्यभावं **लभते** प्राप्नोति । **तत्र मग्नः** स्वयमपि [15]तत्समरसहृदि[16] मग्नो मनोलयं कुर्यात् । **स मुक्तो भवबन्धना**दिति । य एवं[17] शिवशक्तिसामरस्यमनव-रतमनुभवति, स संसारसमुद्राद्[18] [19]वाडवानलप्रभावाद् मुक्तो भवतीति भावः । **पुनस्तत्रैवोक्तम्**—

---

१. द्वहते–ख. । २. नास्ति–ख. ग. । ३. अस्यायमर्थः–ख. घ. ङ. । ४. नास्ति–ग. । ५. नास्ति–ग. । ६. प्य ....पिणीं ....लिनीं–क. । ७. न्धात्–क. ख. । ८. 'वाडवः संहारक्रमः, तद्गता' नास्ति–क. ग. घ. ङ. । ९. चक्रमध्यगति–घ. ङ. । १०. वह्नि–ग. । ११. 'जल' **नास्ति–ख.** ग. । **१२. द्य–** ख. । १३. रूपं ग. । १४. याता–ख. । १५. तद्रसे समरसीभूतः **स्नायात्–**ख. । **१६. समरसहृदये** मनोलयं–ख., तत्सरसि मग्नो लयं–ग. । १७. एवमनवरतं शक्तिशिवसामरस्यमनुभवति–ख. घ. ङ., सामरस्यमनुत्तरमनुभवति–ग. । १८. द्र–ख. । १९. वडवानलात्–ग. ।

स्नात्वा[1] तु विमले तीर्थे पुष्करे हृदयाश्रिते[2] ।
बिन्दुतीर्थेऽथवा स्नायात् पुनर्जन्म न विद्यते ॥

इडासुषुम्ने शिवतीर्थकेऽस्मिन्[3] ज्ञानाम्बुपूर्णे वहतः शरीरे ।
ब्रह्माम्बुभिः स्नाति तयोः सदा यः किं तस्य गाङ्गैरपि पौष्करैर्वा[4] ॥

[5]स्थूलं जलादिना बाह्यं सूक्ष्ममन्यच्च मानसम् ।
वरं शाक्तं स्वसंवित्त्या कृत्वा स्नानमिति त्रिधा ॥

स्वसंवित्तिसिन्धुमत्तीर्थे योगिप्रवरसेविते ।
परमानन्दकल्लोललहरीभरसंकुले ॥
घोरसंसारसंतापहारके भवतारके ।
स्नात्वाऽनन्यमना योगी पूतात्मा तत्क्षणाद्भवेत् ॥

इति निर्वर्तितस्नानः पूतात्मा धौतकिल्बिषः ।
स्वप्रबोधैकव्[6]सनः सन्ध्यां वन्दे[द्] यथाविधि ॥

**॥ इति [[7]श्रीविद्यानन्दनाथविरचितायां ज्ञानदीपविमर्शिन्यां श्रीत्रिपुरसुन्दरीपद्धत्यां] स्नानपद्धतिस्तृतीया ॥**

■

---

१. यात्तु–ख.। २. श्रये–घ.ङ.। ३. र्थे य–क., र्थगे––ग.घ.ङ.। ४. पुष्करैर्वा–क.। ५. 'स्थूलं .... यथाविधि' नास्ति–ख.ग.घ.ङ.। ६. 'मना'–कटि.। ७. 'श्रीविद्यानन्द .... सुन्दरीपद्धत्यां' नास्ति–क.ख.।

# सन्ध्यावन्दनपद्धतिः

सन्ध्या च द्विविधा[1] बाह्याभ्यन्तरभेदेन । तत्र बाह्या कर्मयोगिनाम् । सा चतुर्धा लिख्यते । तद्यथा— [2]वंसाब्जे [3]मूलवाग्भवं तडिद्वर्णं ध्यात्वा वहत्पुटेनाकाशस्थाग्निमण्डले पातयित्वा [4]तदुत्थां तडित्प्रभां पुस्तकाक्षमालाधारिणीं त्रिनेत्रां पीतालङ्कारवसनां बालारूपिणीं ध्यात्वा मूलवाग्भवमुच्चार्य त्रिपुरावागीश्वरीं [5]पूजयामीति त्रिधा संपूज्य[6] त्रिधार्घम[7]ञ्जलिनोत्क्षिप्य वाग्भवीं[8] देवीगायत्रीं जपेत् । तद्यथा—ह्रीं श्रीं [श्री] त्रिपुरादेवि विद्महे वाग्भ[9]वीश्वरि धीमहि । तन्नो[10] मुक्तिः प्रचोदयात् ॥

इति प्रातःसन्ध्या[11]ऽदृष्टसूर्योदयस्य[12] ।

अथ मध्याह्नसमये [13]कठाब्जे मूलकामराजमतिरक्तवर्णं ध्यात्वा वहत्पुटेनाकाशस्थसूर्यमण्डले समावाह्य तदुद्भवां रक्तवर्णां पाशाङ्कुशवरदाभय[14]धारिणीं त्रिनेत्रां यौवनोद्धटां[15] संचिन्त्य मूलकामराजमुच्चार्य [ह्रीं श्रीं श्री] त्रिपुराकामेश्वरीं [कामेश्वरीश्रीपादुकां] पूजयामीति त्रिधा संपूज्य[16] त्रिधा चा[17]र्घमुत्क्षिप्य कामेशी[18] गायत्रीं जपेत् । तद्यथा—ह्रीं श्रीं [श्री] त्रिपुरादेवि विद्महे [19]कामिनीश्वरि धीमहि । तन्नः क्लिन्ना प्रचोदयात् ॥ [इति मध्याह्नसन्ध्या] ।

१. द्विधा—ख. । २. वर्णान्ते—क., 'वादिसान्ते मूलाधारचक्रे' इति टिप्पणीरूपेण दृश्यते—ग. । ३. कुलवाग्भवं—ख. । ४. तदुद्भवां—ख. ग. घ. ङ. । ५. इतः परम् 'श्रीपादुकां'—ख.ग. । ६. समभ्यर्च्य—ख, इतः परम् 'चतुर्थी नमोऽन्तं'—ग. । ७. मञ्जलीनुत्क्षिप्य—क., मञ्जलित्रयं निक्षिप्य—ग. । ८. वाग्भवगायत्रीं—ख.ग. । ९. ग्भवे—ख. ग. । १०. तन्नः शक्तिः—ग. । ११. त्वदृष्ट—ख. घ. ङ. । १२. सूर्योपास्या—ख., सूर्यमुपासीत—ग., सूर्योदयोपास्या—घ.ङ. । १३. कण्ठाब्जे—क., 'कादिठान्ते द्वादशदलेऽनाहते' इति टिप्पणीरूपेण दृश्यते—ग. । १४. हस्तां—घ.ड. । १५. नोद्भिन्नां—ग. । १६. इतः परम् 'चतुर्थी नमोऽन्तं'—ग. । १७. र्घ्यमञ्जलित्रयं निक्षिप्य—ग., र्घ्यमञ्जलिं निक्षिप्य—घ. ङ. । १८. श्वरी—ख., शीदेवीं—ग. । १९. मेश्वरि—ख., मेशीश्वरि—ग. ।

अथ सायन्तनसमयेऽदृष्टसूर्यां[१] सन्ध्यामुपासीत । तद्यथा—हक्षाब्जे[२] शुद्ध-स्फटिकसंकाशं मूलान्त्यबीजं[३] संचिन्त्य वहत्पुटेनाकाशस्थसोममण्डले समावाह्य तदुद्भवां श्वेतवर्णां जटाजूटधरां[४] त्रिनेत्रां पाशाङ्कुशपुस्तकाक्षमालाधारिणी-[५]मीषत्स्फुटितदंष्ट्राङ्कुरां[६][७] [८]भैरवीरूपां ध्यात्वा मूलान्त्यबीजमुच्चार्य[९] [ह्रीं श्रीं श्री]त्रिपुरामृतेश्वरी[श्री]पादुकां पूजयामीति त्रिधा संपूज्य[१०] त्रिधा चार्घ्यमुत्क्षिप्य[११] शाक्तीं गायत्रीं जपेत् । तद्यथा— [ह्रीं श्रीं श्री]त्रिपुरादेवि विद्महे स्वशक्तीश्वरि धीमहि । तन्नोऽमृते प्रचोदयात् ॥ [**इति सायंसन्ध्या**] ।

अथार्धरात्रसमये सहस्राब्जतुर्यबीजं[१२] पद्मरागनिभं[१३] ध्यात्वा वहत्पुटेन पर-माकाशे समावाह्य तदुद्भवां [पद्मरागवर्णां चतुर्भुजां] शाक्तेशीं पाशाङ्कुशचाप-बाणधारिणीं ध्यात्वा [१४]तुर्यबीजमुच्चार्य [ह्रीं श्रीं] श्रीत्रिपुरसुन्दरीं [श्रीपादुकां] पूजयामीति त्रिधा संपूज्य[१५] त्रिधा [१६]चार्घ्यमुत्क्षिप्य चतुर्थीं गायत्रीं जपेत् । तद्यथा—[ह्रीं श्रीं] श्रीत्रिपुरसुन्दरि विद्महे कामिनीश्वरि धीमहि । [१७]तन्नः शक्तिः प्रचोदयात् ॥ **इत्यर्धरात्रसन्ध्या** ।

[चतसृणामपि सन्ध्यानां स्वे स्वे स्थाने देवीहृदये लयं कुर्यात् ।]

अथ योगिनामाभ्यन्तरसन्ध्या[१८] लिख्यते । तद्यथा[१९]—तत्र[२०] प्रातःसन्ध्या वाग्भवबीजरूपिणी मृणाल[तन्तु]सूत्राभा पीतप्रभा[२१] कुण्डलिनीशक्तिः कुलाकुल-समरसभावेन[२२] सन्धयन्ती[२३] ध्येया । एषा वै[२४] योगिनां प्रातःसन्ध्या । तथा[२५] मध्याह्न-समयेऽप्यरुणवर्णां[२६] तन्तुनिभां कामराजबीजरूपिणीं[२७] मूलादिब्रह्मरन्ध्रान्तं

---

१.सूर्य–क.। २.हस्ताब्जे–क.। ३.लतृतीय–ख.। ४.टाङ्कुरां–क.। ५.स्रग्–ख.। ६.रित–ख.ग.घ.ङ.।७.ङ्कुशं–ख.।८.भैरवं–ख.।९.लतृतीय–ख.।१०.इतःपरम् 'चतुर्थी नमोऽन्तं'–ग.।११.र्घ्यं दत्वा–ख.,र्घ्यमञ्जलित्रयं निक्षिप्य शक्ति–ग.।१२.स्राक्षतुर्य–क., स्राराब्जे तुरीय–ख.,स्राब्जे तुरीय–ग.।१३.प्रभं–ग.।१४.तुरीय–ख.ग.।१५.इतः परम् 'चतुर्थी नमोऽन्तं'–ग.।१६.र्घ्यमञ्जलित्रयं निक्षिप्य–ग.।१७.तन्नः क्लिन्नः–ख.ग.घ.ङ.। १८.न्तरी–ख.,न्तर–ग.घ.ङ.। १९.'तद्यथा' नास्ति–ख.घ.ङ.। २०.'तत्र' नास्ति–ग.। २१.वर्णा–ख.,श्वेतप्रभा–ग.। २२.रसी–ख.। २३.सन्दधाना–घ.ङ.। २४.एव–ग.। २५.अथ–घ.ङ.।२६.'ऽप्यरुण....निभां' नास्ति–ख.।२७.मूल–ग.।

ब्रह्मरन्ध्रादिमूलान्तमनुसन्दध्यात्[1]। तथा सायाह्नसमयेऽपि श्वेतवर्णां शक्तिबीजरूपां तन्तुमयीं कुलाकुलयोगेनानुसन्दध्यात्[2]। [3]अर्धरात्रसमये परापरकुण्डलिनीरूपां पद्मरागवर्णां मूलाद् हृदयपर्यन्तं वाग्भवरूपां हृदयाद् भ्रूमध्यान्तं कामराजरूपां[4] भ्रूमध्याच्च[5] ब्रह्मरन्ध्रान्तं शक्तिबीजरूपां ध्यायेत्। तदुक्तम् **उदयाकरपद्धत्याम्**—

> आद्या मृणालसूत्राभा पीता रक्ता तु[6] मध्यमा।
> श्वेता त्वन्तर्गता[7] शक्तिः[8] सन्ध्या त्रितयरूपिणी॥

तथा चतुर्थीसन्ध्यानिर्णय[9]**स्तत्रैवोक्तः**—"कच्छपहृदयबिन्दुकच्छिद्रं[10]स्थानात् स्थानान्तरं सन्धयन्ती[11] चतुर्थी सन्ध्या" इति। अथवा [12]चक्रसन्ध्यां कुर्यात्। तदुक्तं **सङ्केतपद्धत्याम्**—

> सर्वाधारेषु चक्रेषु [13]शक्तिर्या कुटिला स्थिता।
> [14]आद्यचक्रा[15]नुसन्धानात् सा सन्ध्या [16]चक्ररूपिणी॥

अथवा महासन्ध्यां कुर्यात्। तदुक्तम् **उदयाकरेणैव**[17]—

> शिवशक्त्योश्च[18] संयोगो यस्मिन् काले प्रजायते[19]।
> [20]सा सन्ध्या कुलनिष्ठानां समाधिः स[21] प्रतीयते[22]॥
> चन्द्रभास्करसंमर्दो[23] यस्मिन् काले प्रजायते।
> सा सन्ध्या तामुपासीत लोकसन्ध्यां न चोत्तरां[24]॥

---

१.सन्धेया–ग.। २.योगिनीम–ग.। ३.अथार्ध–ख.। ४.इतः परम् 'बीज'–घ.ड.। ५.ध्याद्–ख.ग.। ६.सु–क.। ७.दन्तर्गता–क., तन्तुगता–ग., चान्तर्गता–घ.ङ.। ८.सन्ध्या–ग.। ९.इतः परम् 'सूत्र' इति–ग.। १०.कच्छिद्रेषु–ख., गछगा–ग.। ११.इतः परम् 'इति'–क.ख.। १२.वज्र–कटि.ख.ग.घ.ङ.। १३.यः कुर्यात् कुटिलां स्थिताम्–ग.। १४.अथ–क.। १५.वर्णा–ग.। १६.वज्र–कटि.ख.ग.घ.ङ.। १७.कर-पद्धत्याम्–ग.। १८.स्तु–ख., कत्योः स्वयं–ग.। १९.वर्तते–घ.ङ.। २०.'सा' नास्ति–घ.ङ., 'सा सन्ध्या ....प्रजायते' नास्ति–ख.। २१.सा–क.ख.घ.ङ.। २२.गी–ग.। २३.संपर्को–ग., संयोगो–घ.ङ.। २४.चेतराम्–ख.ग.।

अथवा ग्रन्थिसन्ध्यां कुर्यात् । [१]तदुक्तम् **उदयाकरेणैव**—

कन्दात् कुण्डलिनी तूर्णं भिन्दन्ती ग्रन्थिसंचयम्[२] ।
सिञ्चन्ती [३]चामृतेनैव संदधाना परं पदम् ॥

[४]या तु सन्ध्या समाख्याता [५]कौलिकी तु विशेषतः ।

[एवं] हंससन्ध्यां कुर्यात् । तदुक्तं **देवीसंस्थान**नाम्न्यागमे[६]—

आत्मा त्वादित्यहंसोऽयं पक्षौ चास्य सितासितौ ।
तदन्तर्वर्तते राहुस्तत्र सन्ध्ये[७] गमागमे ॥
कृष्णे संक्रमते नाडी शुक्ले निष्कलवाहिनी ।
एतत्पक्षद्वयं वाहें[८] प्राणाचार्यस्तु[९] चन्द्रमाः ॥

[१०]तथा **षट्सहस्रभट्टारके**[णापि[११] सन्ध्यानिर्णयः कृतः । [१२]यथा] —

प्राणार्कौ सन्नयेत् पश्चा[१३]च्छक्त्यन्तमथने यदा ।
[१४]त्रिपथे जायते सन्ध्या [१५]तन्त्रस्था [१६]कुलयोगिनाम् ॥ इति[१७] ।

एवं [१८]निर्वर्तितसन्ध्यावन्दनस्तर्पणं कुर्यात् ।

**॥ इति [[१९]श्रीविद्यानन्दनाथविरचितायां [२०]ज्ञानदीपविमर्शिन्यां श्रीत्रिपुरसुन्दरीपद्धत्यां] सन्ध्यावन्दनपद्धतिश्चतुर्थी ॥**

■

---

१. 'तदुक्तमुदयाकर ....हंससन्ध्यां कुर्यात्' नास्ति– ख.। २. खण्डकम्– घ. ङ.। ३. सा– ग, या– घ. ङ.। ४. सा– ग. घ. ङ.। ५. लौकिकी– ग.। ६. मण्डलनाम्न्यागमे– ख., 'मण्डलागमे– घ. ङ.। ७. न्ध्योद्– ख.ग.। ८. चाहं– ग., बाह्ये– ख. ङ.। ९. श्च– ख.ग.। १०. 'तथा' नास्ति– क.ग., श्रीपद्महस्तभट्टारके– कः.। ११. केनापि– ख., केण– ग., केऽपि– घ. ङ.। १२. 'यथा' नास्ति– क.ग.घ.ङ.। १३. द राश्यन्तमयते यदा– क., च्छक्तिं न मानयेत्तदा– ग.। १४. त्र्यध्वे– ख., त्रितत्त्वे– ग.। १५. त्वन्तस्था– ख. ग., तत्त्व(तत्र) इति टिप्पणीरूपेण दृश्यते– क.। १६. शिव– घ. ङ.। १७. 'इति' नास्ति– ग.। १८. निर्वृत्य– क., निर्वर्त्य– ग.। १९. 'श्रीविद्यानन्द ....सुन्दरीपद्धत्यां' नास्ति– क.ख.। २०. 'ज्ञानदीपविमर्शिन्यां' नास्ति– घ. ङ.।

# तर्पणपद्धतिः

[अथ] तर्पणं द्विविधं बाह्याभ्यन्तरभेदेन। [तत्र] बाह्यं कर्मयोगिनाम्[१]। [२]तद्यथा—[मूल]वाग्भवेन [तीर्थजलं] संशोध्य[३] कामराजेनाकृष्य [४]परामृतपदं नीत्वा धेनुमुद्रया [५]शक्तिबीजेन जलान्तः पातयित्वा [परामृतं तज्जलं भावयित्वा] तत्र त्रिकोणवृत्त[६]चतुरस्रं चक्रं परिभाव्य गणेशबटुकौ चक्रद्वारि दक्षिणवामतः संतर्प्य [७]त्रिकोणचतुरस्रान्तराले ईशानादिवायव्यान्तं [श्री]गुरुपङ्क्तिं सन्तर्प्य त्रिकोणमध्ये वक्ष्यमाण-[८][1]ऋत्वासनमन्त्रैः सन्तर्प्या[९]न्तर्मुद्राप्रयोगेण कुलकुण्डलिनीं द्वादशान्त-मुन्नीय[१०] परामृतपानोन्मत्तां[११] तां प्रवहणनाड्या त्रिखण्डामुद्रामुद्रिते करकमले विरेच्य वक्ष्यमाणावाहनवि[१२]द्यायाऽऽवाह्य संस्थापनाद्यमृतीकरणान्तान् विधाय [१३]तत्राङ्गे देवीपरिवृतां तां देवीं ध्यात्वा [१४]तुर्यविद्यायुक्त[१५]चतुर्थपीठमन्त्रेणाऽऽस्यकमले परामृत-बुद्ध्या सप्तवारं [द्वितीयान्तं तर्पयामीति] सन्तर्प्य ई[१६]शदिक्पीठमन्त्रेण गुणदेवी-रेकैकशः सन्तर्प्य मूलदेव्यङ्गे लयाङ्गत्वेना[१७]ङ्गदेवता[१८] एकैकवारं सन्तर्प्य चतु-र[१९]स्राग्नीशनैर्ऋत्यवायव्येषु हृदयादिचतुष्टयं हारस्फटिकल[२०]याऽञ्जननिभमभय-व[२१]रदोदितकरसरोरुहयुगलं योषिद्रूपं [२२]चतुर्वारं सन्तर्प्य पुरतो नेत्रं दिग्दलेष्वस्त्रं [२३]पिङ्गलज्वलदग्निनि[२४]भमभयवरोद्यतकरं ध्यात्वा [२५]स्वगुणवारं [२६]सन्तर्पयेत्। इत्थं

---

१. नां लिख्यते–ग.। २. यथा–ख.। ३. ध्याकुलामृतं–ख.। ४. परापरा–ग.। ५. 'शक्ति-बीजेन' नास्ति–ग.। ६. 'चतुरस्रं ....त्रिकोण' नास्ति–घ.ङ.। ७. वृत्त–ख.। ८. 'वक्ष्यमाण' नास्ति–ख.। ९. र्प्य तन्मु–ग.। १०. मानीय–ख.। ११. तोन्मग्नां–ख., लोलीभूतचैतन्य-मयीं–ग.। १२. मुद्रया–ग.। १३. तत्र कामेश्वर्यादिपरिवृतां–ख., य बाह्ये तत्र कामदेवा-ङ्कस्थत्रिपुरां–ग.। १४. तुरीय–ख.घ.ङ.। १५. वेद–ख.। १६. ईरोदृक्–क., 'ईशदिक् .... सन्तर्प्य' नास्ति– ख., द्रे दीशदिक् पीठतुर्यदेव्या–ग.। १७. न नववारं–ख.। १८. ताजाति-युक्तं–ग.। १९. स्राग्नीशासुर–ख., स्राग्नीशान–ग.। २०. कलायां जल–क., हरिताञ्जन–घ.ङ.। २१. वरोद्यत–ख.। २२. तनुवारं–ख.ग.घ.ङ.। २३. 'पिङ्गल' नास्ति–ख.ग.घ.ङ.। २४. प्रभ–ख.ग., रूप–घ.ङ.। २५. 'स्व' नास्ति–ख.ग., खे गुण–घ.ङ.। २६. तर्प–ख.ग., तर्प्य–घ.ङ.।

---

*1. ऋत्वासनमन्त्राः ४३ तमे पृष्ठे द्रष्टव्याः।*

सन्तर्प्य [१]हृदयमन्त्रेण परिवारदेवतागणं मूलदेवतायां संयोज्य मूलदेवीं[२] संहार-मुद्रया [३]विसर्ज्य तया खेचरीं [४]भूचरीं च कृत्वाऽङ्गन्यासं कुर्यात्।

अथान्तस्तर्पणं योगि[५]नां लिख्यते। यथा—मूलशृङ्गाटात् कुलशक्तिमुत्थाप्य [६]अकुलशृङ्गाटोदरगतं परं बिन्दुं निर्भिद्य ततो नि[७]र्गतसुधाधारया स्वशरीरगतनव-चक्रदेवतास्[८]तत्तन्मन्त्रानुस्मरणपूर्वकं प्लावयेत्। [९]तदुक्तं च —

विरामोदययोगेन परविज्ञानरूपिणा।
तर्पयेच्च पितॄन् देवान् गुरूनपि समाहितः[1] ॥

इत्थं तर्पणं निर्वर्त्य सूर्यपूजां कुर्यात्।

**॥ इति [[१०]श्रीविद्यानन्दनाथविरचितायां [११]ज्ञानदीपविमर्शिन्यां श्रीत्रिपुरसुन्दरीपद्धत्यां] तर्पणपद्धतिः पञ्चमी ॥**

■

१. परिवारं हृदयमन्त्रेण मूल– क.। २. व्री– क.। ३. विसर्जनया– क., विसृज्यानया– ख.। ४. 'भूचरीं च' नास्ति– ख. ग.। ५. नास्ति– ग.। ६. अपर– ग.। ७. निर्जन– क.। ८. ता वक्ष्यमाण विधिना– घ.ङ.। ९. 'तदुक्तं ....समाहितः' नास्ति– ख.ग.घ.ङ.। १०. 'श्रीविद्यानन्द ....सुन्दरीपद्धत्यां' नास्ति– क.ख.। ११. 'ज्ञानदीपविमर्शिन्यां' नास्ति– घ.ङ.।

1. *इतः परं गृह खपृष्ठे टिप्पणीरूपेणैते श्लोका दृश्यन्ते—*

*इति संतर्प्य तः(ताः) स्वात्मदेवताः सुदृढव्रतः।*
*मौनी स्वपाददिङ्मात्रो यायाद् यागनिकेतनम् ॥*
*गिरिपितृवातलिङ्गवृक्षशुद्धजलह्रदसङ्गमचत्वरोम्रदेशात्(न्)।*
*अपि शिवगदितान् विमुच्य शस्तं निजगृह एव हि पूजनं मुमुक्षोः ॥*

*श्रीकालिकाकल्पेऽपि—*

*अरण्ये स्वल्पकामानां सिद्ध्यर्थं पूजनं हितम्।*
*निष्कामानां मुमुक्षूणां गृहे शस्तं सदार्चनम् ॥*

*ऋषीणां मुनिमुख्यानां दीक्षितानां द्विजन्मनाम्।*
*गृहेऽपि यजनं कार्यं रसैर्द्राक्षेक्षुसंभवैः ॥*

# सूर्यपूजापद्धतिः

[1]सूर्यपूजां बाह्याभ्यन्तरभेदेन कुर्यात्। तत्र बाह्या यथा—ह्रां ह्रीं सः इति[2] प्रयोजनतिलकाख्यो मनुस्त्र्यक्षरः सूर्यदैवत्यः[3]। अस्य[4] मध्यमबीजं[5] षड्[6]दीर्घस्वर-भेदितं कृत्वानेन[7] कराङ्गन्यासं कृत्वा [8]मूलषडङ्गमपि विन्यस्य कुङ्कुमसिन्दूरादिना सवितृमण्डलं वृत्ताकारं[9]मुपलिप्य तस्या[10]ग्निरक्षोवाय्वीशा[11]नमध्येषु प्रभूतां विमलां सारां समाराध्यां [12]परमसुखां प्रणवद्वय[13]पुरःसरां यष्ट्वा पद्म[14]मुद्रां तन्मध्ये संपूज्य [तदुपरि] ह्रां ह्रीं सः सूर्याय प्रकाशशक्तिसहिताय सग्रहराशिनक्षत्रतिथियोग-परिवाराय नम इति मन्त्रेण सूर्यमण्डलरू[15]पमभ्यर्च्य तन्म[16]ध्ये त्रिकोणवृत्तचतुरस्रं वर्तयित्वा तस्य[17] वामदक्षिणयोर्गणेशबटुकौ [सम्पूज्य] ईशानादिवायव्यान्तं गुरु-पङ्क्तिं [संपूज्य] त्रिकोण[वृत्त]मध्ये ऋत्वा[18]सनं चाभ्यर्च्य तन्मण्डलान्मनोर्मध्ये त्रिकोणं[19] वृत्तचतुरस्रमर्घ्यमण्डलं परिक[20]ल्प्य तस्याग्नीशाननैर्ऋत्यवायव्यमध्ये चतु-र्दिक्षु सूर्यषडङ्[21]गेनाभ्यर्च्य[22] साधारं [अर्घ्य]पात्रं प्रणवाभ्यां प्रतिष्ठाप्य सद्वितीयेन[23] विशेषजलेनापूर्य [मूल]वाग्भवेन संशोध्य कामराजेन संदीप्य शक्तिबीजेनामृ-तीकृत्य तस्मिन्नर्घजले[24] पूर्ववदङ्गद्वयं विन्यस्य सूर्यमन्त्रेण मूलमन्त्रेण च महामुद्र-याऽऽच्छाद्य सप्तवारं जपित्वा[25]ऽनेनार्घ्यजलेनात्मानं पूजोपकरणानि चाभ्युक्ष्य

---

१. अथ सूर्यपूजा च द्विधा– ख.। २. नास्ति– ग.। ३. देव– ख.घ.ङ.। ४. अन्त्य– ख.। ५. ध्यगतं– ग.। ६. षट्स्वर– ख.। ७. तेन– ग.घ.ङ.। ८. 'मूल' नास्ति– ग.। ९. रं कृत्वो– ग.। १०. स्यां नि– क., स्याग्नेय– ख.। ११. शकोणेषु– ख, शानादिकदिक्षु मध्ये च– ग.। १२. नास्ति– ख. ग.। १३. 'द्वय' नास्ति– ग.। १४. परमसुखां– ख. ग.। १५. 'रूप' नास्ति– घ. ङ.। १६. नास्ति– ख.। १७. स्य द्वार– ख. ग.। १८. षडासनादि संपूज्य– ग.। १९. णं– ग.। २०. विधाय– ख.। २१. षडङ्गं मूलषडङ्गेना– ग.। २२. र्च्य तस्मिन्– ग.। २३. तीय– ग.। २४. न्नर्घजलेन– क., न्नर्घ्ये– ख.। २५. त्वा तेनात्मानं यागभुवं– ख., तेना– ग., त्वा धूपदीपादिकं समर्प्य देव्यङ्गेऽङ्गमन्त्राणि लयाङ्गत्वेन संपूज्य तेना– ङ.।

सूर्यपीठ[पाद]पञ्चकस्य[1] सूर्यस्य च [2]तदुपरिस्थगणपतिं बटुकं[3] पारम्पर्यासनदेवताभ्योऽर्घ्यबिन्दुं दत्त्वा पूर्ववदन्तर्मुद्राप्रयोगेण तन्मण्डले भगवतीमावाह्यार्घ्याद्युपचारैः संपूज्य मूलमन्त्रेण सप्तवारं बिन्दुं दत्त्वा धूपदीपादिकं समर्प्य देव्यङ्गेऽङ्गमन्त्राणि लयाङ्गत्वेन सम्पूज्य पुनरङ्गवदग्न्यादि[4]क्रमेणाभ्यर्च्य कोणत्रये देवीत्रयं पुनर्मध्ये मूलेन [मूल]देव्यै पुष्पाञ्जलिं विधाय [धूपदीप]नैवेद्यादि[कं] परिकल्प्य पात्रमण्डलदक्षिणे वृत्ताकारं मण्डलं [5]निर्माय प्रणवाभ्यामभ्यर्च्य अस्त्रप्रक्षालितं ताम्रादीनामन्यतमं चषकं विशेषार्घ्यमिश्रं शुद्धोदकपूर्णं [च] निधाय तस्मिन् [6]कुशयवादिकमष्टगन्धं [सहेतुकं] विन्यस्य [7]रक्तचन्दन[पङ्क]मालोड्य रक्तपुष्पाणि विन्यस्य कुशेनाच्छाद्य [8]मूलसूर्यमन्त्रद्वयं प्रत्येकमष्टोत्तरशतं तच्चषकं स्पृशन् जपि[9]त्वा खस्थां मण्डलस्थां[10] [हृत्स्थां] चैकैवेति परि[11]भाव्य जानुभ्यामवनिं गतस्तच्चषकं कराभ्यामुद्धृत्य मूलमन्त्रद्वयमुच्चार्य मार्तण्डभैरवाय [12]प्रकाशशक्तिसहिताय [13]ग्रहराशिनक्षत्रतिथियोगपरिवार[14]संहितासनस्थायै [15]श्रीमहात्रिपुरसुन्दर्यै नम इति पराङ्[16]मुखोऽर्घ्यं पूजामण्डलस्थायै देव्यै दद्यात्। दृष्टिपथे[17] महामुद्रां बद्ध्वा खस्[18]थां हृत्स्थां मण्डलस्थां वार्घ्यामृत[19]प्लुतां परि[20]भावयन् मूलमन्त्रद्वयं प्रत्येकमष्टोत्तरशतमावर्[21]तयन्[22]नुपस्थानं कुर्यात्। तत्र सपरिवारं सूर्यं [खे] विसर्जयेत्। भगवतीं सपरिवारामात्मनि विसर्जयेत्। मण्डलस्थानपि मन्त्रानात्मसात् कुर्यात्। **[इति बाह्यपूजा]**

[अथ] आ[भ्य]न्तरसूर्यपूजा योगिनां लिख्यते[23]। तदुक्तं भगवता **शङ्कराचार्येण—**

---

१. ठमन्त्रेण– ख.। २. तदुपरि सगणबटुकं पारं– ख.। ३. इतः परं 'बीजं'– क. टि.। ४. न्याग्नेया– ग.। ५. विधाय– ख., नास्ति– ङ.। ६. यवादिकसुरक्ताश्च गौरकुसुममष्टगन्धं– ग.। ७. 'रक्त.... विन्यस्य' नास्ति– ख.। ८. सूर्यमूल– ग.। ९. जपेत्– ग.। १०. स्थां हृदयस्थां देवीमेकैकं चेति– ग.। ११. भावयित्वा– ङ.। १२. रक्त– ग., 'प्रकाश .... ताय' नास्ति– ख.। १३. सग्रह– ख. ग. ङ.। १४. वारासन– ख., तायै मार्तण्डभैरवसंस्थितायै– ग.। १५. 'श्रीमहा .... लस्थायै' नास्ति– ग.। १६. मुखमर्घ्यं– क.। १७. थेन– ग.। १८. स्वस्थां– क.। १९. मृता– ख.। २०. भाव्य– ख. ग.। २१. र्तयेत्– ग.। २२. 'न्नुपस्थानं .... सात्कुर्यात्' नास्ति– ग.। २३. ते यथा– क., ते तथा– ग.।

मूलाधारात् स्फुरिततडिदाभप्रभासूक्ष्मरूपोद्-[1] [2]
गच्छन्त्या मस्तकमणुतरा तेजसां मूलभूता ।
सौषुम्नाध्वाचरणनिपुणा सा सवित्रानुबद्धा[3]
ध्याता सद्योऽमृतमथ रवेः स्रावयेत् सार्धसोमात् ॥ [इति[4]]

(प्र. सा. १०.७)

[अस्य] कोऽर्थः ? मूलाधारात् कुण्डलिनीमुत्थाप्य हृदयार्कमण्डलं नीत्वा तद्गतां तामकुलचन्द्रसूर्यमथनसमुद्भूतपरामृतकलया[5] मूलमन्त्रं [सं]स्मरन् सिञ्चेत् । एवमाभ्यन्तरसूर्यपूजां[6] निर्वर्त्य द्वारपालानर्चयेत्[7][8] ।

॥ इति [श्रीविद्यानन्दनाथविरचितायां[9] ज्ञानदीपविमर्शिन्यां[10] श्रीत्रिपुरसुन्दरीपद्धत्यां] सूर्यपूजापद्धतिः षष्ठी ॥[11]

■

---

१. स्फटिक-ङ.। २. दाभा-ङ.। ३. नुबिद्धा-क.। ४. 'इति' नास्ति-क.ग.घ.ङ.। ५. मुद्गत-घ.। ६. इत्थं सूर्यपूजां-ङ.। ७. मण्डपं वर्णयेत्-ग.। ८. कलार्चनं कुर्यात्-घ.ङ.। ९. 'श्रीविद्यानन्द .... पद्धत्यां' नास्ति-क.ख.। १०. श्रीत्रिपुरसुन्दरीपद्धत्यां ज्ञानदीपविमर्शिन्यां-घ.ङ.। ११. इतः परं मण्डपवर्णनात्मिका सप्तमी पद्धतिर्वर्तते-ग.पुस्तके । सा च प्रथमे परिशिष्टे द्रष्टव्या ।

# द्वारपालार्चनपद्धतिः

द्वारपालार्चनं द्विविधं [1]बाह्याभ्यन्तरभेदेन । तत्र[2] बाह्यं कर्म[3]योगिनां यथा— [रत्न]मण्डपस्य[4] पश्चिमद्वारमागत्य [5]नन्दनोद्यानाय नमः । [ह्रीं [6]श्रीं]रत्नमण्डपाय नम इति [7]मण्डपं [8]रत्न[9]ज्योतिःपरि[10]वेष्टितं सोद्यानम[11]भ्यर्च्य ह्रीं [12]श्रीं नन्दनोद्यानाय नमः । द्वारस्य दक्षिणवामशाखयोः क्लीं[13] कं कामदेवाय रत्यै नमः । वं[14] वसन्ताय प्रीत्यै नमः । [15][गं] गणपतये [नमः] । [सं] [16]सरस्वत्यै [नमः] । क्षं [17]क्षेत्रपालाय नमः । [18]ऊर्ध्वोदुम्बरमध्यदक्षिणवामेषु [ह्रीं श्रीं द्रां] द्वारश्रियै नमः । अ[19]धोदुम्बरे [दें] दे[20]हल्यै नमः । ततो वामपादपुरस्सरमन्तः प्रविश्य[21] सरस्वत्यै नमः[1] । श्रियै [नमः] । [22]मायायै [नमः] । दुर्गायै [न[23]मः] । भद्रकाल्यै [नमः] । स्वस्त्यै [नमः] । स्वाहायै [नमः] । शुभङ्कर्यै [नमः] । गौर्यै [नमः] । लोकधा[24]त्र्यै [नमः] । वागीश्वर्यै [नमः] । [25]एता द्वारान्तर्मण्डपाभिमुखाः । द्वारोपरि मञ्चस्थास्तु[26] दक्षिणाद्युत्तरान्तं

---

१. 'बाह्याभ्यन्तरभेदेन' नास्ति– ख. । २. 'तत्र बाह्यं' नास्ति– घ. ङ. । ३. 'कर्मयोगिनां' नास्ति– ख. । ४. 'स्य' नास्ति– ग. घ. ङ. । ५. 'नन्दनोद्यानाय नमः' नास्ति– ख. ग. घ. ङ. । ६. 'ह्रीं श्रीं' नास्ति– क., ऐं ह्रीं श्रीं– ग., श्रीं– घ. ङ. । ७. 'मण्डपं' नास्ति– घ. ङ. । ८. रक्त– ग. घ. । ९. योनिमण्डप– ग. । १०. वृतं– घ. ङ. । ११. विचिन्त्य– घ. ङ. । १२. 'ह्रीं श्रीं ... . नमः' नास्ति– ख. ग. घ. ङ. । १३. 'कं' नास्ति– ख., ऐं ह्रीं श्रीं क्लीं– ग., श्रीं ह्रीं– घ. ङ. । १४. ऐं ह्रीं श्रीं– ग., 'वं' नास्ति– घ. ग. ङ. । १५. गं– ख., ऐं ह्रीं श्रीं ग्लौं– ग., श्रीं ह्रीं गं– घ. ङ. । १६. 'सरस्वत्यै नमः' नास्ति– ग. । १७. ऐं ह्रीं श्रीं क्षं– ग., 'क्षं क्षेत्रपालाय नमः' नास्ति– ख. घ. ङ. । १८. अर्धो– ग. । १९. अथो– क., अर्धो– ग. । २०. सरस्वत्यै– ग. । २१. श्य श्य सर– ख. घ., सस सर– ङ । २२. माद्यायै– क. ग., उमायै– ख., मायायै– घ. ङ. । २३. 'नमः' नास्ति– क. ग. । २४. कालधात्र्यै– क. । २५. इत्येता– घ. ङ. । २६. 'तु' नास्ति– ख. ।

---

*1. "स्वस्तिकादिका देवीः सरस्वतीश्रीदुर्गाभद्रकाल्यश्चतस्रः । स्वस्तिका आदिर्यासामिति समासः । स्वाहाशुभङ्करीगौरीलोकधात्रीवागीश्वर्यश्च पञ्च । एतास्ताश्च देवीर्गायिका यजेत् । तत्रसिद्धं पद्धतिषु" (यो. हृ. दी. ३.१०९) ।*

पङ्क्तिक्रमेणोपविष्टा वरदाभयचिह्निता[१] रक्ता रक्ताम्बरालङ्कारा [गायिकाः] संपूज्याः । ततः सिद्धार्थाक्षतकुसुमानि [[२]आदाय] नाराचास्त्रप्रयोगेण—

अपसर्पन्तु ते भूता ये भूता [३]भुवि संस्थिताः ।
ये[४] भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया ॥

ह्रः अस्त्राय फट् इति[५] मण्डपान्तः प्रक्षिप्य तेषां[६] विघ्नसंघातानां[1] निर्गच्छतां[७] वामाङ्गसंकोचेन[८] मार्गं प्रदाय [अस्त्रमुच्चरन् वामपाद]पार्ष्ण्याघातत्रयेण भौमांस्तालत्रयेण[९]ान्तरिक्षगान् तिर्यग्[१०]दृष्ट्या[११]ऽवलोकनेन दिव्यान् विघ्नानुत्सार्य [दक्षिणपादपुरस्सरं] मण्डपान्तःप्रविश्य [ह्रीं श्रीं] वास्तुपुरुषाय नम इति वास्तुपुरुषं मण्डपमध्ये संपूज्य मण्डपस्य[१२]ाष्टदिक्षु दिङ्मातरो वशिन्याद्या वक्ष्यमाणमन्त्रैः [पूर्वादीशानान्तं] संपूज्याः । तदुक्तं **संकेतपद्धत्याम्**—

दिङ्मातरोऽत्र विधिवद्[१३]ष्टदिक्षु समुद्भवाः ।
पुर्यष्टकनिवासिन्यो देव्यस्ता नौम्यनुक्रमात् ॥ इति ।

[१४]अथवा इन्द्रादीन् पूजयेत् । ततश्चाधारशक्तिकमलासनाय नम इति [१५]साधक आसनं[१६] मृगाजिनादीनामन्यतमं मृदु श्लक्ष्णं हृद्यं रक्तोत्तराम्बर[१७]मभ्यर्चयेत् ।

---

१. धारिण्यो–घ. ङ.। २. 'आदाय' नास्ति–क.। ३. दिवि–ख.। ४. विघ्नकर्तारो ये भूतास्ते–क.। ५. इत्यन्ते–क.। ६. तेषामपि–ख., 'तेषामपि ....तानां' नास्ति–घ. ङ। ७. 'निर्गच्छतां' नास्ति–घ.ङ.। ८. चनेन–ख. ग.। ९. स्ताली–क.। १०. तिर्यग्–ख.। ११. ष्ट्य–ख.। १२. स्याभ्यन्तरे वेदिकाबाह्येष्वष्ट–ग.। १३. वत् सर्व–ख.। १४. 'अथवा ... ततश्चा' नास्ति–ख. ग. घ. ङ., तत्स्थाने–'आ'–ख., 'ततो वेदिकापश्चिमेनार'–ग., 'तत आ'–घ. ङ.। १५. 'साधक' नास्ति–ख. घ. ङ.। १६. स्वासनं–ख., आसनमभ्यर्च्य, आसननियमस्तु यथा–घ.ङ.। १७. रच्छदमर्चयेत्–ख., च्छादनमुक्तलक्षण–ग., मभ्यर्च्य–घ.ङ.।

---

1. *यागमन्दिरगांश्चैव विघ्नानुत्सार्य मन्त्रवित् ।*
*पार्ष्णिघातेन भौमांश्च तालेन च नभोगतान् ॥*
*अस्त्रमन्त्रेण दृष्ट्या च दिव्यान् विघ्नानपोहयेत् ।*
*(यो. हृ. ३.१२-१३)*

आसननिर्णय[1] **उदयाकरपद्धत्यामुक्तः**[2]। यथा—

मेषव्याघ्रगजोक्ष[3]-ऋक्षतुरगत्वग्भिस्तु षट्कर्मसु
प्रत्येकं विविधासनानि[4] क्रिमिजं [5]भाराख्यशृङ्गं तथा।
मोक्षं भोगदमासनं [6]च कुरुते [7]त्वौर्णं तथा चै[8]लजं
वैत्रं चैव मृगाजिनं शुभकरं [9]सर्वं प्रणीतं बुधैः[10]॥
भूमौ [11]भूपभयं कुलक्षयकरं वंशासनं रोगदं
काष्ठं चैव [12]तथासनं [13]च कुरुते शैलं [14]महादुःखदम्।
[15]फुल्लं पल्लवमृत्तिकासनयुतं [16]तार्णं च विद्वेषकृ[17]द्
[18]मैषं क्रैमिजमासनादिसकलं मोक्षादिसिद्धिप्रदम्॥ [19]इति।

वि[20]कल्पजालमुत्सृज्य व्यवहारदशास्वयम्।
सावधानैकमनाः(नसा) स्वासने पूजितो विशेत्॥
लोहितां सर्वसामग्रीं दिव्यदृष्ट्यावलोकयेत्।
निबध्नीयात् ततः सम्यक् श्रीमत्त्रैपुरमासनम्॥
रक्ततेजोमयं व्याप्य त्रिलोकं निजसंविदा।
गोरोचनां समालोड्य संप्रार्थ्यानीय मन्त्रतः॥

---

१. यस्तु–ख.घ.ङ.। २. त्यामुक्तम्–क., त्यां तदुक्तं–ग., 'उक्तः। यथा' नास्ति– घ.ङ.। ३. ष्ट्र–ख.ग., उक्षो वृषभः–कटि.। ४. नादि–ग.घ.ङ.। ५. हाराख्यशार्ङ्गं–ख.। ६. प्र–ख.। ७. दुर्गं–क, ऊर्णं–ग, तूर्णं–घ.ङ.। ८. वीरजं–क.ग., चेलजं–ख.। ९. सर्व–ख.घ.। १०. शुभैः–ग.। ११. रूप–ग.। १२. तथाशनं–क., तदासनं–ख.घ.ङ.। १३. प्र–ख.घ.ङ.। १४. सदा दुःखजं–घ.ङ.। १५. फुलत्–क., फुल्लत्–घ.ङ.। १६. त्रैणं–क.ग.। १७. षणं–घ.ङ.। १८. मेषं कामद–घ.ङ.। १९. 'इति' नास्ति–घ.ङ.। २०. 'विकल्प .... मुद्धरेत्' नास्ति–ख.ग.घ.ङ., अस्य स्थाने घ.ङ. संज्ञकमातृकयोः पाठोऽयं दृश्यते—"मेषे कामः, व्याघ्रमृगे ज्ञानम्, अजेऽष्टार्थसिद्धिः, उक्षतुरगादयो मारणोच्चाटनादिषु। भारशृङ्गीतीभासनफलकादिमृगशृङ्गादिपरिवर्जनाय। अन्यत् सिद्धम्" इति।

[१]इत्युक्तस्वासने समुपविश्य प्राणायामेन पूर्ववन्मन्त्रध्यानं कृत्वा [२]षडङ्गानि विन्यस्य चक्रमुद्धरेत्। [तस्मिन्नासने प्राङ्मुख उपविश्य प्राणायामेन पूर्ववन्मन्त्र-ध्यानं कृत्वा वक्ष्यमाणाङ्गानि विन्यस्यार्घ्यसाधनं कुर्यात्। अस्त्रवारिध[ा]नीजलेन स्वकीयदक्षिणभागे त्रिकोणवृत्तचतुरस्रं मण्डलं विधाय उक्तप्रणवेनाभ्यर्च्य मूल-मध्यान्तबीजैः साधारणपात्राणि प्रतिष्ठाप्य तेषु पृथग् द्रव्याणि निक्षिपेत्। चन्दन-पुष्पाक्षतदूर्वाङ्कुराणि तस्मिन् निक्षिप्य प्रत्येकपात्राणि संस्पृश्य मूलेन त्रिधा संजप्य योनिमुद्रां प्रदर्श्य तेनार्घ्यजलेनात्मानं पूजोपकरणान्यभ्युक्ष्य वेदिकायां च स्वर्णा-दिपट्टे वा चक्रमुद्धरेत्।]

योगिनामा[३]न्तरद्वारपालार्चनं लिख्यते। [मा शक्तिस्तस्या अयनं गमागमं पालनं चास्मिन्निति] स्वशरीरमेव मण्डपमु[४]द्यानं स्वशरीरग[५]तरोमनि[६]चयमयम्। रञ्जनक्षोभणात्मकवृत्तिविशेषेषु प्रतिबिम्बितचिच्छक्तिस्फार एव [७]कामः। आह्लाद-कारिणीषु[८] [प्र]वृत्तिषु प्रतिबिम्बिता पारमेश्वरी स्फुरत्ता[९] वसन्तः। [[१०]बाह्यमारविघ्न-मर्दिनी ज्ञानशक्त्युल्लासात्मिका ज्ञानशक्तिर्गणाधिपतिः, कुलकलापवाचिका वर्णपदादिरूपा चिच्छक्तिकला सरस्वती।] नवद्वारमुखेन सकलविषयसंप[११]त्स-मुदायं प्रतिपाल[१२]यतीति पारमे[१३]श्वरी स्फुरत्ता द्वारश्री[१४]ः, अन्तःशक्तिर्देहली, बाह्यभा[१५]व-विघ्नमर्दिनी ज्ञानश[१६]क्त्युल्लासात्मिका शक्तिर्गणाधिप[१७]तिः, कुलकलापवाचिका[१८] वर्णप[१९]दादिरूपा चिच्छक्ति[२०]कला सरस्वती। अधःशक्तिरेव देहली। अन्तःस्था-नामिन्द्रियाणां बहिः प्रसरत्[२१]स्थलानि द्वाराणि। तदन्तस्था एकादशदेवता मनसा

१. 'इत्युक्त' नास्ति– क.ख.ग.। २. मूला– ख.घ.ङ.। ३. भ्यन्तरं– ख.घ.ङ.। ४. 'उद्यानं' नास्ति– ग.। ५. गतो– ख.। ६. रत्नज्योतिधृग् रत्यादि– क.। ७. क्रमः– क.। ८. रिषु– क.ग.घ.ङ.। ९. त्तावद्वसतः– क.। १०. 'बाह्यमार .... सरस्वती' नास्ति– ख.ग.घ.ङ.। ११. सम्पदं– ख.। १२. पादयन्ती– ख.घ.ङ., इतः परम् 'इति' नास्ति– ग.। १३. 'पारमेश्वरी' नास्ति– ग.। १४. 'श्री .... ह्ली' नास्ति– ख.ग.घ.ङ.। १५. 'भाव' नास्ति– ख.। १६. क्त्यन्तरु– ग.। १७. धिपतीः– ख.। १८. राचकी– क., वाचिकी– ग.। १९. कला– ख.। २०. क्तिसकला– क.। २१. स्थानानि– ख.ग.घ.ङ.।

सहैकादशेन्द्रियाभिमानिन्यो[१] वृत्तयो गायिकाः। उपरि सप्तकमधोद्वयं[२] मिलित्वा[४] नवद्वारकं[३] भवति। तत्रानन्ददिगभिमानिनी मूलस्वामिन्येव सर्वासु[५]। अवशिष्टाष्टका[६]भिमानिन्यः शब्दादिमय्यो[७] वृत्तयः। एता [एव] दिग्देवताः[८]। आधारशक्तिर्मूलशक्तिरेव। [९]इत्थमान्तरद्वारपालार्चनम्।

॥ इति [[१०]श्रीविद्यानंदनाथविरचितायां ज्ञानदीपविमर्शिन्यां[११]] द्वारपालार्चनपद्धतिः[१२] सप्तमी ॥

■

१. न्यः शिवस्य परा एव व्यापिकाः– क., न्यः शिवस्फार एव व्यापिकाः– ग.। २. द्वयमिति– घ. ङ.। ३. द्वारं– ख. घ. ङ.। ४. कुल– ख.। ५. 'सर्वासु' नास्ति– ख. ग., देवता– घ. ङ.। ६. त्मका– क.। ७. मया– क. ग.। ८. 'दिग्देवताः' नास्ति– ग.। ९. 'इत्थ .... र्चनम्' इत्यस्य स्थाने 'शिर एव पीठम्, देह एव क्षेत्रम्, नाभिरेव वर्णाः, प्रजापतिरेव वृक्षः, धर्मार्थकामादयः फलानि' इति पाठः– घ. ङ.। १०. 'श्रीविद्या ....र्शिन्यां' नास्ति– क. ख.। ११. र्षिण्यां– घ. ङ.। १२. तिरष्टमी– ग.।

# चक्रोद्धारपद्धतिः

चक्रं तु[१] द्विविधं बाह्याभ्यन्तरभेदेन । [तत्र] बाह्यं [1]स्थण्डिलादिगतम् । [२]तत् कर्मयोगिनाम् । तदुक्तम्[३] उदयाकरपद्धत्याम्[४]—

शुद्धे भूमितले [५]सुगन्धदशदिक्प्रोत्फुल्लपुष्पान्विते
गन्धामोदसुधूपदीपबहुलैर्मांसासवैः[६] संभृते ।
पट्टे हेममयेऽथ [७]रूप्यजनिते ताम्रेऽथवा दर्पणे
[2]कस्तूरीघुसृणेन्दुचन्दनसुराभिश्चक्रराजं[८] लिखेत्[९] ॥

यच्चक्रं वह्निकोणं वसुदशकंककुप्चक्रकोणोपशोभं[१०]
तद्बाह्येऽप्यष्टपत्रं[११] कमलमिह[१२] ततः षोडशारं [१३]सुवृत्तम् ।
वार्द्धिद्वारं[१४] च [१५]यच्चाभिलषितविषयोत्पादने[१६] कल्पवृक्षं
तत्संस्था[१७] सापि देवी वितरतु तरसा प्रार्थितं[१८] त्रैपुरी वः ॥

---

१. 'तु' नास्ति–ख., च–घ.ङ.। २. तच्च–घ.ङ.। ३. यथा–ग., 'तदु .... त्याम्' इत्यस्य स्थाने 'तदुक्तं कर्मयोगिनां'–घ.ङ.। ४. रैरैव–ख.। ५. सुबद्ध–ख.। ६. बहुले मांसा–क.ग., तुमुले मांसा–घ.ङ.। ७. रौप्य–ख.ग.। ८. सुधा–ग.। ९. भिः श्रीचक्र–क., भिस्त-च्चक्र–ख.। १०. शककुच्छक्र–ख., शककुद्बहिः–ग., शककुच्चक्र–घ.ङ.। ११. त्वष्ट–ख.। १२. बहिरपि च ततः–ख.। १३. तु–ग.। १४. पार्थिद्वारं–ख., बाह्यद्वारं–ग., चातुर्द्वारं–घ.ङ.। १५. यथा–ग.। १६. यापा–घ.ङ.। १७. मन्त्रस्था–क., तन्त्रस्था– ग.घ.ङ.। १८. पार्थिवं त्रैपुरेशं–ग.।

---

1. *मण्डलं स्थण्डिलं पात्रमक्षसूत्रं सपुस्तकम् ।*
*लिङ्गं तूरं पटः पुस्तं प्रतिमा मूर्तिरेव च ॥*
*इत्येकादशधा बाह्यं पुनस्तद्बहुधा भवेत् ।* (तन्त्रा. ६.३-४)
*"पुस्तं लेपादिनिर्मिताकृतिः, मूर्तिर्गुर्वादिसम्बन्धिनी"*
*इति तत्रैव जयरथः । "स्थण्डिलं यागार्थं गृहीतो भूप्रदेशः,*
*तूरं पात्रादावुत्कीर्ण आधारविशेषः" इति च जयरथ एवात्र ।* (६.४२-४३)

2. *पङ्क्तिरियं यो. हृ. दी. (३.९५-९६) दृश्यते ।*

अस्या[यम]र्थः — एतच्चक्रं[१] समरेखं मनोरमं त्रिकोणाष्टकोणदशकोण-द्वयचतुर्दशकोणाष्टदलषोडशदलवृत्तचतुरस्रं[२] चतुर्द्वारं चतुस्तोरणाद्युपेतं पूजा-मण्डलं [३]गुरुमुखाज्ज्ञात्वा विरच्य प्रतिकोणं प्रतिदलं च[४] यन्त्रराजोदरे[५] [६]अकथादि-त्रिपङ्क्तिकं [७]हक्षाक्षरकन्दं [८]महावाग्भवं तन्मध्ये आद्यवर्णं[९] बिन्दुं[१०] काम-कला[११]रूपसहितं सोम[१२]सूर्याग्निमयं बीजत्रयसमन्वितं मण्डलं कुर्यात्[१३] ।

[१४]मण्डललक्षणमाह—

विषमे व्याधिनिर्देशो न्यूने चैव धनक्षयः ।
अधिके कलहो यस्मात् तस्माद्यागसमीक्षकः ॥

कृशा स्थूला च वक्रा च रेखादोषाः प्रकीर्तिताः ।
स्निग्धा मनोहराः कार्याः सर्वसंपत्प्रदायिन्यः(नीः) ॥

कृशया व्याधिजननं स्थूलया च दरिद्रता ।
वक्रया मरणं यस्मात् तस्माद् रेखां विलक्षयेत् ॥

इदानीं **यागसारोक्त**श्लोका लिख्यन्ते—

देव्यासनोपयोग्यस्य तीरे यस्य सुवर्तुला ।
तुर्यास्ते(स्ते) दिग्विदिक्सूत्रैः पालितैर्वृत्तिमालिखेत् ॥

तदन्तरेषु रेखाष्टौ सूत्राणि समया ततः ।
तदन्तस्तु त्रिधा वृत्तिं समन्तात् परिवर्तयेत् ॥

---

१. यच्च—ख.। २. रस्त्र—ग. घ. ङ.। ३. 'गुरुमुखाज्ज्ञात्वा' नास्ति—ख. ग. घ. ङ.। ४. 'च' नास्ति—घ. ङ.। ५. जादारभ्य—ग.। ६. त्वक—ख.। ७. कह—ख.। ८. 'महा' नास्ति—ख. ग. घ. ङ.। ९. 'वर्णं' नास्ति—ग.। १०. न्दु—ग. घ. ङ.। ११. 'रूप' नास्ति—ख.। १२. 'सोम ....न्वितं' नास्ति—ख.। १३. इतः परम्—'मण्डलनिर्वचनमुदयाकरपद्धत्यामुक्तम्' वाक्यं दृश्यते—क. ग.। तच्चात्रानावश्यकम्, अग्रे यथास्थानं तस्य विद्यमानत्वात्। १४. '**मण्डल** ....देशिकशिष्ययोः' (पृ. २६) नास्ति—ख. ग. घ. ङ.।

दलाग्रं दलसन्धिं च केशराणि च कर्णिकाम् ।
क्रमशः संविधायाशु रजोभिस्तत्र तो(चो)न्नतम् ॥

पीता च कर्णिका रक्ता नवभिः कृष्णबीजकैः ।
मूलमध्याग्रसंस्थानि पीतरक्तसितानि च ॥

केशराणि दलान्याशु श्वेतवारणरेखया ।
शुक्लानि प्रोन्नताग्राणि भुक्तिकामस्य वर्तयेत् ॥

समानि मुक्तिकामस्य दलोग्राणि विजानता ।
कन्दर्पादिषु योगेषु तीक्ष्णाग्राणि शुभानि च ॥

दिगीशैः संवराग्राणि गोकर्णाग्राणि चान्यथा ।
विघ्नेशानां ग्रहाणां च प्रथमा(मथा)नां निगद्यते ॥

मण्डलाग्राणि कार्याणि वाणीदुर्गार्चनेषु च ।
बोधिपत्रगतान्येव विदधीत गुरूत्तमः ॥

प्रत्यक्षमिव संपाद्य देव्या आसनपङ्कजम् ।
मध्याद्यन्ताधिकं चान्य[द्] यन्न्यूनं च समं भवेत् ॥

इदानीमस्मच्छ्लोकान् प्रब्रूमहे—

मन्त्रसंस्कारसंशुद्धं रजः सुस्निग्धमुज्ज्वलम् ।
शुभं चैवाशुभं चान्यद् रक्तं चैव विवर्णकम् ॥

बाह्यस्थसत्त्वादिरेखास्तिस्रः सितरक्तकाष्र्ण्यवर्णा अङ्गुष्ठमानेन प्रथमा कार्या पादोना द्वितीया यवद्वयोना तृतीया । एवं तिस्रो रेखा भुक्तिकामस्य समा मुक्तिकामस्य । अथवा पृथिव्यादिसूत्ररेखापञ्चकं पीतविशदाभशोणधूमधूसरवर्णैर्बाह्यस्थपार्थिवरेखाः । अङ्गुष्ठपरिमिताद्यवशिष्टानामनन्तरं तण्डुलो नाम तं पदार्थसंख्याक्रमेण नाना द्रष्टव्येति ।

योगोऽन्यो देवताश्चान्याः संविच्चान्या क्रियास्तथा ।
आचार्यस्य महादोषा एते विघ्नविनायकाः ॥

यजन् सपदि भक्तस्य पूजासंभारपुष्कलाः ।
ततो निर्विघ्नतां यान्ति शब्दा देशिकशिष्ययोः ॥

मण्डलनिर्वचनम् **उदयाकरपद्धत्यामुक्तम्** । यथा—मण्डनार्थ[१]धातोरचि परे मण्डः[२] सम्पत्, तं लाति ददातीति मण्डलम् । तन्महिमाऽपि[३] तत्रैव सूचितः —

अखण्डमण्डलाकारं विश्वं व्याप्य व्यवस्थितम् ।
त्रैलोक्यं मण्डितं येन[४] मण्डलं तत् सदाशिवम् ॥

मकारे मातरः सर्वा डकारे डाकिनीगणाः ।
लकारे लाकिनी यस्मात्तस्मान्मण्डलमुच्यते ॥ इति ।

एवं विरचितमण्डले [1]समस्तप्रकट-गुप्त-गुप्ततर-सम्प्रदाय-कुल-कौल-निगर्भ-रहस्यातिरहस्य-परापररहस्ययोगिनी[५]सिद्धिश्रीपादु[६]काभ्यो नम इति पुष्पाञ्जलिं विकिरेत् ।

[७]आभ्यन्तरचक्रं योगिनां लिख्यते । यथा—पञ्चशक्तिचतुर्व[८]ह्न्यात्मकत्वाच्छरीरमेवाकृतकं चक्रम् । तेन [९]मेढ्रा[१०]धारादिद्वादशा[११]न्तपर्यन्तं नवाधारेषु नवधा विभक्तं चक्रं स्थितम्[१२] । क्षित्यादिप्रकृत्यन्तं नवतत्त्वात्मकं [१३]प्रतिशृङ्गाटं यन्त्रराजं

---

१. लार्थ–ग., नार्थधृतोरचि–ख.। २. ण्डलः समात्–क., ण्डलं मण्डपरूपं संपत्–ग.। ३. 'अपि' नास्ति–ग.घ.ङ.। ४. 'येन ....लाकिनी' नास्ति–घ.ङ.। ५. 'सिद्धि' नास्ति–ख.घ.ङ.। ६. का पूजयामि–घ.ङ.। ७. अथाभ्य–ख.ग.घ.ङ.। ८. ह्निस्तद्विलासात्म–घ.ङ.। ९. मूला–घ.ङ.। १०. द्या–ख.ग.घ.ङ.। ११. न्तं–ख., इतः परम् 'पर्यन्तं' नास्ति–ख.ग.घ.ङ.। १२. तं क्षि–ख.। १३. प्रकृति–ग.।

---

*1. "गुप्तादियोगिनीनामित्यत्र आदौ समस्तप्रकटपदमध्याहार्यम् । आदिपदेन गुप्ततरसम्प्रदायकुलकौलनिगर्भरहस्यपरापररहस्ययोगिन्यो गृह्यन्ते" (यो. हृ. दी. ३. ९०)।*

वाग्भवबिन्दुकामकलात्रिधामबीजत्रयसमेतं[1] परिभाव्य पूर्वोक्तमन्त्रस्मरणेन [2]परामृतकुसुमं विकिरेत्। तदुक्तं **क्रमस्तोत्रे**[3]—

[4]एका या पञ्चशक्तिक्रमवरहुतभुग् [5]युग्मयुग्मैश्च[6] वृत्तैः
[7]सा त्वीषन्मण्डलान्तः प्रभवति सततं योनि[8]भिस्त्र्युत्तराभिः।
चत्वारिंशद्भिरुच्चैरकृतकव[9]लनारञ्जिते दिव्यपद्मे
द्वन्द्वाङ्के द्वारतुर्ये[10] दिशतु जगति शं चक्रदेवीयुता सा॥

प्राणो वह्निरिहोच्यते प्रलयकृज्जन्मादिशीर्षान्तगः[11]
प्रोन्मेषक्षितितुर्यमारुतमहाभूतान्तसत्ताश्रयः।
शक्तिः शाम्भव[12]धामतस्त्वनवधि सृष्टिक्रमप्रोदि(त्थि)ता
आदि[13]र्हान्तगता [14]सदेति गुरुतो ज्ञात्वाऽम[15]रत्वं भजेत्॥

अग्निरूर्ध्वगतिर्नृणां [16]वायुः संहर्तुमुद्यतः[17]।
शक्तिः सामृतवर्षेण[18] तं विलाप्य ततः सृजेत्॥

[19]तस्मादकुलतः शक्तिं प्रसृतां भावयेद् बुधः।
तद्भावना[20]च्च सततं त्रिजगत् स्यादनश्वरम्॥

इत्थं चक्रं लिखित्वाऽर्घ्यं [21]साधयेत्।

**॥ [22]इति [श्रीविद्यानन्दनाथविरचितायां ज्ञान[23]दीपविमर्शिन्यां]**
**चक्रोद्धारपद्धति[24]रष्टमी ॥**

■

१.समोपेतं–घ.ङ.। २.परमामृत–ख.,परासुधामृत–ग.। ३.त्रे यथा–ख.घ.ङ.। ४.एकं यत्–ग.। ५.पद्म–ग.। ६.युग्मैक्यवृत्तौ–ख.,युग्मैकवृत्त–ग.। ७.शार्वी सन्मण्डलेऽन्तः–ख.,स्रोतं मण्डलं तत्प्रभवति–ग.। ८.योगि–क.। ९.रचना–ख.,रसना–ग.। १०.पुर्ये–क., तुर्यं–ख.,मुक्ते–ग.। ११.गं–क.। १२.वतत्त्वधामनवभिः–ग.। १३.कादिक्षान्त–क.ग., हादिक्षान्त–घ.ङ.। १४.सदैव–ग.। १५.मृतत्वं–ग.घ.ङ.। १६.वपुः–ख.ग.घ.ङ.। १७.र्तुमुद्गतः–ख.। १८.वर्णेन–क.। १९.'तस्मा ....साधयेत्' नास्ति–घ.ङ.। २०.नातः–ख.। २१.प्रोक्ष–ग.। २२.'इति .... र्शिन्यां' नास्ति–क.ख.। २३.त्रिपुरसुन्दरीपद्धत्यां–घ.ङ.। २४.तिर्नवमी–ग.।

# अर्घ्यसाधनपद्धतिः

[1]अर्घ्यं तु[2] द्विविधम्—बाह्याभ्यन्तरभेदेन। तत्र बाह्यं यथा—[3]मण्डलात्मनो-र्मध्ये ईकाराङ्कितत्रिकोण[4]षट्कोणवृत्तचतुर[5]स्र[मर्घ्य]मण्डलं परि[6]कल्प्य तन्मण्डले शङ्खमुद्रया दक्षिणकराङ्गुष्ठेनावष्टभ्याग्नी[7]शासुरवायुषु हृ[8]दयादिचतुष्टयं मध्ये[9] नेत्रं दिक्षु चास्त्रमित्यङ्गानि संपूज्य [मूलेनाभ्यर्च्य] [10]तन्मध्ये त्रिपुरा[र्घ्य]पात्रा[11]धारं स्थापयामीति सं[12]स्थाप्य [अं] अग्निमण्डलाय द[13]शकलात्मनेऽर्घ्यपात्रासनाय नम इति संपूज्य [मूलेनाभ्यर्च्य तत्र] तदुपरि वृत्ताकारेण [पूर्वादि[14]क्रमेणाग्नि]कलादशकं पूजयेत्। यथा[15]—[ह्रीं श्रीं] यं धूम्रा पादु. ह्रीं श्रीं रं नीलरक्ता. ह्रीं श्रीं लं कपिला. ह्रीं श्रीं वं [16]विस्फुलिङ्गिनी, ह्रीं श्रीं शं ज्वाला, ह्रीं श्रीं षं अर्चिष्मती, ह्रीं श्रीं सं हव्यवाहिनी., ह्रीं श्रीं हं कव्यवाहिनी., ह्रीं श्रीं ळं रौद्री., ह्रीं श्रीं क्षं संहारिणी च पादु.। तदुपरि [17]सौवर्ण-राजत-विश्वामित्र-महाशङ्खादीनामन्यतमं [18]पात्रमस्त्रप्रक्षालितं सुधूपितमादाय त्रिपुरापात्रं [19]प्रतिष्ठापयामीत्यासने प्रतिष्ठापयेत्। उक्तं च[20] तद्

---

[21]ऐं ह्रीं श्रीं डं धूम्रापादुकां पूजयामि। ऐं ह्रीं श्रीं ठं (ढं) नीलरक्तापादुकां पूजयामि। ऐं ह्रीं श्रीं णं कपिलापादुकां पूजयामि। ऐं ह्रीं श्रीं तं विस्फुलिङ्गिनीपादुकां पूजयामि।

---

१. अथार्घ्यं– ख.। २. 'तु' नास्ति– ख.। ३. 'मण्ड .... र्मध्ये' नास्ति– ख.। ४. 'षट्कोण' नास्ति– ख.। ५. रस्र– ख.। ६. 'परि.... ण्डले' नास्ति– ख.। ७. शाननैर्ऋत्यवायव्येषु– घ.ङ.। ८. हृदादि– क.। ९. मध्यनेत्रं– क.। १०. तत्र तत्र मध्ये– ख., 'तन्मध्ये' नास्ति– घ.ङ.। ११. त्रास्थानं प्रतिष्ठापयामि– ख.। १२. प्रतिस्थाप्याग्नि– घ.ङ.। १३. दशधं कला– ख.। १४. दिप्रादक्षिणेनाग्नि– ख.ङ.। १५. 'यथा– यं धूम्रायै श्रीपादुकां पूजयामि, रं नीलायै पादु., लं कपिलायै पादु., वं विस्फुलिङ्गिन्यै पादु., शं ज्वालायै पादु., षं अर्चिष्मत्यै पादु., सं हव्यवाहन्यै पादु., हं कव्यवाहन्यै पादु., ळं रौद्र्यै पादु., क्षं संहारिण्यै पादु.'– घ. ङ.। १६. विष्णुलिङ्गिनी– ख.। १७. सौवर्णं राजतं– क.। १८. पात्रं प्रक्षा– क., पात्रं सुधूपित– घ.ङ.। १९. 'प्रति .... पद्ध-त्याम्' इत्यस्य स्थाने 'प्रतिष्ठापयामीति प्रतिष्ठाप्य', मं सूर्यमण्डलाय द्वादशकलात्मनेऽर्घ्यपात्राय नम इति संपूज्य कलाद्वादशकं पात्राभ्यन्तरे वृत्ताकारेण पूजयेत्। [यथा] ह्रीं श्रीं तपनीपादु, २ तापनी, २ साधनी, २ बोधिनी, २ कालिनी, २ शोषणी, २ वरेण्या, २ आकर्षणीपादु. [२] धिष्ण्यापादु, २ विष्णुविद्या, २ ज्योत्स्ना, ह्रीं श्रीं हिरण्यापादु.। एतासामादौ कफादिडान्तान् वर्णान् संयोजयेत्। पात्रलक्षणमुदयाकरपद्धत्यामुक्तम्'– ख.। २०. चैव– घ.ङ.। २१. भिन्नाक्षरेषु स्थितः पाठो ग. पुस्तकस्थः।

उदयाकरपद्धत्याम्—

पात्रं काञ्चनरौप्यकाचजनितं मुक्ताकपालोद्भवं
विश्वामित्रमयं च कामदमिदं हैमं [१]त्रपु स्फाटिकम्।
[२]ताम्रं प्रीतिदमष्टसिद्धिजनकं श्रीनारिकेलोद्भवं
कापालं स्फुटमन्त्रसिद्धिजनकं मुक्तिप्रदं मौक्तिकम्॥
[३]शान्तिके पौष्टिके चैव राजतं कारयेत् प्रिये।
लोहपात्रं समानीयाद् मारणोच्चाटने तथा॥

---

ऐं ह्रीं श्रीं थं ज्वालापादुकां पूजयामि। ऐं ह्रीं श्रीं दं अर्चिष्मतीपादुकां पूजयामि। ऐं ह्रीं श्रीं धं हव्यवाहिनीपादुकां पजयामि। ऐं ह्रीं श्रीं नं कव्यवाहिनीपादुकां पूजयामि। ऐं ह्रीं श्रीं पं रौद्रीपादुकां पूजयामि। ऐं ह्रीं श्रीं फं संहारिणीपादुकां पूजयामि। उक्तं चैव तदुदयाकरपद्धत्याम्—

पात्रं काञ्चनशुद्धकाञ्चननिभं मुक्ताकपालोद्भवं
विश्वामित्रमयं च कामदमिदं हैमं तथा स्फाटिकम्।
तारं प्रीतिदमष्टसिद्धिजनकं श्रीनालिकेरोद्भवं
कापालं स्फुटमन्त्रसिद्धिजनकं मुक्तिप्रदं मौक्तिकम्॥

यदुक्तमुदयाकरपद्धत्याम्—

नरपात्रं महाभागे विज्ञेयं चोत्तमोत्तमम्।
नालिकेरोद्भवं देवि विज्ञेयं चोत्तरमध्यगम्॥
रत्नपात्रे च सुश्रोणि ज्ञेयं चोत्तमकन्यसम्।
मध्यमोत्तमकं हैमं तारं मध्यममध्यमम्॥
ताम्रपात्रदिकं चैव प्रोक्तं मध्यमकल्यकम्।
कल्यसोत्तमकं वैल्वं ब्रह्मवृक्षजमेव च॥
कल्यकं मध्यमं प्रोक्तं मृण्मयं कल्पसाधकम्।
वश्याकर्षणकर्माणि हेमपात्रं सुशोभनम्॥
शान्तिके पौष्टिके चैव राजतं परिकीर्तितम्।
लोहपात्रं समानीयाद् मारणोच्चाटने तथा॥

---

१. 'त्रपु' इत्यस्य स्थाने 'श्रिये'—ख.घ.ङ.। २. तारं—क.। ३. 'शान्तिके ....सुशोभनम्' इत्येते श्लोका न सन्ति—ख.घ.ङ.।

स्तम्भकार्येषु पाषाणं श्लेषे च लोहमृण्मयम् ।
सर्वकार्येषु कर्तव्यं विश्वामित्रं च सुव्रते ॥
कांस्यपात्रं विजानीयान्मन्त्राराधनकर्मणि ।
नरपात्रं च गृह्णीयाद् भुक्तिमुक्तिप्रसाधने ॥

आगमान्तरेऽपि—

तारपात्रं महाभागे विज्ञेयं चोत्तमोत्तमम् ।
नारिकेलविधिं देवि ज्ञेयं चोत्तममध्यमम् ॥
ताम्रपात्रं च सुश्रोणि ज्ञेयं चोत्तमकन्यसम् ।
मध्यमोत्तमकं हैमं तारं मध्यममध्यमम् ॥
ताम्रपात्रादिकं चैव प्रोक्तं मध्यमकन्यसम् ।
कनीयस्तोमकं विल्वं ब्रह्मवृक्षजमेव च ॥
कन्यके मध्यमं प्रोक्तं मृण्मयं कन्यसाधमम् ।
वश्याकर्षणकर्माणि हेमपात्रं सुशोभनम् ॥

---

स्तम्भकार्येषु पाषाणं विद्वेषे लोहमृण्मयम् ।
सर्वकार्येषु कर्तव्यं शङ्खपात्रं च सुव्रते ॥
कुलोच्छेदनकार्येषु काचपात्रं प्रशस्यते ।
काष्ठपात्रं विजानीयाद् मन्त्राराधनकर्मणि ॥
नरपात्रं तु गृह्णीयात् भुक्तिमुक्तिप्रदायकम् ।

ततः सुवर्णरजतविश्वामित्रमहाशङ्खादीनामन्यतमं पात्रं चन्दनादिना विलिप्य सुधूपितमादाय "ऐं ह्रीं श्रीं त्रिपुरार्घ्यपात्रं प्रतिष्ठापयामि" इत्यासने प्रतिष्ठापयेत् । विशेषद्रव्यैस्ततो गोपायसैः कादम्बर्या स्वयम्भुकुसुमेन कुण्डगोलोद्भवेनाऽऽद्येन पञ्चरलैः, तेषामेकतमेन वा कुङ्कुमचन्दनादिनाऽगुरुरक्तचन्दनमिश्रकल्केन सहितं प्रसूनाक्षतैर्विशेषार्घ्यपात्रं पूरयेदिति ।

ऐं क्लीं सौः अं सूर्यमण्डलाय द्वादशकलात्मने अर्घ्यपात्राय नम इति सम्पूज्य कलाद्वादशकं पात्राभ्यन्तरे वृत्ताकारेण दक्षिणावर्तेन पूजयेत् । यथा—ऐं ह्रीं श्रीं कं तपिनी कलाश्रीपादुकां पूजयामि । ऐं ह्रीं श्रीं खं तापिनी[कलाश्री] पादुकां पूजयामि । ऐं ह्रीं श्रीं गं रोधिनीकला[श्री]पादुकां पूजयामि । ऐं ह्रीं श्रीं घं भोगदायिनी[कलाश्री]पादुकां पूजयामि । ऐं ह्रीं श्रीं ङं कलिनी[कलाश्री]पादुकां पूजयामि । ऐं ह्रीं श्रीं चं शोषिणी-

हेमादीनि बुभुक्षूणां [1]महाशङ्खं तु मोक्षदम् ॥ इति ।

[2]एतेषां हेमादीनामेकतमं रमणीयमर्घ्यपात्रमस्त्रेण प्रक्षाल्य चन्दनादि[3]ना विलिप्य प्रकृष्टधूपेन धूपयेत् । [ततो] विशेषद्रव्यैः [4]स्वाङ्गोद्भवैर्महापललैः कादम्बर्या स्वयम्भुकुसुमेन [5]कुण्डगोलोद्भवेन[6] नालाज्येन [7]वा पञ्चरत्नैः[8] कुङ्कुम-[मृगमद]चन्दनागरुरक्तचन्द[9]नमिश्रक[10]ल्कसहितैः प्रसूनाक्षतैर्विशेषार्घ्यपात्रं [11]प्रपूरयेदिति ।

अं [12]सूर्यमण्डलाय द्वादशकलात्मने त्रिपुरार्घ्यपात्राय नम इति संपूज्य कला-द्वादशकं पात्राभ्यन्तरे वृत्ताकारेण दक्षिणावर्तेन पूजयेत् ।

[13]ह्रीं श्रीं तपनीपादु.. साधनी.. बोधनी.. कलिनी.. शोषणी.. वरेण्या .. आकर्षणी.. धिष्ण्या.. विष्णुविद्या.. ज्योत्स्ना.. हिरण्यदापादु. ।

---

[कलाश्री]पादुकां पूजयामि । ऐं ह्रीं श्रीं छं वरेण्या[कलाश्री]पादुकां पूजयामि । ऐं ह्रीं श्रीं जं आकर्षणी[कलाश्री]पादुकां पूजयामि । ऐं ह्रीं श्रीं झं भीष्मा[कलाश्री]पादुकां पूजयामि । ऐं ह्रीं श्रीं ञं विष्णुविद्या[कलाश्री] पादुकां पूजयामि । ऐं ह्रीं श्रीं टं ज्योति-रत्ना[कलाश्री]पादुकां पूजयामि । ऐं ह्रीं श्रीं ठं हरिण्या[कलाश्री]पादुकां पूजयामि ।

ततः सद्वितीयेन विशेषजलेन पात्रमापूर्य मूलाद्येन परिशोध्य मूलमध्येन सन्दीप्याकृष्य परामृतपदं नीत्वा प्रवहणनाड्या धेनुमुद्रयान्तरुल्लसिततयाऽमृतधारया तार्तीयं बीजं जपन् परिपूर्य ऐं ह्रीं श्रीं मं सोममण्डलाय षोडशकलात्मने त्रिपुरार्घ्याय नम इति सम्पूज्य तदुपरि वृत्ताकारे वामावर्तेन कलाषोडशकमर्चयेत् । यथा—

ऐं ह्रीं अमृताकला[श्री]पादुकां पूजयामि । [ऐं ह्रीं श्रीं] मानसीकला[श्रीपादुकां पूजयामि] । ऐं ह्रीं श्रीं तुष्टि[कलाश्री]पादुकां पूजयामि । ऐं ह्रीं श्रीं पुष्टि-[कलाश्री]पादुकां पूजयामि । ऐं ह्रीं श्रीं प्रीति[कलाश्री]पादुकां पूजयामि । ऐं ह्रीं श्रीं

---

१. मुमुक्षूणां महाशङ्खजम्– क.घ.ङ. । २. 'एतेषां .... धूपयेत्' नास्ति– ख. । ३. दिनोपलिप्योत्कृष्टधूपेन संधूपयेत्– घ.ङ. । ४. नमो असमसपललः कामं चर्या स्वयम्भु– क., आमग्नये कादम्बर्या– घ. ङ. । ५. 'कुण्डगोलोद्भवेन' नास्ति– घ.ङ. । ६. वेनाद्येन पञ्च– क. । ७. 'वा' नास्ति– घ.ङ. । ८. नैरेषामेकमनेन च कुङ्कुम– क., लैर्वा एषामेकतमेन कुङ्कुम– घ.ङ. । ९. नकर्पूरमिश्र– घ.ङ. । १०. कल्केन सहितं– क. । ११. पूजयेत्– ख. घ. ङ. । १२. 'अं सूर्य तत्पात्रस्थं जलं' (पृ.३२) नास्ति– ख., 'अं' नास्ति– घ.ङ. । १३. 'ह्रीं श्रीं .... ण्यदापादु' इत्यस्य स्थाने 'ऐं ह्रीं श्रीं कं भं तपन्यै नमः, ३ खं बं ता[पि]न्यै नमः, ३ गं फं धूम्रायै नमः, ३ घं पं मरीच्यै नमः, ३ ङं नं ज्वालिन्यै नमः, ३ चं धं रुच्यै नमः, ३ छं दं मुखमायै नमः, ३ जं थं भोगदायै नमः

[१]ततः सद्वितीयेन विशेषजलेन पात्रमापूर्य [२]तत्पात्रस्थं जलं मूलाद्येन [३]परिशोध्य मूलमध्येन सन्दी[४]प्याकृष्य परामृतपदं नीत्वा प्रवहणनाड्या धेनुमु[५]द्रयाऽन्तरुल्लसित[६]याऽमृतधारया तार्तीयं बीजं जपन् [७]परिपूर्य सौः डं वं सोममण्डलाय षोडशकलात्मने [८]त्रिपुरार्घ्याय नम इति सम्पूज्य [९]तदुपरि वृत्ताकारेण वामावर्तेन कलाषोडशकमर्चयेत् । [१०]यथा—

[११][ह्रीं श्रीं]अं अमृता पादु., ह्रीं श्रीं आं मानसी(दा ?)पादु, ह्रीं श्रीं इं पुष्टि., ह्रीं श्रीं ईं तुष्टि., ह्रीं श्रीं उं प्रीति., ह्रीं श्रीं ऊं रति. ह्रीं श्रीं ऋं ह्रीं, ह्रीं श्रीं ॠं श्रीः, ह्रीं श्रीं लृं स्वधा., ह्रीं श्रीं लॄं रात्रि., ह्रीं श्रीं एं ज्योत्स्ना., ह्रीं श्रीं ऐं हैमवती., ह्रीं श्रीं ओं छाया, ह्रीं श्रीं औं पूरणी., ह्रीं श्रीं अं वामा., ह्रीं श्रीं अः अमापादु. । पुनस्तस्मिन् पञ्चरत्नबीजानि चतुर्दिक्षु मध्ये च विन्यसेत् । यथा—ग्लुं स्लुं प्लुं म्लुं न्लुं इति ।

[१२]तन्मध्ये बालार्कसंकाशं[१३] त्रिकोणं संचिन्त्य तन्मध्ये आद्यवर्णबिन्दुनादरूपकामकलां सम्पूर्णं शशिमण्डलामृतं प्रस्रवन्तीं संचिन्त्य [१४]तत्र त्रिकोणं परितो

---

रति[कलाश्री]पादुकां पूजयामि । ऐं ह्रीं श्रीं ह्रीं [ः कलाश्री]पादुकां पूजयामि । ऐं ह्रीं श्रीं श्री[ः कलाश्री]पादुकां पूजयामि । ऐं ह्रीं श्रीं स्वधा[कलाश्री]पादुकां पूजयामि । ऐं ह्रीं श्रीं ज्योत्स्ना[कलाश्री]पादुकां पूजयामि । ऐं ह्रीं श्रीं हैमवती[कलाश्री]पादुकां पूजयामि । ऐं ह्रीं श्रीं सुपूरणी[कलाश्री]पादुकां पूजयामि । ऐं ह्रीं श्रीं वामा[कलाश्री]पादुकां पूजयामि । ऐं श्रीं पूर्णा[कलाश्री]पादुकां पूजयामि । ऐं श्रीं पूर्णामृत[कलाश्री]पादुकां पूजयामि । पुनस्तस्मिन् पञ्चरत्नबीजानि चतुर्दिङ्मध्ये च विन्यसेत् । यथा—ग्लूं स्लूं प्लूं म्लूं न्लूं इति ।

---

झं तं विश्वायै नमः, ३ ञं णं बोधिन्यै नमः, ३ टं ढं धारणायै नमः,३ ठं डं क्षमायै नमः'—घ.ङ. ।

१. 'ततः' नास्ति—घ.ङ. । २. 'तत्पात्रस्थं जलं' नास्ति—घ.ङ. । ३. विशोध्य—घ.ङ. । ४. प्याकर्ष्य परा—क., प्य मूलान्तेन धेनुमुद्रया—घ.ङ. । ५. मुद्रान्त—ख., 'मुद्रया .... जपन्' इत्यस्य स्थाने 'मुद्रया जपं'—घ.ङ. । ६. तया ह्रीं श्रीं तर्तीयं—ख. । ७. 'परि .... सोम' इत्यस्य स्थाने 'श्रीत्रिपुरार्घ्यामृताय नमः सुधयापूर्य पुनः ह्रीं श्रीं उं सोम—ख., परिपूर्य षोडशकलात्मने—घ.ङ. । ८. अर्घ्यामृताय नमः—ख., इतः पूर्वम्— 'सोममण्डलाय'—घ.ङ. । ९. 'तदु .... वर्तेन' नास्ति—ख., 'तदु ....कारेण' नास्ति—घ.ङ. । १०. 'यथा' नास्ति—घ.ङ. । ११. 'ऐ. ह्रीं श्रीं अं अमृतायै नमः,३ आं मानदायै नमः,३ इं उषायै नमः,३ ईं तुष्ट्यै नमः,३ उं पुष्ट्यै नमः,३ एं रत्यै नमः,२ ऋं धृत्यै नमः,३ ॠं शशिन्यै नमः,३ लृं चन्द्रिकायै नमः,३ लॄं कान्त्यै नमः,३ एं ज्योत्स्नायै नमः, ३ ऐं श्रियै नमः, ३ ओं प्रीत्यै नमः, ३ औं अङ्गदायै नमः,३ अं पूर्णायै नमः,३ अः पूर्णामयायै नम इति कलाषोडशकमतः'—घ. ङ. । १२. 'तत्' नास्ति—ख. । १३. काशां त्रिकोणरूपिणीमासवाकृतिं शक्तिं सञ्चिन्त्य—ग. । १४. ततः—ख., 'तत्र' नास्ति— ग.घ.ङ. ।

वामावर्तेन षोडशस्वरान् लिखित्वा[१] श्रीनवात्मानमुच्चार्य आनन्दभैरवाय वौषडिति तद्बिन्दुभिस्तदेव सन्तर्पयेत्। नवात्मोद्धारो[२] यथा—[३]हंसपरावर्तकालधराद्रा[४]वानल-श्वसनवाम[५]कर्णबिन्दुभिः। महामुद्रयाच्छाद्य स्पृशन् मूलविद्यामर्घ्यममृतीकरोमी-त्यन्तं सप्तवारमावर्त्य दि[६]व्यास्त्रेण रक्षां कृत्वा कवचेनावगुण्ठ्य नेत्रे[७]णाप्लाव्य धेनु-मुद्रां योनिमुद्रां च प्रदर्श्य [८]धूपेन संधूप्य चरुं निवेदयेत्। अयमेव [९]कुम्भस्थापनविधिः।

ते[१०]नार्घ्यजलेनात्मानं यागभुवं पूजोपकरणानि [११]चाभ्युक्ष्य न्यासजातं विद-धीत। [१२]कुम्भमेखलायां ब्रह्माण्याद्यसिताङ्गादियुग्मं संपूज्य चरुनिवेदनमिति केचित्। एवं साधिता[१३]र्घ्येण देवता[१४]सन्तर्पणं कृत्वा गुरुदेवता[१५]च्छिष्टमात्मसात्[१६]कुर्यात्। त[१७]दुक्तम् **उदयाकरपद्धत्याम्**—

असंस्कृतं [१८]वृथा पानं संस्कृताद् भैरवः स्वयम्।
चक्रपूजार्चने शस्तं मन्त्रसिद्धिकरं परम्[१९]॥
असंस्कृतं [२०]पशोः पानं कलहोद्वेगपापकृत्।
संस्कृतं सिद्धिजनकं प्रायश्चित्तादिशोधनम्॥
संस्कारसंस्कृतान्मद्याद् दत्तात् तुष्यन्ति देवताः।
मन्त्राणां स्फुरणं तेन महापातकनाशनम्॥

---

१. त्वा .... डासनश्री–ख.। २. त्मोच्चारो–क.। ३. हसौ–ग.। ४. रार्द्रवा–ख., राचन्द्रवह्निश्वसन–ग.। ५. मर्मबिन्दुभिः–ख.घ.ङ., वर्त्मबिन्दुभिः–ग.। ६. देव्यस्त्रेण–ख.ग.। ७. णाप्याय्यत्वेन धेनु–क., णापूर्य षडङ्गन्यासक्रमेण संपूज्य धेनु–ग.। ८. धूपेन संपूज्य चरुं–क., धूपं दीपं चरुं–ग.। ९. अर्घ्यस्थापन–ग.। १०. तेनात्मानं–ख.। ११. च प्रोक्ष्य–घ.ङ.। १२. 'कुम्भ .... केचित्' नास्ति–ख.ग.। १३. तार्घ्येणैव–ख.ग.। १४. देहसन्तर्पणं–ग.। १५. देवोत्सृष्ट–क., देवोच्छिष्ट–ग.। १६. सात्कृत्वा–ग.। १७. 'तदु .... त्याम्' इत्यस्य स्थाने 'तदुक्तम्'–ख.। १८. पशोः पानं संस्कृतं भैरवः–ग.। १९. शुभम्–ख.घ.ङ.। २०. वृथापानं–ग.।

[1]आयुःश्रीकान्तिसौभाग्यं ज्ञानं संस्कृतपानतः।
[2]अष्टैश्वर्यं खेचरत्वं पतनं विधिवर्जनात् ॥[3]

[4]वर्ज्य[5]द्रव्यमपि[6] **तत्रैवोक्तम्**[7]—

नष्टैः पर्युषितैश्चै[8]व दुर्गन्धै[9]र्गन्धवर्जितैः।
हेतुभिः परपात्रस्थैस्त[10]र्पणं निष्फलं भवेत् ॥
स्वपात्रस्थितं हेतुं[11] [न दद्यात् [12]भैरवाय च।
दत्ते च सिद्धिहानिः स्यादि] त्याज्ञा पारमेश्वरी ॥

[पानविधिरपि [13]**तत्रैव** [14]कथितः। [15]यथा—

कृत्वा मन्त्रतनुं स्मरेद् गुरुपदं देवीं [16]परां चिन्मयीं
पश्चात् पात्रवरं पलासवभृतं[17] दीपैर्गुडाज्यो[18]ज्ज्वलैः।
पुष्पार्घ्यादि[19]सुमिश्रितं रविनिभं मोहान्धकध्वंसकं
ये [20]सञ्चिन्त्य पिबन्ति यान्ति खलु ते भुक्तिं च मुक्तिं पराम् ॥]

[21]**तत्रैव** द्रव्यविशेषोऽपि[22] पृथक् पृथक् फलतो[23] निरूपितः[24]।

[25]तद्यथा—

---

१. अर्थं–क.। २. अक्षैः स्वयं–क.। ३. इतः परं 'असंस्कृतं पशोः (वृथा) पानं संस्कृताद् भैरवः स्वयम्। संस्कारसम्भूता देव सर्वसिद्धिः प्रजायते ॥ एवं साधितार्घ्येण देवतासन्तर्पणं कृत्वा गुरुदेवोच्छिष्टमात्मसात्कुर्यात्। तदुक्तम्– चक्रपूजार्चने शस्तम्'–घ. ङ., इतः परम् 'तत्रैव द्रव्यविशेषोऽपि ....' पाठः प्रारभ्यते–घ. ङ.। ४. 'वर्ज्यद्रव्यमपि .... पारमेश्वरी' नास्त्यत्र–ख. ग. घ. ङ., पाठोऽयमग्रे वर्तते।.५. मद्यं–ख.। ६. 'अपि' नास्ति–ग.। ७. इतः परम् 'यथा'–ग.। ८. र्वापि–ख. ग., श्चापि–घ. ङ.। ९. न्धिगन्ध–ग.। १०. स्तर्पितं–ख.ग.। ११. इतः परम् 'न दद्यात् .... हानिः स्यात्' नास्ति–क.। १२. कस्यचित् प्रिये–घ.ङ.। १३. तथैव–ग.। १४. कलितं–ख.। १५. 'यथा' नास्ति–ख. ग.। १६. कलां–ख. घ. ङ.। १७. युतं–घ. ङ.। १८. द्यो–ग. घ. ङ.। १९. सुमन्त्रितं–ग. घ. ङ.। २०. संविद्य–ख.। २१. तत्र–क.। २२. 'अपि' नास्ति–क. ग. घ. ङ.। २३. दो–ग. घ. ङ.। २४. नियतः–क.। २५. यथा–ख., 'तद्यथा' नास्ति–ग., तथा–घ. ङ.।

गौडी पिष्टभवा[1] च तालतरुजा द्राक्षी च माध्वी तथा
खर्जूरी नवनालिकेरजनिता गौडी च भोगप्रदा।
पैष्टी सिद्धिषु तालजाखिलविधौ[2] द्राक्षी च राज्यप्रदा
माध्वी [3]मुक्तिकरी विपक्षशमनी खर्जूरिकाद्याश्रयेत्[4] ॥
चरुकं सिद्धिदं प्रोक्तं दीपो ज्ञानप्रकाशकः[5]।
पानात् परपदप्राप्तिः कौले त्रितयमुत्तमम्[6] ॥ [7]इति।
[8]मद्यमैथुनमांसादिचरुभोगादिसाधनम्।
शैवे स्रोते विशेषेण शाक्ते चैव महत्फलम् ॥
[1]येनैव विषखण्डेन म्रियन्ते सर्वदेहिनः।
तेनैव विषखण्डेन विषज्ञो नाशयेद्विषम् ॥

तत्राग्निकलानामादौ यादिवर्णदशकं योजयेत्। सूर्यकलानामादौ कभादि-ठडान्तान् वर्णान् योजयेत्। सोमकलानामादौ षोडशस्वरान् योजयेत्।

[9]द्विजो न पूजयेन्मद्यैरिति केचित् प्रचक्षते।
देवतातर्पणं कुर्यात् स्वयं तत्र पिबेद् द्विजः ॥
पानादेरागमप्राप्तेर्न विधानं निषेधनात्।
तस्मादसूत्रहानिः स्यादेवमाद्यं प्रचक्षते ॥

१. वृक्ष– क., पैष्ठ– घ. ङ.। २. शंसिताऽथ तरुजा– ग.। ३. 'मुक्ति' नास्ति– क.। ४. श्रजे– क.। ५. दायकः– घ. ङ.। ६. मीरितम्– ख.। ७. 'इति' नास्ति– क. ख. ग., इतः परम् 'वर्ज्यद्रव्य .... मुक्तिं पराम्' इत्यादिकमत्र विद्यते– ख. ग. घ. ङ.। ८. 'मद्यमैथुन .... वच्मि साम्प्रतम्' नास्ति– ख. ग. घ. ङ.। ९. 'द्विजो न .... वच्मि साम्प्रतम्' (पृ. ३६) नास्ति– ग.।

*1. श्लोकोऽयं बौद्धतन्त्रेष्वपि दृश्यते।*

पानशास्त्रं तु सामान्यं द्विजादन्यत्र तद्विदुः ।
आगमार्थविदः प्राहुर्ये वश्या मन्त्रसिद्धये ॥

[1]विप्राः क्षोणिभुजो विशस्तदितरे क्षीराज्यमध्वासवै-
स्त्वां देवि त्रिपुरे परापरकलां संतर्प्य पूजाविधौ ।
यं यं काममवेक्ष्यसे(ते) [स्थिरधियां तेषां त एव ध्रुवं]
तं तं काममवाप्नुवन्ति तरसा विघ्नैरविघ्नीकृताः ॥

इत्युक्तत्वात् । इमां विद्यां न सिद्ध्यन्ति । केन कारणेन ? स्वधर्मं त्यक्त्वा परधर्मं वर्तते य इति शिष्टाचारपरिग्रहाच्चायमधर्मः परिकीर्तितः ।

सौत्रामण्यां सुरा देया देवतोद्देशतोऽपि यत् ।
पानं तत्रापि नास्त्येव शास्त्रज्ञैः समुदीरितम् ॥

सिद्धास्त्वतिक्रमं कुर्युः सिद्धत्वादेव नेतरे ।
आमः कुम्भोऽम्बुनिक्षिप्तो विलीयेत न पक्वकः ॥

न निन्देन्मद्यमांसानि याज्ञीयानि कदाचन ।
प्रसङ्गादुक्तमेतत्तु प्रकृतं वच्मि साम्प्रतम् ॥

[१]आभ्यन्तरार्घ्यशो[२]धनं यथा— स्वशि[३]रःकपालमे[४]वाधारं कलाषोडशकलितं पूर्णेन्दुबि[५]म्बमेवार्घ्यं तदधःशक्तितेजसा विद्रुतं कृत्वा तेनाभ्यन्तरस्था देवतास्तर्पयेत् । तदुक्तं **क्रमस्तोत्रे**—

चिन्मृ[६]गाङ्कधवलच्युतामृतस्रा[७]वसंभृतमहार्घ्यपात्रतः ।
तर्पणं विततमस्ति [८]यत्सदा यत्तनोः परममस्ति तां नुमः ॥ [९]इति ।

१.अथाभ्य– ख. । २.साधनं– ख.ग.ङ. । ३.शिरसि कमले साधारं– ग. । ४.मेव साधारणं पात्रं कला– ख. । ५.बिम्बं सञ्चिन्त्य तदधः– ग. । ६.गाङ्गवपुश्च्युता– ख., गाङ्कधवले च्युता– ग. । ७.सद्रुति महा– ख., विद्रुत– ग. । ८.तत्सदीपस्ततोः– क., यः सदा यस्ततो– ग. । ९.'इति' नास्ति– ख. ।

*1. श्लोकोऽयं लघुस्तवे (श्लो. १४) दृश्यते ।*

[1]आन्तरार्घ्यपानपद्धतिविधिरुदयाकरपद्धत्यामुक्तो यथा[2]—

[3]यन्मां कुण्डलिनी[4] स्फूर्जत्सोमसू[5]र्यनिबन्धनात् ।
भि[6]न्दन्ती ब्रह्मणो ग्रन्थिं गच्छन्ती मध्यवर्त्मना ॥

छिन्दन्ती पाशजालानि ज्वलन्ती स्वेन तेजसा ।
विशन्ती पूर्णपीठं सा द्रावयन्ती[7] त्वमां कलाम् ॥

स्रावयन्ती सुधापूरं [8]प्लावयन्ती चराचरम् ।
तेनामृतेन दिव्येन तर्पयेद् [9]देवतां पराम् ॥ [10]इति ।

ब्रह्मद्वारादधोभागे [11]यंच्चान्द्रं पात्रमुत्तमम् ।
कलामृतेन संपूर्णं तर्पयेत् तेन [12]चेश्वरीम् ॥

[13]वस्त्रसंसक्तहस्तेन लोलां प्रोद्धृत्य कर्षयेत् ।
नित्यं वि[14]वर्धयेदेवं योग्या भवति लम्बिका ॥

[15]ऊर्ध्वं जिह्वाग्रसंस्पर्शाद् द्रावयेल्लम्बिकारसम् ।
तत्पिबेन्मधुपानं तु न त्वन्यां लौकिकीं सुराम् ॥

देवतामन्त्रतृप्त्यर्थं [16]मनस्युन्मनहेतवे ।
आसवं पीयते यत्नान्न[17] च लौल्यात्तु [18]कर्हिचित् ॥

---

१. आभ्यन्तरार्घ्यपात्रविधि–ख., अर्घ्यपात्रपद्धतिविधि–ग., आन्तरार्घ्यविधिरपि–घ.ङ.। २. 'यथा' नास्ति–ख.। ३. जन्मा–ख.ग.घ.ङ.। ४. नीं सूर्यः–ग.। ५. सूर्याग्निबन्धनात्–ख., सूर्यनिमण्डलात्–ग.। ६. ब्रह्मग्रन्थिं विभिन्दन्ती–ख., भिन्दन्ती ब्रह्मग्रन्थिया–घ. ङ.। ७. यन्त्युत्तमां–ख.। ८. प्राप–ख., स्राव–घ. ङ.। ९. 'देवतां . . . . तर्पयेत्' नास्ति–ग.। १०. 'इति' नास्ति–ख.। ११. यच्चन्द्रं–ख.। १२. खेचरीम्–ग., खेचरम्–घ.ङ.। १३. वस्त्रज्ञसंयुक्तहस्तेन लोलात् प्रोद्गृह्य वर्षयेत्–ख., 'हस्तेन' इत्यस्योपरि 'त्रैपुरी' इत्यस्यां मातृकायां दृश्यते। १४. विवर्तयेद्देवं–ग.। १५. ऊर्ध्व–ख.ग.। १६. नः स्फुरण–ग.। १७. न्न तु-ख., ल्लोल्यार्थं न तु-ग.। १८. कदाचन–घ.ङ.।

चन्द्रार्कानलसंघट्टाद् गलितं यत्परामृतम्।
तेनामृतेन दिव्येन तर्पयेत् त्रैपुरीं पराम्॥

शिवशक्त्युपमर्दाच्च[1] यज्जातममृतं परम्।
तत्पिबेन्मधुपानं[2] यत् संसारार्णवतारकम्॥
सामरस्यं भवेत्तेन तथाऽऽनन्दो महान् भवेत्।
[3]अन्तःस्वानुभवोत्साहो [4]मनोवाचामगोचरः॥

तथा **लघुचर्चाकुले**[5] श्लोकयुगलम्—

परमानन्दमद्येन यस्य चोन्मत्तता[6] भवेत्।
तन्मद्यं योगिभिः सेव्यं न मद्यं गौडपिष्टजम्[7]॥
[8]अक्षजं च पशुं हत्वा ज्ञानखड्गेन योगवित्।
भक्षयेदक्षजं[9] मांसं न [10]मार्गं मेषछागजम्॥

नो दोषोऽस्ति पले न चासवमखे[11] नो मैथुनक्रीडया
मद्ये चापि महेश्वरः स्वयमसौ तिष्ठत्यनिष्टापहः।
श्वासोऽधः स च शक्तिरूर्ध्वपवनः साक्षात् शिवः प्रोच्यते[12]
त्वन्योन्यं शिवशक्तिजं हि [13]मथनं व्याप्तं जगत्तेन तत्[14]॥

**॥ [15]इति श्रीविद्यानन्दविरचितायां श्रीत्रिपुरसुन्दरीपद्धत्यां**
**[16]ज्ञानदीपविमर्शिन्यामर्घ्यसाधनपद्धतिर्नवमी[17]॥**

■

---

१.क्त्युपसंपर्वाद्—ग.,क्त्यव—घ.ङ.। २.न्महापानं—घ.ङ.। ३.अतश्चानु—क.'अन्त . . . भवेत्' नास्ति—ग.,अथ स्वानु—घ.ङ.। ४.मतो—ख.। ५.चर्या—ख.घ.ङ.। ६.मनता—ख.। ७.पिष्टजा—क., पैष्टिकम्—ख.। ८.'जलजं'—क.टि., अक्षयं—ख.,अक्षतं—ग.। ९.यं—ख.ग.। १०.मृगं—क.ग.। ११.रसैः—ख.,रसे—ग.घ.ङ.। १२.प्रोद्यते—क.ख.। १३.मिथुनाद्—ग.,मिथुन—घ.ङ.। १४.वै—ख.। १५.इत्यर्घ्यसाधनपद्धतिर्नवमी—ख.,इति श्रीविद्यानन्दनाथ—घ.ङ.। १६.'ज्ञानदीपविमर्शिन्यां' नास्ति—ग.घ.ङ.। १७.दशमी—ग.।

# मन्त्रोद्धारपद्धतिः

[१]अथ मन्त्रो[२]द्धारो यथा—

[1]प्राणो देवी सखाद्यो दशशतनयनः शम्भुरग्निस्त्रिमूर्तिः
[३]शून्यश्च[४]न्द्रार्धनादो [५]हिमरुचिरुचिरो वाग्भवोऽसावकीलः ।
[६]सोऽयं ध्यानाज्जपाद्वा मुखकुहरलसद्गद्यपद्यप्रबन्ध-
श्छन्दोलङ्कार[७]तर्कागमविशदमतिर्वाक्पतिर्जायते च[८] ॥

त्रिस्थाने जननस्थितिक्षयतया यच्छैव[९]बीजत्रयं
[१०]सृष्टेस्तत्र शिवस्य शक्तिमदनाच्चैन्द्रं तु बीजं स्थितेः ।
संहारस्य तथा[११]नलस्तदनु खं [१२]चन्द्रस्त्रिमूर्तिध्वनी
रक्तं ध्यायति कामराजकमिदं यस्तस्य वश्यं जगत् ॥[१३]

सोमः कामश्च शक्रः पशुपतिरनलो वैष्णवी [१४]पूर्णचन्द्रो
नादः शक्त्याख्यबीजं [१५]तदिदमतिलसत्क्षीरकुन्देन्दुगौरम् ।
[१६]यो ध्यायेद्ध्येतद[१७]न्तर्भवति हि [१८]निखिला खेचरी दिव्यसिद्धि-
[१९]र्देव्या लोकैकमात्रा[२०] उपशमति च विषं याति कैवल्यतां सः ॥

---

१. 'अथ मन्त्रोद्धारो' इत्यादिकः 'एवं मूलविद्योद्धारः' इत्यन्तः पाठोऽग्रे स्थापितः– ख., मूलविद्योद्धारस्तूदयाकरपद्धत्यामुक्तो यथा– ख., 'अथ' नास्ति– ग.। २. द्धार उच्यते– घ.ङ.। ३. शूर्प– ग.। ४. न्द्रार्धनादाः– ख., न्द्रार्कनादो– घ.ङ.। ५. श्रुतिरुचि– ख., शिखिशुचि– घ.ङ.। ६. अस्य– ख.। ७. रदीप्ताग– ख.। ८. सः– ख.। ९. बीजान् त्रिधा– ख., बीजद्वयं– ग.। १०. सृष्ट्यः स्पष्टमयोऽपि– क., बीजं शक्तिमयोऽपि– घ.ङ.। ११. नभ– ग.। १२. शून्यः– ख.। १३. इतः परम्– शक्तिबीजप्रकारमेव– ग.। १४. शून्यचन्द्रौ– ख.। १५. गदित– ग.। १६. ये ध्यायन्ते भजन्ते– घ.ङ.। १७. न्तः प्रभवति नि– ख.। १८. सकलं साधकेन्द्रस्य तस्याः– ख.। १९. दिव्या– ग.। २०. त्रेऽभ्युप– ख., त्रादुप– ग.घ.ङ.।

---

*1. अत्रत्यं पङ्क्तिद्वयं नित्या. ऋजु. (पृ. १११) त्रिपुरसुन्दरीकल्पलताश्लोकत्वेनोद्धृतम् ।*

ए[१]वं मूलविद्योद्धारः[२]। अथ करशुद्ध्याद्यावाहनान्तविद्यानामुद्धारं दर्शयि[३]ष्यामि। वर्णक्रमस्या[४]स्य आद्य[५]द्वितीया[६]वबिन्दुकौ स[७]बिन्दुकौ वा वाग्भव-कामराजौ। चन्द्रौकारविसर्गैः शक्तिबीजम्। तदुक्तमुदयाकरे[८]ण यथा[९]—

स[१०] च भेदद्वयेनास्ति [तदुक्तं] **रुद्रयामले**।
[1]त्रिकोणमध्ये यत्सूर्यं[११] शृङ्गाटाकृतिसंस्थितम्॥
तत्रारूढमचैतन्यं वा[१२]ग्भवं तदिदं प्रिये।
तदूर्ध्वं जं[१३]ननस्थानात् संस्थिता शक्तिरुत्तमा॥
ध्वनिरूपा तु सा देवी द्वि[१४]भुंजा परिवेष्टिता।
कामराजमिदं भद्रे गोपनीयं प्रयत्नतः॥

**त[१५]थाद्य[१६]वर्णत्रिंशिकायामाद्यवर्णस्यैव वाग्भवत्वमुक्तम्**—

अबिन्दुमविसर्गं च अकारं जपतो महान्।
उदेति देवि सहसा ज्ञानौघः पारमेश्वरः॥

एषा कर[१७]शुद्धिकरी विद्या। एओमध्यगतं बीजं सबिन्दुकम[१८]बिन्दुकं वा[१९] वाग्भवम्। अङ्गन्यासविद्यायां क[२०]वर्गाद्यल[२१]कारचतुर्थस्वरानुस्वारैः कामराजम्। शक्तिबीजम[२२]त्रापि पूर्ववत्। करशुद्धिविद्याऽन्ति[२३]मा। एषा अङ्गन्यासविद्या।

१.एष–ख.। २.इतःपरम्—'मूला ऽङ्गविद्या या भूता' इत्यादिकः 'सम्यग् विद्याफलाप्तये' इत्यन्तः २२-३८ पत्रेषु स्थितः गपाठस्तृतीयपरिशिष्टे। ३. ष्यामः–ख.ग.। ४. 'अस्य' नास्ति–ख.। ५.द्यबीजस्य–ग.। ६.यौ वा–क.,यावबिन्दुकौ वा–ग.। ७.'सबिन्दुकौ वा' नास्ति–ख.ग.। ८.करैः–ख.। ९.'यथा' नास्ति–ग.। १०.सा–ख.ग.घ.ङ.। ११.इतः परं 'द्वादशाक्षरं सूर्यं' इत्यनावश्यकः पाठः–क.। १२.तदिदं वाग्भवं–ग.घ.ङ.। १३.जन्मनः–ग.,जन्मनस्थान–ख.घ.ङ.। १४.द्विकुब्जा–ख.घ.ङ.। १५.'तथा ....पारमेश्वरः' नास्ति–ख.। १६.सुवर्णत्रिशङ्का(त्रिंशिका)यामप्याद्य–ग.घ.ङ.। १७.'करशुद्धिकरी' इत्यस्य स्थाने 'सिद्धिकरी' पाठः–ग.। १८.'अबिन्दुकं वा वाग्भवम्' नास्ति–ख.। १९.'वा' नास्ति–ग.। २०.'कवर्गाद्य.... नुस्वारैः' इत्यस्य स्थाने 'वाग्भवम्। मादनच्छक्रचतुर्थस्वरबिन्दुभिः' –ख.। २१.कलातुरीय–ग.। २२.मन्त्रोऽपि–ख.। २३.न्तिममेव–ख.,तिमम्–३ग.।

*1. श्लोका एते मुद्रिते रुद्रयामले न दृश्यन्ते।*

[1]आत्मरक्षाविद्यायामादिबीजद्वयमङ्गन्यासविद्या[2]वत्। प्राणचन्द्रौकारबिन्दु-विसर्गैरन्तिमबीजमुद्धरेत्। [3]एषा आत्मरक्षाविद्या।

शिवरेफमायाबिन्दुभिरे[4]कमपरद्वयमात्मविद्यान्तमे(वदे)व। एषा देव्यात्मा-सनविद्या। शिवैकारबिन्दुभिरे[5]कं शिवकामधरा[6]चतुर्थस्वरबिन्दुभिर्मध्यमं [7]शिवद्वयचन्द्रौकारबिन्दुविसर्गै[8]स्तार्तीयमिति [9]चक्रासनविद्या।

शिवचन्द्रैकारबिन्दुभि[10]राद्यं शिवचन्द्रक[11]कारलकारचतुर्थस्वरबिन्दुभि[12]र्मध्यमं [13]शिवचन्द्रौकारबिन्दुविसर्गै[14]स्तार्तीयम्। एषा [15]सर्वमन्त्रासनविद्या।

आद्यबीजद्वयं देव्यात्मासनविद्यावदेव[16]। [17]ऐकारवकार[18]शिवचन्द्राकार-बिंन्दुभिस्तार्तीयम्। एषा साध्यसिद्धासनविद्या।

व्योमेन्दुवह्न्यधरबिन्दुभिरेकमन्य-
द्रक्ताच्छकेन्द्रशिखिभिः सरमार्धचन्द्रैः।
अन्यद् द्युशीतकरपावकमन्वमन्तै-
र्बीजैरमीभिरुदिता [19]सकलेष्टदा स्यात्॥

(प्र. सा. ९.३)

---

१. 'आत्मरक्षा .... आत्मरक्षाविद्या' नास्ति–ग.। २. वह्निदध्यात् प्राणचन्दौ–ख.। ३. 'एषा' नास्ति–क.। ४. रेकमपर .... एषा' इत्यस्य स्थाने 'राद्यं कामधराचतुर्थस्वरबिन्दु-भिर्मध्यमं शिवचन्द्रौकारबिन्दुविसर्गैस्तार्तीयमिति' इति–ख.। ५. राद्यं–ख.। ६. तुर्य–ख.। ७. शिवचन्द्रशिवेचन्द्रौ–ग.। ८. स्तृतीयम्–ख. ग., इतः परं 'इति' नास्ति–ख. ग.। ९. एषा चक्रा–ख. ग., 'चक्रा .... स्तार्तीयम्' नास्ति–ग। १०. राढ्यं–क.। ११. 'ककारलकार' इत्यस्य स्थाने 'कामधरा' इति–ख.। १२. द्वितीयं–ख.। १३. शिवचन्द्रशिवचन्द्रौ–क.। १४. स्तृतीयम्–क.। १५. 'सर्व' नास्ति–क. ग.। १६. इतः परं 'इति चक्रासनविद्या' इत्यना-वश्यकः पाठः प्रतीयते–क.। १७. पकारावकारा–क., एव कारंकार–ग.। १८. शक्र-बिन्दुभिः– ख. ग.। १९. त्रिपुरेति विद्या–प्र.।

एषा आवाहनविद्या[१]। अथवा[२] आवाहनविद्यायामपि तार्तीये[३] विशेषोऽस्ति शिवचन्द्ररेफौकारविसर्गैः ॥

॥ इति श्रीविद्यानन्दनाथविरचितायां श्रीत्रिपुरसुन्दरीपद्धत्यां ज्ञानदीपविमर्शिन्यां[४] मन्त्रोद्धारपद्धतिर्दशमी[५] ॥

■

१. इतः परम्—'अथ मन्त्रोद्धारो यथा .... एवं मूलमन्त्रोद्धारः' इत्यादिक पाठोऽत्र स्थापितः–ख.। 'यथा'–ग.। २. 'अथवा ....दशमी' इत्यस्य स्थाने 'एष मूलविद्योद्धारः। तथा रससारसंग्रहहंसपारमेश्वरोक्तलयप्रकारौ यथा। इत्युद्धारपद्धतिर्दशमी'–ख.। ३. तृतीये–ग.। ४. 'ज्ञानदीपविमर्शिन्यां' नास्ति–ग.। ५. रेकादशी–ग.घ.ङ.।

# न्यासपद्धतिः

[1]अथ न्यासमाचरेत्, यथा—

[2]एवं विन्यस्य देवेशीं स्वाभेदेन विचिन्तयेत् ।

ततश्च करशुद्ध्यादिन्यासं कुर्यात् समाहितः ॥

(यो. हृ. ३.८१)

## करशुद्ध्यादिन्यासः

अं मध्यमयोः । आं अनामिकयोः । सौः कनिष्ठयोः । अं अङ्गुष्ठयोः । आं तर्जन्योः। [[3]सौः करतलयोः] । ऐं क्लीं ह्सौः महात्रिपुरसुन्दरि आत्मानं रक्ष रक्ष इति हृदि । ऐं क्लीं सौः अस्त्राय फट् इति[4] तर्जन्यङ्गुष्ठस्फोटनेन दश दिशो बन्धयित्वा शक्तिमुत्थाप्य ब्रह्मरन्ध्रं नीत्वा परामृतास्त्रावं विधायासनषट्कं न्यसेत् ।

## आसनषट्कन्यासः

यथा ह्रीं[5] क्लीं स्हौः श्रीत्रिपुरसुन्दरि अमृतार्णवासनाय नमः [6]पादयोः । ह्रीं[7] क्लीं स्हौः श्रीत्रिपुरसुन्दरि पोताम्बुजासनाय नमो [8]जान्वोः । ह्रीं क्लीं [9]स्हौः श्रीत्रिपुरसुन्दरि देव्यात्मासनाय नम [10]ऊर्वोः[1] । [हैं ह्क्लीं ह्सौः श्रीत्रिपुराश्रीसर्वचक्रासनाय नमः । हैं ह्स्क्लीं ह्सौः श्रीत्रिपुरामालिनि सर्वमन्त्रासनाय नमः । ह्रीं क्लीं ब्लें श्रीत्रिपुरासिद्धे साध्यसिद्धासनाय नम इत्युभयपादजानूरु[स्फिग्गुदा]न्तराधारेषु षट्कं न्यसेत् ।

---

१. 'अथ ....तया' नास्ति– ग.। २. 'एवं ....समाहितः' नास्ति– ख.। ३. 'सौ ...लयोः' नास्ति– क.। ४. इतः परम्– 'पार्श्वद्वयादि'– ख.। ५. 'ह्रीं क्लीं स्हौः' इत्यस्य स्थाने 'अं आं सौः ऐं क्लीं सौः'– ख.। ६. 'पादयोः' नास्ति– ख.। ७. 'ह्रीं' इत्यस्य स्थाने 'ऐं'– ख.। ८. 'जान्वोः' नास्ति– ख.। ९. 'स्हौः' इत्यस्य स्थाने 'सौः'– ख.। १०. 'ऊर्वोः' नास्ति– ख.।

---

*1. इतः परं क-मातृकायां पृ. ४३-९२ पर्यन्तो ग्रन्थभागो नास्ति ।*

## कामकलान्यासः

ततस्तूभयकरमूलमध्याग्रेष्वाधारहृदयभ्रूमध्येषु विद्याबीजत्रयं विन्यस्य तुर्यबीजं ब्रह्मरन्ध्रे विन्यस्य तेनैव शीर्षादिपादान्तं व्यापकं न्यस्त्वा ब्रह्मरन्ध्रसहस्रारपद्मकर्णिकायामारक्तं पूर्णेन्दुबिम्बं सञ्चिन्त्य तन्मध्ये उदितादित्यसङ्काशं शृङ्गाटं संकल्प्य तन्मध्ये यन्त्रराजं स्मृत्वा तन्मध्ये कुलासनवाग्भवं समस्ताक्षरमयं परिभाव्य तन्मध्ये आद्यवर्णमनुरूपमनर्क(च्क)हार्धचन्द्रान्तरात्मकं बिन्दुद्वयं संकल्प्य तन्मध्यादुद्यन्तीं हार्धकलारूपां कुण्डलिनीं मूलशृङ्गाटमध्यपर्यन्तमविच्छिन्नतन्तुरूपां महाकामकलारूपिणीं स्थापयित्वा मूलाधारचतुर्दलकमलकर्णिकायामपि त्रिकोणं यन्त्रराजं वाग्भवमाद्यवर्णबिन्द्वन्तरन्तरमध्यादुद्यन्तीं वैश्वानरीं कलां मध्यममार्गेण भिन्दन्तीं ग्रन्थिसञ्चयं वञ्चयन्तीं महाकामकलां मृणालतन्तुवत् सूक्ष्मरूपामकुलकुलां मध्यस्थदण्डाकारतरण्डदण्डलिङ्गे प्रवेशयित्वा लिङ्गाकारया तया [1]परयोनिं मथित्वा निरन्तरनि[1]बद्धस्रवदमृतापूरेण पूरयित्वा तयोरेकनादरूपेणैक्यं संभावयेत् । तदुक्तं **क्रमस्तोत्रे**—

> अनुत्तरे[2]च्छोभयसामरस्याद्या मूर्तिराद्या प्रविभाति दीप्ता ।
> आनन्ददां हार्धकलार्धगर्भां तां नौमि शृङ्गाटवरासनस्थाम् ॥

तरलक्षण**माद्यव**र्णो[3]**त्रिंशिकायामुक्तम्**—

> [4]तरण्डं तरमध्यस्थं तरस्थं तरमध्यगम् ।
> तरण्डदण्डमध्यस्थं यो जानाति स कौलवित् ॥
> शीर्षपाणिचरणैर्विवर्जितं ह्यक्षयं भवरुजाहरं परम् ।
> यस्य हृत्स्थकुहरेषु वर्तते तेन मृत्युरपि भस्मसात्कृतः ॥

---

१. निबिडस्र– ग. । २. रस्थोभ– ग. । ३. वर्णकेनोक्तम्– ग. । ४. तरस्थं– ग. ।

---

*1. इतः परम्—'परयोनिं मथित्वा' इत्यत आरभ्य न्यासपद्धतिसमाप्तिपर्यन्तः पाठो ग-पुस्तकेऽपि दृश्यते ।*

शिवश्चैव तथा शक्तिः सामरस्यं तु मध्यमम् ।
एकीभूतं यदा काले तदा तद्वर्णमुत्तमम् ॥
शून्यात्[१] प्रसर उत्पन्नः [२]प्रसराद्यमकारकम् ।
अकाराद्विश्वमुत्पन्नं विश्वं यत् पञ्चधा स्थि[३]तम् ॥
स्थानध्यानविहीनो यो रूपोच्चारविवर्जितः ।
अनाहतो[४] नदत्यन्तर्मुखान्मुखपदोचितः ॥
[५]धामत्रयाद्विरहितो योगेशानां मुखे स्थितः ।
[६]सतां तु कथितं ताभिः स्वयमुच्चरते तु सः ॥
शून्याच्छम्भुस्ततः शक्तिः शक्तेर्धामत्रयात्मकम् ।
प्रभवेत [७]यतः सर्वं दीप्तं वर्णकदम्बकम् ॥
अनुत्तरं तदेवोक्तं सद्यः कौलिकसिद्धिदम् ।
[८]तारकं च तदेव स्याच्चन्द्रभास्कर[९]वह्निगम् ॥
[१०]तकारे सोमधामस्याद्यो रेफः स च भास्करः ।
दण्डव[११]ल्लसते वह्निरेकीभूतं [१२]तदाद्यकम् ॥

यन्त्रराजोद्धारोऽपि श्रीत्रिपुरार्णवे दर्शितः । [१३]यथा—

[1]कामयानं प्रकर्तव्यं मन्मथं कारयेत्तनुम् ।
कन्दर्पं मन्दिरं कृत्वा द्विधाभूतं च पार्वति ॥

१. त्परं समुत्पन्नं– ग. । २. प्रकाराद्य– ग. । ३. स्मृतम्– ग. । ४. तो ह्यनाद्यन्तमुखोन्मुखपदे स्थितः– ग. । ५. 'धाम .... स्थितः' नास्ति– ग. । ६. सत्यं– ग. । ७. ततः– ग. । ८. तदहं च न वेदस्या– ग. । ९. रमध्यगम्– ग. । १०. हकारे– ग. । ११. वद्ग्रहते– ग. । १२. तदात्मकम्– ग. । १३. 'यथा' नास्ति– ग. ।

*1. नित्या. अर्थ. (पृ. २४२) दृश्यते श्लोकद्वयमेतत् । कामं प्राणमिति सेतुबन्धस्थः पाठः (पृ. १६६) ।*

मकरध्वजं न्यसेद्[१] देवि षट्स्थाने तस्य सुव्रते ।
मोहनाभ्यन्तरे कृत्वा वे[२]ष्टयेत् तस्य मायया ॥ [इति ।]

[३]रसाधारं गुणरूपेण विभज्य त्रिबीजसंगतं कुर्यात् । [४]यथा—

[५]वसुदलाब्जयोस्तटित्प्रभं वाग्भवं डादिफान्तं कठाब्जयोः कामरादि-[६]सहक्षयोः शक्तिबीजं ध्यात्वा [७]आद्यवर्णपद्मयोः स्वस्ववर्णान्ते त्वैकारान्तं शिवशक्ति-वर्णकदम्बकं सञ्चिन्त्य [८]मध्यपद्मयोः स्वस्ववर्णान्ते त्वींकारान्तशिवशक्तिवर्ण-कदम्बकं सञ्चिन्त्यान्त्यपद्मयोरपि स्वस्ववर्णान्ते त्वौंकारान्तशिवशक्तिवर्ण-कदम्बकं सञ्चिन्त्य [९]मूलाधारादिब्रह्मरन्ध्रान्तं नवाधारेषु शून्यादि[१०]नवनादान् [सृष्टिक्रमेण] विन्यसेत् । [११]यथा—

**नवनादन्यासः**

[1]शून्यः स्पर्शस्तथा नादो ध्वनिर्बिन्दुस्तथैव च ।
शक्तिर्बीजाक्षरं चेति अष्टधाऽनाहतं स्मृतम् ॥

[१२]विकाराष्टकेन सहाऽविकृतो नादो नवमः ।

[[2]अविकृतनादाय नमः शिरसि, शून्याय नमो ललाटे, स्पर्शाय नमो भ्रूमध्ये, नादाय नमो नासिकायाम्, ध्वनये नमो वदने, बिन्दवे नमः कण्ठे, शक्तये नमो हृदये, बीजाय नमो नाभौ, अक्षराय नमो मूलाधारे ।]

---

१. न्यसेत्कोणे–ग. । २. वेष्टयित्वा तु–ग. । ३. शिरसा–ग. । ४. तद्यथा–ग. । ५. वसबला–ख. । ६. 'सह .... शक्तिबीजं' इत्यस्य स्थाने 'सर्ग हक्षकं मलयोः शक्तिबीजयोः शक्तिबीजं'–ग. । ७. 'आद्य .... कदम्बकं' इत्यस्य स्थाने 'आद्यपद्मे वर्णयोश्च स्वन्नर्णान्तं शिवशक्तिकदम्बकम्'–ग. । ८. 'मध्य .... सञ्चिन्त्य' नास्ति–ग. । ९. 'मूला .... धारेषु' इत्यस्य स्थाने 'मूलाधारस्वाधिष्ठानमणिपूरकानाहतविशुद्धलम्बिकाभ्रूमध्यललाटब्रह्मर-न्ध्रेषु'–ग. । १०. नादान् सृष्टिक्रमेण न्यसेत्–ग. । ११. 'यथा' नास्ति–ख. । १२. विकृतनादाष्टकेन–ग. ।

---

*1. नित्या. अर्थ. (पृ. ३६) श्लोकोऽयं दृश्यते । 2. अग्रे सर्वत्र सूक्ष्माक्षरेषु ग. पाठ ।*

अकुलकमले त्वहरसं[1]भरितमाद्यन्तसामरस्यादेकादशरूपं पश्यन्तीरंस[2]-भरितं स्मरेत्। एवं वर्णक्रमं[3] पद्मरागप्रभापुञ्ज[4]मिवाभ्यन्तरे कृत्वा[5] काम-कलाद्य[6]बिन्दुमाद्य[7]शृङ्गाटगलितं देवीरूपमस्यात्मनो वक्त्रं[8] परिकल्प्य तदधस्तात्[9] स्थितं तररूपबिन्दुद्वयं स्तनयुगं[10] ध्यात्वा तन्मध्ये[11] रेखारूपं सपरार्धं योनिं[12] परिकल्पयेत्। गुरुमुखेन मुखोपाङ्ग[13]माद्यबिन्द्वन्तर्गतं भुजचतुष्टयं स्तनरूप[14]बिन्दुद्वये सिद्धवत् कार्यम्। योनिरूपसपरार्धकलायां पादौ सिद्धवत् कार्यौ।

## आयुधन्यासः

एवमीं[15]काराक्षररूपमुखस्तनयोन्याख्यसर्वावयवं परमसौन्दर्य[मय]मात्मविग्रहं परिकल्प्य पाशाङ्कुशचापबाणान् देवीरूपस्यात्मनो भुजचतुष्टयेषु विन्यसेत्। यथा—

ह्रीं कामेश्वरीपाशाय नमः। क्रौं कामेश्वर्यङ्कुशाय नमः। थां कामेश्वरीचापाय नमः। यां रां लां वां सां कामेश्वरीबाणेभ्यो नमः। इत्यायुधन्यासमन्त्राः।

[ऐं ह्रीं श्रीं कामेश्वरीवशीकरणाय पाशाय नमो वामभुजोपरि, ऐं ह्रीं श्रीं कामेश्वरीस्तम्भनाय महाङ्कुशाय नमो दक्षभुजोपरि, ऐं ह्रीं श्रीं धं कामेश्वरीमोहनाय धनुषे नमो वामभुजे, ऐं ह्रीं श्रीं यां रां लां वां सां कामेश्वरीजृम्भणाय बाणाय नमो दक्षभुजे। इत्यायुधन्यासः।]

## मातृकान्यासः

वाग्भव[16]मायालक्ष्मीबीजादिकं(कां) मातृकां विन्[17]यसेत्। यथा[18]—

---

१. रक्षभ– ख.। २. न्तीह र स भिन्नां स्मरेत्– ग.। ३. वर्णकदम्बकं पद्म– ग.। ४. ञ्जमाभ्य– ग.। ५. ध्यात्वा– ग.। ६. लाब्जाख्यबिन्दु– ग.। ७. द्यन्तशृ– ग.। ८. मुखं– ग.। ९. 'तद .... रूप' इत्यस्य स्थाने 'तदधस्या स्थित वा रूपः'– ग.। १०. युगलं– ग.। ११. परमध्ये– ख.। १२. योनिरूपं परि– ग.। १३. पायमा– ख.। १४. रूपं– ग.। १५. एवं महामायाक्षर– ग.। १६. 'वाग्भव' नास्ति– ख.। १७. 'वि' नास्ति– ग.। १८. 'यथा' नास्ति– ग.।

[1]१कानननवृत्तद्व्यक्षिश्रुतिनोगण्डौष्ठदन्तमूर्धास्ये ।
दोःपत्सन्ध्यग्रेषु च पार्श्वद्वयपृष्ठनाभिजठरेषु ॥
हृद्दोर्मूलापरगलकक्षेषु हृदादि पाणिपादयुगे ।
जठराननयोर्व्यापकसंज्ञान्यसेदर्थाक्षरान् क्रमशः ॥

(प्र. सा. ७.४-५)

[ऐं ह्रीं श्रीं अं मूर्ध्नि ऐं ह्रीं श्रीं आं मुखवृत्ते, ३ इं ईं दक्षवामनेत्रयोः, ३ उं ऊं दक्षवामकर्णयोः, ३ ऋं ॠं दक्षवामनासापुटयोः, ३ लृं ॡं दक्षवामगण्डयोः, ३ एं ऐं अधरोष्ठदन्तयोः, ३ ओं औं अधऊर्ध्वदन्तपङ्क्त्योः, ३ अं मूर्ध्नि, ३ अः मुखे, ३ कं खं गं घं ङं दक्षभुजपञ्चस्थानेषु, ३ चं छं जं झं ञं वामभुजपञ्चस्थानेषु, ३ टं ठं डं ढं णं दक्षपादपञ्चस्थानेषु, ३ तं थं दं धं नं वामपादपञ्चस्थानेषु, ३ पं दक्षपार्श्वे, ३ फं वामपार्श्वे, ३ बं पृष्ठे, ३ भं नाभौ, ३ मं जठरे, २ यं हृदि, ३ रं दक्षांसे, ३ लं वामांसे, ३ वं कृकाटिकायाम्, ३ शं हृदयादिदक्षहस्ते, ३ षं हृदयादिवामहस्ते, ३ सं हृदयादिदक्षपादान्ते, ३ हं हृदयादिवामपादान्ते, ३ ळं नाभौ, ३ क्षं मस्तके । पुनः सर्वेण सर्वाङ्गव्यापकम् । इति मातृकान्यासः ।]

## अङ्गन्यासः

३ततोऽङ्गन्यासविद्यया कराङ्गुलीषु विन्यसेत् । यथा—

ऐं क्लीं सौः श्रीत्रिपुरसुन्दरि नमोऽङ्गुष्ठाभ्यां नम इत्यङ्गुष्ठयोः, इत्यादिकराङ्गादिसर्वमन्त्रान्ते नमःपदं योजयेत् । ऐं क्लीं ह्सौः श्रीत्रिपुरसुन्दरि आनन्दमूर्तये नम इति ४वक्त्रन्यासः ।

## पुर्यष्टकन्यासः

५अथ पुर्यष्टकन्यासो वशिन्याद्यष्टशक्तिभिर्वर्गबीजसमेता६भिः शीर्षादि-

---

१. 'कानन .... क्रमशः' इति श्लोको नास्ति– ग. । २. दधो वर्णानिति मु. पाठापेक्षयांऽत्रत्यः पाठः शोभनः । ३. 'ततो .... यथा' नास्ति– ग. । ४. 'वक्त्रन्यासः' इत्यस्य स्थाने 'ललाटादिमुखवृत्ते'– ग. । ५. 'अथ .... न्यासो' इत्यस्य स्थाने 'ह्रीं शिरसि, क्लीं हृदये, ऐं मूले । एवं त्रिः कुर्यात् । इति पुर्यष्टकन्यासः– ग. । ६. तानि– ग. ।

---

*1. श्लोकद्वयस्यास्य विस्तृतोऽर्थः प्रयोगक्रमदीपिकायां (पृ. ५३६-५३७) द्रष्टव्यः ।*

चिबुकान्तं[१] कण्ठादिनाभ्यन्तं ककुदादिपृष्ठवंशान्तं योनि[२]कट्यादिपादान्तं स्थानेषु न्यसेत्। तदुक्तं **क्रमस्तोत्रे**—

वर्गैरष्टभिराकृतिस्[३]स्तनगतिः शीर्षां[४]सहृत्पृष्ठगै-
र्गुह्याङ्घ्रिक्रमनिर्मितैस्तव सदा ज्ञानप्रदानप्रदा।
चिद्रूपा परमा विभाति नितरां दे[५]व्यक्षया क्षाश्रया
पीठाज्ञानिलया त्रिमूर्तिवसतिः कालापहा कौलिकी॥

[ऐं क्लीं सौः श्रीत्रिपुरसुन्दर्यै नमोऽङ्गुष्ठाभ्यां नमः, ३ श्रीत्रिपुरसुन्दर्यै नमस्तर्जनीभ्यां नमः, ३ श्रीत्रिपुरसुन्दर्यै नमो मध्यमाभ्यां नमः, ३ श्रीत्रिपुरसुन्दर्यै नमोऽनामिकाभ्यां नमः, ३ श्रीत्रिपुरसुन्दर्यै नमः कनिष्ठिकाभ्यां नमः, ३ श्रीत्रिपुरसुन्दर्यै नमः करतलकरपृष्ठाभ्यां नमः। एवं हृदयादिन्यासः। अत्रैवानेन व्यापकम्।]

## वशिन्यादिन्यासः

अथ द[६]ण्डक्रमेण वशिन्[७]याद्यष्टकं न्यसेत्। य[८]था—

[1]ह्रीं श्रीं अवर्गमुच्चार्य ब्लूं वशिनीवाग्देवताशक्तिश्रीपादुकाभ्यो नमः। ह्रीं श्रीं कादि क्ल्हीं कामेश्वरीवाग्देवताशक्तिश्रीपादुकाभ्यो नमः। ह्रीं श्रीं चादि न्ब्लीं मोदिनी.। ह्रीं श्रीं टादि य्लूं विमला.। ह्रीं श्रीं तादि ज्म्रीं अरुणा.। ह्रीं श्रीं पादि ह् स् ल् व्यूं जयिनी.। ह्रीं श्रीं यं रं लं वं झ् म् र् यूं सर्वेश्वरी.। ह्रीं श्रीं शादि क्ष्म्रीं कौलिनी.। इति ब्रह्मरन्ध्रललाटभ्रूमध्यकण्ठहृदयनाभिगुह्यपादान्तं न्यसेत्।

[ऐं ह्रीं श्रीं अं आं इं ईं उं ऊं ऋं ॠं लृं लॄं एं ऐं ओं औं अं अः ब्लूं वशिनीवाग्देवतायै नमो ब्र[९]ह्मरन्ध्रे, ३ कं खं गं घं ङं क्लीं कामेश्वरीवाग्देवतायै नमो ललाटे, ३ चं छं जं झं ञं ह्रीं मोदिनीवाग्देवतायै नमो भ्रूमध्ये, ३ टं ठं डं ढं णं य्लूं विमला वाग्देवतायै नमो कण्ठे, ३ तं थं

१. इतः परम्– आस्यादिभुजद्वयनखान्तम्– ग.। २. 'योनि .... न्यसेत्' इत्यस्य स्थाने 'नाभ्यादियोन्यन्तं कण्ठादिपादान्तमेवं स्थानेषु विन्यसेत्'– ग.। ३. स्तदगतिः– ग.। ४. र्षान्तहृत्कण्ठयो– ग.। ५. देव्यः प्रिया सौख्यया– ग.। ६. 'दण्डक्रमेण' नास्ति– घ.ङ.। ७. न्याद्यष्टकन्यासः– ग., न्यादिन्यासः– घ.ङ.। ८. 'यथा' नास्ति– घ.ङ.। ९. शिरसि– घ.ङ.।

*1. सुभगोदयेन (पृ. २८६-२८७) तुलनीयमेतत्।*

दं धं नं ज्र्रीं अरुणावाग्देवतायै नमो हृदि, ३ पं फं बं भं मं ह्स्ल्व्यूं जयिनीवाग्देवतायै नमो नाभौ, ३ यं रं लं वं शं झ्म्र्यूं सर्वेश्वरीवाग्देवतायै नमो गुह्ये[१], ३ षं सं हं ळं क्षं क्ष्म्रीं कौलिनीवाग्देवतायै नमः पादयोः[२]। इति वशिन्याद्यष्टकन्यासः।]

## पीठचतुष्टयन्यासः

[३]आधारहृदयभ्रूमध्यब्रह्मरन्ध्रेषु पीठचतुष्टयं न्यसेत्। यथा—

[४]प्रथमबीजमुच्चार्य [1]'अग्निचक्रे कामगिर्यालये [५]कामेश्वरीपीठे मित्रीशनाथात्मके [श्री]कामेश्वरीदेवीश्रीरुद्रात्मशक्तिश्रीपादुकां पूजयामि नमः। [६]द्वितीयबीजमुच्चार्य सूर्यचक्रे जालन्धरपीठे षष्ठीशनाथात्मके [श्री]वज्रेश्वरीदेवी-श्रीविष्णवात्मशक्तिश्री.। [७]तृतीयबीजमुच्चार्य सोमचक्रे पूर्णगिरिगह्वरे ओड्डीशनाथात्मके[८] श्रीभगमालिनीदेवीब्रह्मात्मशक्तिश्री.। [९]समस्तं तुर्यं वोच्चार्य [१०]ब्रह्मचक्रे ओड्याणे[११]पीठे श्रीचर्यानाथात्मके श्रीमहात्रिपुरसुन्दरीदेवीपरब्रह्मात्मशक्ति-श्रीपा[१२]दुकाभ्यो नमः[१३]।

## तत्त्वन्यासः

[१४]ततस्तत्त्वन्यासं विदध्यात्। [१५]प्रथमबीजमुच्चार्य आत्मतत्त्वव्यापिकायै [१६]श्रीमहात्रिपुरसुन्दर्यै नम [१७]इत्याधारादिब्रह्मरन्ध्रान्तं न्यसेत्। द्वितीयबीज-

१. आधारे–घ.ङ.। २. आधारात् पादपर्यन्तम्–घ.ङ.। ३. आधारे हृदये भ्रूमध्ये ब्रह्म–ग., 'अथ पीठन्यासः। तद्यथा'–घ.ङ.। ४. प्रथमं कूटमुच्चार्य–ग., मूलविद्यावाग्भवमुच्चार्य–घ.ङ.। ५. 'कामेश्वरीपीठे' नास्ति–ग.घ.ङ.। ६. द्वितीयं कूटमु–ग.। ७. तृतीयं कूटमु–ग.। ८. इतः परम्–'श्रीमहात्रिपुरसुन्दरी देवी–ग.। ९. तुरीयं कूटमुच्चार्य–ग., चतुर्थबीजमुच्चार्य–घ.ङ.। १०. 'ब्रह्मचक्रे' नास्ति–ग.। ११. णमहापीठे–घ.ङ.। १२. दुकां पूजयामि नमः–ग.घ.ङ.। १३. इतः परम्–'मूलाधारहृदयभ्रूमध्यमस्तकेषु न्यसेत्। इति चतुष्पीठन्यासः'–ग., 'इत्याधारे हृदयभ्रूमध्यकेषु विन्यसेत्'–घ.ङ.। १४. अथ तत्त्वन्यासः–ग.घ.ङ.। १५. इतः पूर्वम्–'मूल'–घ.ङ.। १६. 'श्रीमहा .... न्यसेत्' इत्यस्य स्थाने 'त्रिपुरादेव्यै नम आधारे'–घ.ङ.। १७. 'इत्या .... न्यसेत्' इत्यस्य स्थाने 'मूलादितालुकान्तं ताल्वादिमूलान्तम्'–ग.।

*1. योगिनीहृदयदीपिकायां (पृ. २७०-२७१) प्रकरणमेतद् दृश्यते।*

मुच्चार्य विद्यातत्त्वव्यापिकायै[1] श्रीमहात्रिपुरसुन्दर्यै[2] नम इति[3] मूलादिब्रह्मरन्ध्रान्तम् । तृतीयबीजमुच्चार्य शिवतत्त्वव्यापिकायै[4] श्री[महा]त्रिपुरसुन्दर्यै[5] नम इति[6] मूलादिकल्पान्तम् । समस्तं तुर्यबीजं[7] वोच्चार्य सर्वतत्त्वव्यापिकायै[8] श्री[महा]त्रिपुरसुन्दर्यै[9] नम इति[10] पादादिकेशान्तं केशादिपादान्तं[11] च व्यापकतया विन्यसेत्[12] ।

इत्थं विन्यस्य त्रिखण्डामुद्रया पूर्वोक्ताम्[13] [आ]वाहनविद्यां[14] स्मरन्नकुलशृङ्गाटे[15]देवीचैतन्यं स्वमूर्तावावाह्य देवीरूपं स्वकं ध्यात्वा मूलमन्त्रेण स्वात्ममस्तके तुर्यसमयविद्यया भगमालिन्या[16] वा[17] तुर्यबीजेन वा त्रिधा पुष्पाञ्जलिं विकीर्य गन्ध-पुष्पादिना स्वात्मानमलङ्कृत्य[18] मुद्रानवकं प्रदर्श्य[19] ध्यानं कुर्यात्[20] ।

॥ इति [श्रीविद्यानन्दनाथविरचितायां[21] त्रिपुरसुन्दरीपद्धत्यां ज्ञानदीपविमर्शिन्यां[22]] न्यासपद्धतिरेकादशी[23] ॥

■

---

१. 'विद्या .... कायै' नास्ति– ग. । २. 'श्रीमहा .... नमः' इत्यस्य स्थाने 'त्रिपुरादेव्यै नमः'– घ. ङ. । ३. 'इति .... न्तम्' इत्यस्य स्थाने 'ताल्वादिनाभ्यन्तम्'– ग., 'हृदि'– घ. ङ. । ४. 'शिव .... कायै' नास्ति– ग. । ५. 'श्रीमहा .... नम' इत्यस्य स्थाने 'त्रिपुरादेव्यै नमः'– घ. ङ. । ६. 'इति' नास्ति– घ.ङ. । ७. तुरीयबीजमुच्चार्य– ग., चतुर्थबीजमुच्चार्य– घ. ङ. । ८. 'सर्व .... कायै' नास्ति– ग. । ९. 'श्रीमहा .... कुर्यात्' इत्यस्य स्थाने 'त्रिपुरादेव्यै नमः करन्ध्रे'– घ. ङ. । १०. 'इति' नास्ति– ग. । ११. न्तं व्यापकं न्यसेत्– ग. । १२. इतः परं 'इति तत्त्वन्यासः'– ग. । १३. 'पूर्वोक्तां' इत्यस्य स्थाने 'वक्ष्यमाणपूर्वोद्धृतया'– ग. । १४. विद्यया न्यसेत् स्मरेद् अकुल– ग. । १५. टे देवीचैतन्यस्वमूर्त्या ब्रह्मदेवीरूपं– ग. । १६. 'भग' इत्यस्य स्थाने 'वाग्भव'– ग. । १७. 'वा' इत्यस्य स्थाने 'च'– ग. । १८. आत्मा– ग. । १९. प्रदर्श्य चक्रन्यासं कुर्यात्– ग. । २०. इतः परं ख. पुस्तके वर्णितो न्यासप्रपञ्चश्चतुर्थपरिशिष्टे द्रष्टव्यः । २१. ज्ञानदीपप्रदर्शिन्यां श्रीमत्पद्धत्यां बाह्यन्यासपद्धतिर्द्वादशी– घ. ङ. । २२. 'ज्ञान .... न्यां' नास्ति– ग. । २३. तिस्त्रयोदशी– ग. ।

**घ. ङ. पाठः (पृ. ४३-५१ पृष्ठस्थाने)**

अथ न्यासमाचरेत्। यथा—गन्धाष्टकत्रिफण्ड(पुण्ड्र)मण्डिततललाटपटो मन्त्री। गन्धाष्टकं **प्रपञ्चसारे** (६.२८-३०)। तद् बहुविधम्[१]। अथ शाक्तप्रस्तुतात्—

चन्दनकर्पूरागुरुकुङ्कुमकपिमांसिरोचनाचोराः।
गन्धाष्टकमपि शक्तेः सान्निध्यकरं च लोकरञ्जनकृत्॥
(प्र. सा. ६. २९)

अथ प्रकृतमनुसरामः। घनसारसुवासितताम्बूलपूरितमुखो रक्ताम्बरावरणदेहो बालदिनकरारुणप्रस्थमालाविराजितवक्षस्थलो दूर्वाक्षतकुसुमचिह्नितमस्तको प्रागाननो धनदवदनावासमुपविश्य वामदक्षिणपार्श्वयोर्नमोमुद्रया गुरुभ्यो नमः, गणपतये नमः, दुर्गायै नमः, क्षेत्रपालाय नम इति नमेत्। ततो गुरुभ्यो नमः, परमगुरुभ्यो नमः, परमेष्ठिगुरुभ्यो नमः, परमाचार्यगुरुभ्यो नमः, पूर्वसिद्धगुरुभ्यो नमः, आदिसिद्धगुरुभ्यो नम इत्येतान् स्वशिरसि नत्वा **करशुद्धिमाचरेत्**।

## करशुद्धिन्यासः

न्यासानामादौ कथं करशुद्धिरित्याशध्या(त्याहा)**गमान्तरे**—

तत्रादौ करयोः शुद्धिः कर्तव्या वरवर्णिनि।
ताभ्यामन्यानि वस्तूनि शोधयेत् सर्वकर्मसु॥

तथा च **मूलसूत्रे**—"सर्वाद्यविद्यया देवि करशुद्धिं तु कारयेत्" (नि. षो. १.१२६)। तद्यथा—अं मध्यमाभ्यां नमः, आं अनामिकाभ्यां नमः, सौः कनिष्ठिकाभ्यां नमः, अं अङ्गुष्ठाभ्यां नमः, आं तर्जनीभ्यां नमः, सौः करपुटाभ्यां नमः, त्रिभिः करतलाभ्यां नमः, तैः कौर्पराभ्यां नम इति। पुनरस्त्रेण तालत्रयदिग्बन्धनानि कुर्यात्।

अथ प्राणायामं समाचरेत्। तद्यथा—मूलाधारे मनः संयोज्य चान्द्रवामपुटेन **क्रमेण** षोडशमात्राः पूरयेत्। ततश्चतुष्षष्टिमात्राभिः कुम्भयेत्। तदर्द्धा(तद्वद् द्वा) [त्रिंशद्]भिः **क्रमेण** विरेचयेत्। इति प्राणायामं कृत्वा **आसनषट्कं** न्यसेद्यथा—

## आसनषट्कन्यासः

ऐं क्लीं सौः त्रिपुरेश्वरि अमृतार्णवासनाय नमः [पादयोः], ऐं क्लीं ह्सौं त्रिपुरसुन्दरि पा(पो)ताम्बुजासनाय नमो जान्वोः, ह्रीं क्लीं सौः त्रिपुरवासिनि देव्यात्मासनाय नम ऊर्वोः, है ह्क्ली ह्सौः त्रिपुराश्रीचक्रासनाय नमः स्फिचि, **ह्सैं ह्स्क्लीं** ह्सौं त्रिपुरमालिनि सर्वमन्त्रासनाय नमो गुदे, ह्रीं क्लीं ब्लूं त्रिपुरासि**द्धेश्वरि साध्यसिद्धा**सनाय नमो मूलाधारे, इति षडासनानि विन्यस्य ऐं क्लीं ह्स्मैं त्रिपुरसुन्दरि **आत्मानं** रक्ष रक्ष स्वाहा **हृदये**, ऐं क्लीं सौः ह्ः अस्त्राय फडिति तालत्रयदिग्बन्धनान्यग्निप्राकारं विदध्यात्।

## भूतशुद्धिः

भूतशुद्ध्यर्थमुक्तं श्री **केशवाचार्येण**—

ततोऽस्त्रमन्त्रेण विशोध्य पाणी त्रितालदिग्बन्धगताशशालाम् ।
विधाय भूतात्मकमेतदङ्गं विशोधयेद् बुद्धिमतीः क्रमेण ॥

ततः सुषुम्नावर्त्मना हंसबीजेनात्मानं परमात्मनि नियोज्य यमिति वायुबीजेन देहं संशोध्य रमिति वह्निबीजेन देहं निर्दहेत् । वमिति वरुणबीजेनामृताम्भसा देहमाप्लाव्य लमिति भूमिबीजेन देहावयवं कारयेत् । ततो जीवं स्वस्थानमानीय मन्त्रध्यानं समाचरेत् । तद्यथा—मूलाधारहृदयभ्रूमध्येषु वह्निसूर्यसोममण्डलानि दशद्वादशषोडशदलात्मकानि मूलवाग्भवकामराजशक्तिबीजाधिष्ठितानि परस्परसंसक्तनादाद्याशि(श्री)तटिड्रक्तशिताभानि ब्रह्मरन्ध्रावधि विभाव्य वक्ष्यमाणामृतकुण्डलिनीरूपनिर्गताभिः परामृतधाराभिस्तुरीयविद्यामुच्चरन्नात्मतनुमभिषिच्य **कराङ्गं** न्यसेत् । तद्यथा—

## कराङ्गन्यासः

ऐं क्लीं सौः त्रिपुरसुन्दरि अङ्गुष्ठाभ्यां नमः, ३ त्रिपुरसुन्दरि तर्जनीभ्यां नमः, ३ त्रिपुरसुन्दरि मध्यमाभ्यां नमः, ३ त्रिपुरसुन्दरि अनामिकाभ्यां नमः, ३ त्रिपुरसुन्दरि कनिष्ठिकाभ्यां नमः, ३ त्रिपुरसुन्दरि करपुटाभ्यां नमः ।

## मातृकान्यासः

अथ सर्वेषां मन्त्राणां मातृभूतत्वान्**मातृकान्यासं** कुर्यात् । यथा—मातृकान्यासस्य ब्रह्मा ऋषिर्गायत्रीच्छन्दो मातृकासरस्वतीदेवता ह्लौ बीजानि स्वराः शक्तयश्चतुर्विधपुरुषार्थे विनियोगः । स्थानमुक्तं श्रीम**त्प्रपञ्चसारे**—

ऋषिर्गुरुत्वाच्छिरसैव धार्यं छन्दोऽक्षरत्वाद्रसनागतं स्यात् ।
धियाऽवगन्तव्यतया सदैव हृदि प्रदिष्टा मनुदेवता च ॥ (६. २)

ऐं ह्रीं श्रीं अं कं खं गं घं ङं आं हृदयाय नमः, ३ इं चं छं जं झं ञं ईं शिरसे स्वाहा, ३ उं टं ठं डं ढं णं ऊं शिखायै वषट्, ३ एं तं थं दं धं नं ऐं कवचाय हुम्, ३ ओं पं फं बं भं मं औं नेत्रत्रयाय वौषट्, ३ अं यं रं लं वं शं षं सं हं क्षं अः अस्त्राय फट्—इति, तालत्रयदिग्बन्धनानि विध्यायेत् । स्वस्वमुद्राभिः **षडङ्गं** न्यसेत् । तद्यथा—

## षडङ्गन्यासः

अङ्गुष्ठमध्यमानामिकाभिर्हृदयम्, अङ्गुष्ठानामिकाभ्यां शिरः, उन्नताङ्गुष्ठमुष्टिना शिखां, विपरीतकराभ्यां मस्तकादारभ्य पादपर्यन्तं स्पृशन् कवचम्, तर्जनीमध्यमानामिकाभिर्नेत्रम्, तर्जन्यङ्गुष्ठछोटिकाभिरस्त्रम् ।

## अक्षरन्यासः

पञ्चाशल्लिपिभिर्विभक्तमुखदोःपन्मध्यवक्षस्थलां
भास्वन्मौलिनिबद्धचन्द्रशकलामापीनतुङ्गस्तनीम्।
मुद्रामक्षगुणं सुधाढ्यकलशं विद्यां च हस्ताम्बुजै-
र्बिभ्राणां विशदप्रभां त्रिनयनां वाग्देवतामाश्रये ॥ (शा. ति. ६.४)

इति ध्यात्वा **अक्षरन्यासमाचरेत्**। तदुक्तं **श्रीमत्प्रपञ्चसारे**—

काननवृत्तद्व्यक्षिश्रुतिनोगण्डौष्ठदन्तमूर्धास्ये।
दोःपत्सन्ध्यग्रकेषु च पार्श्वद्वयपृष्ठनाभिजठरेषु ॥
हृद्दोर्मूलापरगलकक्षेषु हृदादिपाणिपादयुगे।
जठरानलयोर्व्यापकसंज्ञान् न्यस्येदथो वर्णान् क्रमशः ॥

(७.४-५)

## पीठन्यासः

अथ देहं पीठरूपं भावयेत्। तदुक्तं **श्रीमल्लक्ष्मणदेशिकेन्द्रेण**—

कल्पयेदात्मनो देहे पीठं धर्मादिभिः क्रमात्।
अंसोरुयुग्मयोर्विद्वान् प्रादक्षिण्येन देशिकः ॥
धर्मं ज्ञानं च वैराग्यमैश्वर्यं न्यस्य तु क्रमात्।
मुखपार्श्वनाभिपार्श्वेऽधर्मादींश्च प्रकल्पयेत् ॥
धर्मादयः स्मृता पादाः पीठगात्राणि चापरे। इति।

(शा. ति. ४.३८-४०)

हृदये अनन्ताय नमः, पद्मायः नमः, सूर्याय नमः, सूर्यमण्डलाय नमः, सोममण्डलाय नमः, वह्निमण्डलाय नमः, शं सत्त्वाय नमः, रं रजसे नमः, तं तमसे नमः– इत्युपर्युपरि कल्पयेत्। "[1]एवं पीठमये देहे चिन्तयेत् परदेवता[म्"]।

---

1. *श्लोकार्धोऽयं शारदातिलकस्यैव (४.४३)। देहमये पीठे .... इष्टदेवतामिति तत्रत्यः पाठः।*

## कामकलान्यासः

ततः पद्मनिभामित्यादिवक्ष्यमाण(पृ. ५८)ध्यानोक्तरूपिणीं ध्यात्वा **कामकला-रूपमात्मानं** ध्यायेत्। तद्यथा—कामकलाकथितमूर्ध्वबिम्ब(बिन्दु)देवीरूपं स्वात्मनो वक्त्रं परिकल्प्य तदधस्थं बिन्दुद्वयं स्तनरूपं परिकल्प्य तदधः सपरार्धं योनिरूपं परिकल्प्य ऊर्ध्वबिम्बान्तर्गतं ललाटनयनादिकं मुखोपाङ्गस्तनरूपं बिन्दुद्वयं गतं भुजचतुष्टयं योनिरूपं सपरार्धे पादद्वयं विभाव्य, एवं समष्टिभूतमहामायाक्षरान्तर्भूतमुखस्तनयोन्यक्षसर्वावयवं परमसौन्दर्यमयं कामेश्वरावस्थितं देवीरूपमात्मविग्रहं परिकल्प्य पाशाङ्कुशधनुःशरानवधा-रयेत्। तद्यथा—

## आयुधन्यासः

द्रां द्रीं क्लीं ब्लूं सः यां रां लां वां शां द्रां द्रीं वशीकरणाय कामेश्वरीपाशाय नमः, यां रां लां वां शां द्रां द्रीं क्लीं ब्लूं सः आं वशीकरणय कामेश्वरपाशाय नमो वामोर्ध्वभुजे। द्रां द्रीं क्लीं ब्लूं सः यां रां लां वां शां क्रों स्तम्भनाय कामेश्वर्यङ्कुशाय नमः, यां रां लां वां शां द्रां द्रीं क्लीं ब्लूं सः क्रौं स्तम्भनाय कामेश्वराङ्कुशाय नमो दक्षिणोर्ध्वभुजे। द्रां द्रीं क्लीं ब्लूं सः यां रां लां वां शां जां जृम्भणेभ्यः कामेश्वरीबाणेभ्यो नमः, यां रां लां वां शां जृम्भणेभ्यः कामेश्वरबाणेभ्यो नमो दक्षिणोऽधोभुजे। द्रां द्रीं क्लीं ब्लूं सः यां रां लां वां शां धां मोहनाय कामेश्वरीचापाय नमः, यां रां लां वां शां द्रां द्रीं क्लीं ब्लूं सः धं मोहनाय कामेश्वरचापाय नम इति वामोऽधोभुजे[1]।

1. *इतः परं श्रीकण्ठन्यासादिस्वरूपं चतुर्थे परिशिष्टे द्रष्टव्यम्।*

# ध्यानपद्धतिः[1]

अथ ध्यानम् । तत्[१] त्रिविधम्—स्थूलसूक्ष्मपरभेदेन ।

ध्यानं[२] तु त्रिविधं प्रोक्तं स्थूलं सूक्ष्मं परं तथा ।
स्थूलं [३]मूर्तं समाख्यातं सूक्ष्मं तन्तुनिभं भवेत् ॥

परं तु[४] चिन्मयं विन्द्याद्[५] ज्ञप्तिरूपं तु केवलम् ।

[६]अथवा **उद्याकरपद्धत्यां**[७]मुक्तन्यायेन त्रैविध्यं द्रष्टव्यम् । तद्यथा—

स्थूला विश्वप्रपञ्चाख्या[८] सूक्ष्मा तद्व्यापिनी[९] कला ।
केवला[१०] च परा प्रोक्ता त्रिभिर्भेदैर्व्यवस्थिता ॥

[११]स्थूला शब्दमयी प्रोक्ता सूक्ष्मा चिन्तामयी भवेत् ।
चिन्तया रहिता या च सा परा परिकीर्तिता ॥

प्रवेशे सृष्टिकृत् पूर्णा निर्गमे संहतिः[१२] कृशा[१३] ।
तयोरैक्यं तु[१४] यत्स्थैर्यं ज्ञात्वा गुरुमुखाद्[१५] भजेत् ॥

आद्यन्तयोः समरसं[१६] स्वप्रकाशविमर्शयोः[१७] ।
शृङ्गाटोदर[१८]मध्ये च समीकृत्य विभावयेत् ॥

---

१.'तत् ....भेदेन' नास्ति–ग.। २.'ध्यानं ....तथा' नास्ति–ख.घ.ङ.। ३.मूर्तिमदाख्यं–ग.। ४.खच्छिद्रकं–घ.ङ.। ५.विन्द्याज्ज्ञानरूपं–ग., विद्यात् त्रिभिर्भेदैर्व्यवस्थितः–घ.ङ.। ६.'अथवा' इत्यस्य स्थाने 'तद्यथा'–ग.। ७.त्यां द्रष्टव्यं त्रिविधं यथा–ग., त्यां त्रिविधमेवोक्तं तद्यथा–घ.ङ.। ८.ख्ये–ग.। ९.तन्तुमयी भवेत्–घ.ङ.। १०.कैवल्या–ग.। ११.आद्या–ग.। १२.संहतिः–ग.। १३.कृता–ख., कृषा–कं.। १४.च यत्तुर्यं–ग.। १५.खात्पुनः–ग.। १६.सामरस्यं सुप्रकाश–ग.। १७.विमर्षणात्–ग.। १८.रगतं तरमध्ये विभावयेत्–ख.घ.ङ.।

---

*1. इतः पूर्वं पीठार्चनादिसंबद्धानि प्रकरणानि घ.ङ.पुस्तकयोः स्थापितानि, पञ्चमे परिशिष्टे द्रष्टव्यानि ।*

एतद् ध्यानं समाख्यातं [१]चारोच्चारविवर्जितम् ।
[२]सर्गद्वय[३]पुटान्तस्थमनच्कद्वय[४]संश्रितम् ॥

ज्योतिस्त[५]न्तुनिभं [६]ध्येयं [७]कुलाकुलनियोजनात् ।
शृङ्गाटद्वयमध्यस्थं शक्तिद्वयपुटीकृतम् ॥
सदा समरसं ध्येयं ध्यायन्ति कुलयोगिनः ।
[८]किरणस्थं सदाग्निस्थं चन्द्रभास्करमध्यगम् ॥
महाशून्ये लयं कृत्वा पूर्णस्तिष्ठति योगिराट् ।
निरालम्बे [९]पदे शून्ये [१०]यत्तेज उपजायते ॥
[११]तद्गर्भे अभ्यसेन्नित्यं ध्यानमेतद्धि योगिनाम् ।
वडवा[१२]मणीन्द्रियं [१३]यच्च मीलनोन्मीलनात्मकम् ॥
सदा विकसितं कृत्वा [१४]क्षरन्तीं भावयेत् कलाम् ।
[१५]एवं ध्यानं समाख्यातमन्तस्थं कुलयोगिनाम् ॥
[१६]सूक्ष्मात् सूक्ष्मतरा मनोहर[१७]तमा कन्दोत्थिता कुण्डली
[१८]स्वाधाराद् बिसतन्तुसन्ततिनिभा निर्भिद्य लिङ्गत्रयम् ।
सान्द्रानन्दपराब्जसम्भवसुधामापीय संप्लाव्य तत्
पायाद् वः [१९]परमेश्वरी निजपथं तेनैव याता पथा ॥

---

१. रूपं द्वार–ग.। २. स्वर्ग–ग.। ३. नप्तद्वय–ख.। ४. संस्थितम्–ग.। ५. न्तुमयं–ख. घ. ङ.। ६. ध्यायेत्–ग. घ. ङ.। ७. 'कुला .... योगिराट्' नास्ति–घ. ङ.। ८. करिण्यस्थं पदा–ग.। ९. परे–ग.। १०. यत्र यश्चोपजायते–ग.। ११. तद्वर्णगर्भितं न्यासं ध्यान–ग.। १२. गुणे(दे)–ग.। १३. तद्वदुन्मीलोन्मील–ग.। १४. चरन्तीं–ग.। १५. एतद्–ग.। १६. सूक्ष्मासूक्ष्म–ग., 'सूक्ष्मा .... लिख्यते' (पृ. ५८) नास्ति–घ. ङ.। १७. तया–ग.। १८. राब्धिस–ग.। १९. 'परमे .... तेनैव' इत्यस्य स्थाने 'क्रमश्चर .... नेव'–ख.।

[1]विद्युत्पुञ्जनिभां नमामि सततं प्राग्भारसूक्ष्मां गिरा
मूर्त्या भग्नमृणालतन्तुनिभया निर्गत्य लिङ्गत्रयम् ।
प्राप्यौघं च विमर्शभागमकुलं पीयूषधारामृतं
पीत्वा विद्रुतविद्रुमद्रवमयीं शक्तिं पु(प)रां त्रैपुरीम् ॥

अथ कर्मयोमिनां स्थूलध्यानं लिख्यते[2] । "ततः[3] पद्मनिभां देवीम्" (नि. षो. १. १३०) इत्यादि "सर्वलक्ष्मीमयीम्" (नि. षो. १. १४९) इत्यन्तसूत्रोदितां सारस्वतार्थी श्वेतां ध्यायेत् । यथा[4]—

आद्यं बीजमथेन्दुकु[5]न्दविशदं सञ्चिन्त्य चित्ताम्बुजे
तद्भूतां धृतपुस्तका[6]क्षवलयां देवीं [7]मुहुस्तन्मुखात् ।
उद्यन्तं निखिलाक्षरं निजमु[8]खे नानारसस्रोतसा
निर्यान्तं च निरस्तसंसृतिभयो भूयात् स वाग्वल्लभः ॥

सारस्वता[9]र्थिवाग्भवसंसाधनप्रकारः श्री[10]मता **शङ्कराचार्येण** दर्शितः[11]—

[12]अच्छाभः स्वच्छभूषो धरणिमय[13]गृहे वाग्भवं लक्षमेकं
[14]यो जप्यात् तद्दशांशं वि[15]हितहुतविधि[16]र्मन्त्रजप्ताञ्जनादिः ।
काव्यैर्नानार्थवृत्तैर्भुवनमखिलमापूरयेत् स [17]"स्वकीयै-
[18]र्मैरात्यां विह्वलाभिः पुनरयमनिशं सेव्यते सुन्दरीभिः[19] ॥
(प्र. सा. ९. २१)

---

१. 'विद्युत्पु .... त्रैपुरीम्' नास्ति–ख. । २. 'लिख्यते' नास्ति–ग. । ३. गपुस्तके (नि. षो. १.१३०-१४९) सर्वे श्लोका अत्र लिखिताः सन्ति । ततश्च 'इति स्थूलध्यानम्' इत्यपि वर्तते । ४. 'यथा' नास्ति–ग.घ.ङ. । ५. न्दरुचिरं–ग. । ६. काख्यव–ग. । ७. सहस्रोन्मुखात्–घ.ङ. । ८. मुखां–ख. । ९. तार्थी वाग्भवसाधनं श्रीमता–ग. । १०. आचार्यैरुक्तः । यथा–घ.ङ. । ११. तम्–ग. । १२. स्वच्छा–ग. । १३. यभवे–ख. । १४. इतः परम् 'वा'–ग., यो यः प्रातर्दशांशं–ख.ङ. । १५. सहित–ग., नियमहुत–घ.ङ. । १६. धिस्तत्र कृत्वा जलादिः–ग. । १७. स्वकीर्त्या–ख.ग. । १८. मासक्त्या–ग. । १९. इतः परम्—"सारस्वतार्थी श्वेतां द्विभुजां ध्यायेदित्यपि श्रीमत्त्रिपुरसुन्दरीदण्डककृद्भिर्दीपकपूज्यपादैरभिहितम् । यथा—'सुस्पष्ट' इत्यधिकः पाठः–घ.ङ. ।

कामराजशक्तिबीजयोः[१] प्रत्येकं साधनं तैरे[२]वोक्तम् । तद्[३]यथा—

रक्ताकल्पारुणतरदुकूलार्तवालेपहृद्यो
मौनी भूसद्मनि सुखनिविष्टो जपेल्लक्षमेकम् ।
बीजं मन्त्री रतिपतिमयं प्रोक्तहोमावसाने
योऽसौ लोके स[४] सुरमनु[५]जैः से[६]व्यते पूज्यते च[७] ॥

(प्र. सा. ९. २२)

धरापवरके तथा जपतु लक्षमन्त्यं मनुं
सुशुक्लकुसुमांशुकाभरणलेपनाढ्यो वशी ।
अमुष्य वदनादनारततयोच्चरेद् [८]भारती
विचित्रपदपद्धतिर्भवति चास्य लोको वशे ॥

(प्र. सा. ९.२८)

वाग्भवादि[९]बीजानां प्रत्येकं [१०]ध्यानं **क्रमस्तोत्रे** दर्शितम् । यथा—

शाक्तेन बीजेन विकास्य शक्ति-
मिच्छात्मिकां यां विमृशन्ति सर्वे ।
उन्मीलयन्ती(न्तीं) भुवनान्यभेद-
रूपाणि गर्भे तु नमाम्यहं ताम् ॥

---

१. इतः परम् 'अपि'–घ.ङ.। २. तत्रैवोक्तम्– ग., श्रीमदाचार्यैरभिहितम्– घ. ङ.। ३. 'तद्यथा' नास्ति– ग., 'यथा' इत्येव– घ. ङ.। ४. 'स' नास्ति– ख.। ५. नुजनैः– ख.। ६. पूज्यते सेव्यते– ख.। ७. 'च' इत्यस्य स्थाने 'वा'– ग.। ८. 'भारती' इत्यस्य स्थाने 'भातीति'– ग.। ९. दिविद्यानां– ग.। १०. 'ध्यानं क्रमस्तोत्रे' नास्ति– ग.।

[१]निरञ्जनं धाम परं [२]द्वितीयं विकासयन्तीं सदसद्विहीनाम् ।
चक्राशयादिक्रमविक्रमोद्यत्संहारिणीं नौमि चितिं स्वतन्त्राम् ॥
कामाख्यबीजेन चितिक्रमाख्यां प्रोल्लास्य विश्वं भुवनं समग्रम् ।
करोमि नित्यं निजवीर्यवृत्तिं माहात्म्यतो यां प्रणमाम्यहं ताम् ॥
आद्येन [३]वर्णेन [४]सदैव देवीं ज्ञानाभिधां शक्तिमिहामिताभाम् ।
विस्फार्य गङ्गाजलवीचि[५]वद् या तनोति काव्यं रुचिरं नुमस्ताम् ॥
[६]यद् भ्रूबिले हृद्भुवि [७]जन्मधाम्नि यद्वर्णभङ्गी [८]सततं विभाति ।
तां नौमि देवीं परनादशक्तिं प्रोल्लासरूपां त्रिपुरां त्रिमार्गाम् ॥

स्फटिकमणिनिभं यच्छक्तिबीजं[९] करन्ध्रे
प्रभवति [१०]परसंविद्यामिनीनाथरूपम् ।
[११]अमृतनिकरधारासारमुच्चैर्विमुच्य
प्रततकुलकलापव्यापकं तत्प्रपद्ये ॥

अभिनवदि[१२]ननाथप्रस्फुर[१३]द्रक्तवर्णं
हृदयगगनधाम्नि भ्राजते यत् सदैव ।
तदिह कुसुमचापस्[१४]फारकं काम[१५]राजं
भवति निखिलकान्तासङ्गतिर्ध्यानयोगात् ॥

---

१. 'निरञ्जनं .... ताम्' नास्ति– ख.। २. 'द्वितीयं' इत्यस्य स्थाने 'नितान्तं'– घ. ङ.। ३. बीजेन– ग. घ. ङ.। ४. विकाश्य– घ. ङ.। ५. चिविद्यां– ख.। ६. यामूचिरे– ग., ब्राह्मबिले– घ. ङ.। ७. यस्य धाम्नि– ग.। ८. विमला– ग.। ९. बीजाङ्कुराधः– ग.। १०. 'पर' नास्ति– ख. ग.। ११. 'अमृत .... प्रपद्ये' इत्यस्य स्थाने 'तदहनि हसु.? भक्त्या सर्वकालं प्रपद्ये भवभयपरिशोषो यच्च संस्मृत्य याति'– घ. ङ.। १२. 'न' नास्ति– ख.। १३. रत्कान्ति- वर्णं– ख. घ. ङ.। १४. भ्राजकं– ग.। १५. बीजं– घ. ङ.।

कुसुमविशिखवर्णैः[1] पञ्चभिः साध्यनाम

स्फुरदनुपमनादस्फारमाविश्य[2] सम्यक् ।

[3]धृतमिह नितरां[4] यत्कामराजोदरस्थं

कतिपयदिनपूजाध्यानतः क्षुभ्यते तत् ॥

कुलगगनपुटान्तर्दिव्य[5]लिङ्गाग्रभागे

प्रभवति परबीजं[6] वाग्भवं विद्युदाभम् ।

[7]यदिह विविधविद्याद्योतकं ध्यानगम्यं

[8]जयति निरुपरागं तत्परं विश्वरूपम् ॥

॥ इति [श्रीविद्यानन्दनाथविरचितायां[9] त्रिपुरसुन्दरीपद्धत्यां[10] ज्ञानदीपविमर्शिन्यां[11]] ध्यानपद्धतिर्द्वादशी[12] ॥

■

१. विविधवर्णैः–ग.। २. पमानस्फारमादिश्य–ग., पनादस्फुरमाविश्य–घ., पनादस्फुर-मालिख्य–ङ.। ३. व्रतमिह–ख., हुतमिह–घ. ङ.। ४. तिमिरां–घ. ङ.। ५. गमनपदान्ते दिव्य–ग.। ६. वर–ग.। ७. तदिह–घ. ङ.। ८. जपति–ग.। ९. 'श्रीविद्या .... शिन्यां' नास्ति–ख.। १०. 'त्रिपु ....त्यां' नास्ति–ग.। ११. पप्रदर्शिन्यां–घ.ङ.। १२. तिःषोडशी–ग.घ.ङ.।

# पूजापद्धतिः

अथ पूजां कुर्यात्। सा[1] द्विविधा—बाह्याभ्यन्तरभेदेन। बाह्या[2] कर्मयोगिनाम्। तद्[3]यथा— अर्घ्यपात्रे[4] त्रिकोणं[5] परितो वृत्तं[6] चतुरस्रं सञ्चिन्त्य तस्य[7] द्वारप्रदेशे वामदक्षिणयोः [गणेशबटुकौ सम्पूज्य] ह्रीं[8] श्रीं कुलगणपतिनाथवल्लभाम्बासहित[9][श्री]पादुकां पूजयामि, ह्रीं[10] श्रीं कुलबटुकनाथवल्लभाम्बासहित[11][श्री]पादुकां पूजयामीति[12] सम्पूज्य वृत्तचतुरस्रान्तराले ईशानादिवायव्यान्तं[13] गुरुक्रममभ्यर्च्य त्रिकोणाभ्यन्तरे षडासनमर्चयित्वा[14]ऽन्तर्मुद्राप्रयोगेण[15] भगवतीमावाह्य मूलेन त्रिधा सम्पूज्याग्नीशासुरवायव्येषु हृदयादिचतुष्टयं मध्ये नेत्रं दिक्षु चास्त्रमिति सम्पूज्य त्रिकोणाग्रे[16]दक्षवामकोणेषु कामेश्वर्यादिदेवीत्रयं[17]न्यासोक्तमन्त्रै[18]राराध्य त्रिकोणमध्ये मूलदेवीं न्यासोक्तचतुर्थमन्त्रेण सम्पूज्य स्वशिरश्चक्रे[19]ऽप्यर्घ्यवत् सर्वं[20] सम्पूज्याग्रेऽपि शिरश्चक्रवत् पूजां कृत्वा[21] मूलमन्त्र[22]मष्टाविंशतिवारमावर्त्या[23]भ्यन्तरहोमं [[24]कृत्वा यथा नाभिदलचिदग्नौ विषयभोगं जुहुयात्। मूलमन्त्रमुच्चार्य]

धर्माधर्महविर्दीप्ते आत्माग्नौ मनसा स्रुचा।
सुषुम्णावर्त्मना नित्यमक्षवृत्तीर्जुहोम्यहम्॥ स्वाहा।

इति त्रिवारं हुत्वा।

---

१. पूजा द्विधा– ग.। २. तत्र बाह्यं– ग.। ३. यथा– ख.। ४. पात्रं– ग.। ५. णपरि– ख.। ६. त्तचतु– ख.। ७. तत्र पश्चिमद्वार– ग.। ८. 'ह्रीं श्रीं' नास्ति– ग.। ९. 'सहित' नास्ति– ग.। १०. 'ह्रीं श्रीं' नास्ति– ग.। ११. 'सहित' नास्ति– ग.। १२. यामि विधिना मन्त्रानाराध्य त्रिकोणे मूलदेवीं चतुरस्रान्तराले– ग.। १३. 'ईशा .... व्यान्तं' नास्ति– ग.। १४. त्वा तन्मुद्रा– ग.। १५. इतः परम् 'कुलकुण्डलिनीं'– ग.। १६. णाय दक्ष– ग.। १७. त्रयं न्यस्योक्त– ग.। १८. 'मन्त्रै .... न्यासोक्त' नास्ति– ग.। १९. क्रेऽर्घ्यवत्– ग.। २०. सर्वं पूज्यागमेऽपि– ख.। २१. 'कृत्वा' इत्यस्य स्थाने 'विधाय'– ग.। २२. मन्त्रेणाष्टविंशति– ग.। २३. वर्त्य वक्ष्यमाणान्तरहोमं– ग.। २४. 'कृत्वा .... पूर्णाहुतिं हुत्वा' (पृ. ६३) नास्ति– ख.।

प्रकाशाकाशहस्ताभ्यामवलम्ब्योन्मनीस्रुचा ।
[1]धर्माधर्मफलस्नेहपूर्णे वह्नौ जुहोम्यहम् ॥ स्वाहा ।

इति मूलमन्त्रादिकेन मन्त्रेण पूर्णाहुतिं हुत्वा [2]वक्ष्यमाणक्रमेण विधाय परिशोधित-घटस्थवारुणीजलेन पात्रा[3]न्तरमापूर्य तस्मिन्नर्घ्य[4]पात्रे बिन्दुं निक्षिप्य तच्छिरःपङ्कज-स्थाय [5]श्रीगुरवे निवेद्य तत्त्वत्रयमन्त्रेण त्रिवारं स्वीकृत्य तरुणानन्दीभूत्वा कुला-[6]मृतोद्धारार्थं दूतीयागमारभेत् । तद्यथा[7]—

## घ-ङ पाठः

अथ पूजां कुर्यात् । मूलदेव्यै पूजां समर्पयेत् । अथ मूलमन्त्रेण श्रीत्रिपुरसुन्दरी स्वाहा । गन्धं दत्त्वा वौषडन्तेनाक्षतं कुसुमं दत्त्वा बाहुमालां च दत्त्वा मूलेन श्रीमहात्रिपुरसुन्दरी अर्घ्यं नम इति शिरसि सिन्दूरदूर्वातण्डुलार्घ्यं दत्त्वा पादयोः पाद्यं नमः । तेनैव आचमनीयं स्वधा । मधुपर्कं नमः । मधुपर्कं दत्त्वा पुनराचमनीयं नमः । स्नापनार्थं मण्डलवामभागे रत्नसिंहासनं परिकल्प्य रत्नपादुके दत्त्वा तत्रानीय रत्नसिंहासनोपरि रत्नपीठिकायां समुपवेश्य कुङ्कुमानुलेपनादिनालभ्य सचन्दनोदकेऽर्घ्यादिपूर्वकं स्नानं परिकल्प्य अष्टाङ्गोद्वर्तन-पञ्चामृत-अष्टगन्धसुगन्धात्मकेन गन्धोदकेन स्नात्वा अक्षतादर्शनचन्दनादिपञ्च[ो]पहारः सम्पूज्य वस्त्रं परिधाय रत्नपादुकाभूषणार्थं मण्ड[प]मध्यं आनीय तत्र सिंहासने उपवेश्य मूलेन श्रीमहात्रि-पुरसुन्दरीं मुक्ताभरणाद्युपचारान् नमोऽन्तेन समर्प्य पुनरर्घ्याद्युपचारान् विधाय पुनः मूले-नाष्टोत्तरशतं वा तदर्धसंख्यया वा मुखबिन्दुसन्तर्पणं विधाय पूजार्घ्यमण्डलयोर्मध्य-त्रिकोणवृत्तचतुरस्रमण्डलं विधाय द्रव्येण वेदनामभ्यर्च्य प्रतिपदादिपञ्चदशयन्तं कामेश्वर्यादिनित्यानामैकैकं सम्पूज्य षोडशमाद्यावरणपूजामारभेत् ।

---

१. पङ्क्तिरेषा नास्ति–ख. । २. 'वक्ष्य ....विधाय' नास्ति–ग. । ३. न्तमा–ख. । ४. पात्रात–ख. । ५. 'श्री' नास्ति–ग. । ६. मृतधारया–ग. । ७. इतः परम्–"काम्यपूजायां महादेवीवीरेश्वरैः सदा कर्तव्यं दूतीवर्गमाह–'चाण्डाली चर्मकारी च मातङ्गी पुल्कशी(क्कसी) तथा । श्वपची खट्टिकी चैव कैवर्ती विश्वयोषितः ॥' एतदकुलाष्टकम् । 'कन्दुकी कल्पपाली च शस्त्रटङ्की च रञ्जकी । गायकी रजकी चिट्टी राजपुत्री तथाष्टमी ॥' इति कुलाष्टकम् । 'मन्त्र-तन्त्रसमायुक्ता समयाचारपालिका । कुमारीव्रतहस्ता वा योगमुद्राधरापि वा ॥ पूजाकाले स्वतः प्राप्ता सा ज्ञेया सहजा बुधैः ।' एवं सहजाः । एतासु यथा प्राप्तां दूतीं सालङ्कारामभिमुखां(खीं) महायागमण्डपे प्रवेशयेत् । उक्तं श्रीवामकेश्वरतन्त्रे–'स्वशक्तिभावा शास्त्रे प्रयोगः । तरुणी अभिन्ना शङ्काविहीना सुमना सुशान्ता ईदृग्विधा दूती भैरवी स्यात्' इति सुलक्षणा दूती । 'दुष्टोथा(त्था) कर्कशा स्तब्धा कुत्सिता कुलदूषिका । दुराचारपराधीना भीता शोकातुरालसा ॥ निद्रासक्ता च दुर्मेधा हीनाङ्गी व्याधिपीडिता । ईदृशी मन्त्रयुक्ताऽपि सर्वथा परिवर्जयेत् ॥' एतास्वेव दूतीं सुलक्षणां सर्वकार्यसिद्ध्यै समर्चयेत् । यथा– अथ दूती"–ग. ।

सुलक्षणां[1] दूतीमानीय[2] तूलिकोपरि आधारमंदिरार्णव[3]पोतासन[4]पङ्केरुहमहा-प्रेतासनपर्यङ्कासनानि[5] पञ्चप्रणवादीनि[6] पादान्ताद्युपर्युपरि पूजयेत्[7]। तत्रोपविश्य[8] वामश्वासस्य[9] पुरतो भुवि मण्डलमर्घ्यमण्डलवद्[10][11] विधाय तत्र बटुकं[12] सशक्तिकं सम्पूज्य[13] मातृकायोगेन पञ्चप्रणवान् दूतीशरीरे[14] विन्यस्य तस्या ललाटे[15][16] त्रिकोणं निर्माय[17] त्रिकोणाग्रादारभ्य[18][19] कुलगणपकुलाध्यक्षान्[20][21] लक्ष्मीसरस्वत्यौ च[22] पूजयेत्।

सिंहार्जिता[23]ऽपराजिता विजयानङ्गसंज्ञया।
भुजगश्चित्र[24]विचित्रौ कनकः कनकाम्बरः॥

इत्यमी नव कुलाध्यक्षाः[25]। वसन्तकामौ दक्षवामस्तनचूचुकयोरिन्दुं[26] तद्वृत्तयोः संपूज्य क्लीं कामदेवपादु. वं वसन्तपादु. सं[27] सोमपादु. इति तेषां मन्त्राः। काम-सोमयोः कलान्यासो[28] दक्षपादाङ्गुष्ठादारभ्य मूर्धान्तं मूर्धादिवामपादाङ्गुष्ठान्त-मारोहावरोहक्रमेण न्यसेत्। यथा[29]—

श्रद्धा प्रीती रतिश्चैव धृतिः कान्तिर्मनोरमा।
मनोहरा मनोन्मत्ता[30] मदनोन्मादिनीति च॥

---

१.स्वल–ख.। २.'दूतीम्' नास्ति–ग.। ३.मन्दिरा–ग.। ४.वयोजितपङ्कजमहाप्रेत-पर्य–घ.ङ.। ५.सने उपवेश्य पञ्च–ग.। ६.वादिना श्रीपादान्तमुच्चार्य उपर्यु–ग.। ७.इतः परम्–'ऐं ह्रीं श्रीं क्लीं ब्लीं एतानि पञ्चप्रणवबीजानि उपदिश्य'–ग.। ८.'तत्रोपविश्य' नास्ति–ग.। ९.शाखस्य–ग.। १०.'मण्डल .... त्रिकोणं' इत्यस्य स्थाने 'त्रिकोणवृत्त-चतुरस्रं विन्यस्य तस्याः शिरसि त्रिकोणं'–घ.ङ.। ११.वन्निधाय–ग.। १२.कुलबटुकं–ग.। १३.समभ्यर्च्य–ग.। १४.तस्या देहे–ग.। १५.शिरसि–ख.। १६.इतः परम्– 'सिन्दू-रादिना'–ग.। १७. विधाय–घ. ङ.। १८. 'ग्रा' नास्ति–ग. घ. ङ.। १९. इतः परम्– 'प्रदक्षिणक्रमेण'–घ.ङ.। २०.'कुल .... क्षान्' इत्यस्य स्थाने 'कुलाध्यक्ष'–ग.। २१.पतिं सशक्तिकं कुला–घ.ङ.। २२.'च' नास्ति–ग.। २३.सिता–ग.। २४.गश्च चित्र-चित्रो–ग.। २५.इतः परम्– 'तदन्ते पूजयेल्लक्ष्मीं तस्याश्चान्ते सरस्वतीम्। ह्रीं श्रीं कुलमहा-लक्ष्म्यम्बा., ह्रीं श्रीं कुलमहासरस्वत्यम्बा. इति तयोर्मन्त्रः'–घ.ङ.। २६.योर्बिन्दुं तद्धृदये–ग., योः पूज्यौ, इन्द्रस्तद्–घ.ङ.। २७.'सं' इत्यस्य स्थाने 'क्लीं'–ख., 'सौ'–ग.। २८.'न्यासः' नास्ति–ख.। २९.तद्यथा–ग.। ३०.मनोरथा–ख.घ.ङ.।

स्वाहा, [१]क्षां क्षेत्रपालाय [२]नमः, [३]गां गणपतये [४]नम इति क्रमेण गन्धाक्षतकुसुमैरभ्यर्च्य [५]पिशितानो(न्त्रो)पदंशचर्वणालिझषसहितं पात्रचतुष्टयं सदीपं बलिमण्डले [६]निधाय [७]एह्येहि देवीपुत्रबटुकनाथ कपिलपिङ्गलजटाभारभासुर त्रिनेत्र ज्वालामुख गन्ध[८]पुष्पालिपिशित[९]बलिं गृह्ण [१०]गृह्ण सर्वविघ्नान् नाशय [११]नाशय हुं फट् स्वाहा [१२]इति [१३]बटुकबलिमन्त्रः ।

> [१४]ऊर्ध्वे ब्रह्माण्डतो वा दिवि गगनतले भूतले निष्कले वा
>
> पाताले वाऽनले वा सलिलपवनयोर्यत्र कुत्र स्थिता वा ।
>
> क्षेत्रे पीठोपपीठादिषु च कृत[१५]पदा धूपदीपादिकेन
>
> प्रीता देव्यः सदा नः शुभबलिविधिना पान्तु वीरे[१६]न्द्रवन्द्याः ॥

---

अष्ट(द्य) यानि निवेद्यादि भक्षाणि विविधानि च ।

मया कृतानि सर्वाणि भक्ष्यतां प्रतिगृह्यताम् ॥ नमः ।

ततो मूलान्ते श्रीमहात्रिपुरसुन्दरि आचमनीयं नम इत्याचमनानन्तरं कर्पूरवासितताम्बूलं ताम्बूलमन्त्रेण निवेदयेत् । ताम्बूलमन्त्रः —

पूगीफलसमायुक्तं नानावर्णमनोरमम् ।

कर्पूरादिसमायुक्तं ताम्बूलं प्रतिगृह्यताम् ॥ नमः ।

अथ वक्ष्यमाणक्रमेणाग्निकार्यं यथाशक्ति निर्वर्त्य श्रीचक्रदक्षिणवामपश्चिमपूर्वभागेषु चतुरस्रवृत्तत्रिकोणमण्डलचतुष्टयं परिकल्प्याङ्गैः सम्पूज्य समस्तभक्ष्यादिसंभृतं बलिपात्रचतुष्टयं साधारं स्थापयेत् । ऐं ह्रीं श्रीं बां बटुकभैरवाय नम इति सध्यानेन पूजयेद् दक्षिणे ।

---

१. इतः पूर्वम्– 'ऐं ह्रीं श्रीं'–ग. । २. 'नमः' इत्यस्य स्थाने 'हुं फट् स्वाहा'–ग. । ३. 'गं' इति पाठः–ग., इतः पूर्वम्– 'ऐं ह्रीं श्रीं'–ग. । ४. 'नम .... मेण' इत्यस्य स्थाने 'स्वाहा'–ग. । ५. 'पिशि .... पात्र' इत्यस्य स्थाने 'पुष्पांत्रोपदशान् चर्वणगन्धोदकानि तृतीयसहितं पात्र'–ग. । ६. 'निधाय' इत्यस्य स्थाने 'दद्यात्'–ग. । ७. इतः पूर्वम् 'ऐं ह्रीं श्रीं'–ग. । ८. पुष्पाक्षतालि–ग. । ९. इतः परम्– 'सर्वोपचारसहितं'–ग. । १०. 'गृह्ण' नास्ति–ख. । ११. 'नाशाय' नास्ति–ख. । १२. 'इति' नास्ति–ग. । १३. 'बटु .... मन्त्रः' इत्यस्य स्थाने 'बटुकबलिः'–ग. । १४. ऊर्ध्वं–ग. । १५. पदः–ग. । १६. न्द्रविद्या–ग. ।

यां[1] योगिनीभ्यः स्वाहा इति सर्वयोगिनीबलिमन्त्रः। क्षां क्षीं क्षूं क्षैं क्षौं क्षः हुं [2]स्थानक्षेत्रपाल [3]अलिपललसहितं बलिं गृह्ण [4]गृह्ण सर्वविघ्नान् नाशय [5]नाशय हुं फट् स्वाहा इति क्षेत्रपाल[6]बलिमन्त्रः। ग्लां ग्लीं ग्लूं ग्लैं ग्लौं ग्लः गं गणपते[7] [8]वर वरद सर्वजनं मे वशमानय सर्वविघ्नान् नाशय[9] सर्वोपचारसहितं बलिं गृह्ण [10]गृह्ण स्वाहा इति गणपति[11]बलिमन्त्रः। [12]एतच्च बलिदानं पूर्वोक्तस्थानेषु। अङ्गुष्ठानामि[13]काभ्यां बटुकबलिः। तर्जनीमध्यमानामिकाभिर्योगिनीबलिः। तर्जन्या क्षेत्रपालबलिः। मध्यमया गणपतिबलिः। [14]तत्र बटुकनाथध्यानं **श्रीसिद्धनाथपादैरुक्तम्**—

---

ऐं ह्रीं श्रीं यां योगिनीभ्यो नम इति सध्यानेन पूजयेत् चक्रवामे। ऐं ह्रीं श्रीं क्षां क्षेत्रपालाय नम इति चक्राग्रे। ऐं ह्रीं श्रीं गां गणपतये नम इति चक्रपृष्ठे। बटुकस्य ध्यानं **श्रीसिद्धपादैरुक्तम्**—

करकलितकपालः कुण्डलीदण्डपाणि-
स्तरुणतिमिरनीलो व्यालयज्ञोपवीती।
क्रतुसमयसपर्याविघ्नविच्छेदहेतु-
र्जयति बटुकनाथः सिद्धिदः साधकानाम्॥

अथ योगिनीध्यानम्—

योगिन्यः कामरूपाः सकलगुणभृतस्तप्तकार्तस्वराभा
मत्ताः कङ्कालमालाकलितगलतटीरक्तवस्त्रोत्तरीयाः।
लिङ्गं पाशं कपालं सृणिमपि विधृताः सुस्मिताः सुप्रसन्ना
भक्तानां पूजकानामभिलषितफलं सन्ददानाः सुवेशाः॥

---

१. 'यां ....मन्त्रः' इत्यस्य स्थाने 'ऐं ह्रीं श्रीं यां यीं यूं यैं यौं यः योगिनीभ्यो हुं फट् स्वाहा इति योगिनीबलिः'–ग.। २. स्थाने–ग.। ३. अलिपिशितसहितं–ग.। ४. 'गृह्ण' नास्ति–ख.। ५. 'नाशय' नास्ति–ख.। ६. 'बलिमन्त्रः' इत्यस्य स्थाने 'बलिः'–ग.। ७. पतये–ग.। ८. 'वर' इत्यस्य स्थाने 'वरद'–ग.। ९. इतः परम्–'नाशय हुं'–ग.। १०. 'गृह्ण' नास्ति–ख.। ११. 'बलिमन्त्रः' इत्यस्य स्थाने 'बलिः'–ग.। १२. 'एत .... दानं' इत्यस्य स्थाने 'एतद्बलिस्थान'–ग.। १३. मिकयोर्बटुक–ग.। १४. 'तत्र' इत्यस्य स्थाने 'अथ'–ग.।

करकलितकपालः कुण्डलीदण्डपाणि-

[१]स्तरुणतिमिरनीलो व्यालयज्ञोपवीती[२]।

[३]क्रतुसमयसपर्याविघ्नविच्छेदहेतु-

र्जयति बटुकनाथः सिद्धिदः साधकानाम् ॥

योगिन्यः[४] कामरूपाः[५], पाशाङ्कुश[६]योनिमथनकपालं गणनाथस्य, देव्यास्तु देवाश्लेषणं देवलिङ्गधारित्वं च। उभौ रक्तवर्णौ। क्षेत्रपा[७]लस्य शूलडमरुककपाल[८]खड्गा नग्नत्वं च। ततस्त्र्यस्रान् पञ्च नव पिशितालिगोधूमादिपिष्टनिर्मितान् सशर्करान्[९] [१०]गोघृतपाचितान्[११] रक्तवर्तिकान् सु[१२]गन्धिघृतपूरितान् स्थालस्थान् दीपान् [१३]त्रिकोणचतुरस्रं मण्डलं [१४]विधाय तत्र प्रतिष्ठाप्य भुवनेश्वर्या [१५]प्रज्वाल्य गुह्यमालिन्या समाराध्य [१६]तत्र सुवर्णादीनि निक्षिप्य जानुभ्यामव[१७]निं गत्वा कराभ्यामुद्धृत्य सम[१८]यश्लोकद्वयं [१९]पठन् [२०]अध्युष्टवारं भ्रामयेत्। [२१]यथा—

---

क्षेत्रपालध्यानम्—

> शूलं डमरुकं चैव कपालं खड्गमेव च।
> दधानं कृष्णवर्णाभं भजेऽहं क्षेत्रनायकम् ॥

अथ गणपतिध्यानम्—

> वामनं कृष्णवर्णं च सर्वा(र्वा)भरणभूषितम्।
> पाशाङ्कुशं कपालं च त्रिशिखं बिभ्रतं नुमः ॥

---

१. स्तरलतिमिर–ख.। २. वीतः–ख.। ३. 'क्रमसमय'–ख.। ४. न्याः–ग.। ५. पा–ग.। ६. 'योनि....वर्णौ' इत्यस्य स्थाने 'विलसितोर्ध्वबाहुयुगले दक्षिणकरकमलेन गन्धोदक ....बिभ्रद्वामेन पाणिना सर्वाङ्कस्थदेवीमदनमन्दिरं वासयति'–ग.। ७. पालस्तु डमरुक–ग.। ८. 'खड्गो .... शितालि' इत्यस्य स्थाने 'मण्डिततदोर्दण्डो नवसप्तपञ्चत्र्येकान् शालि'–ग.। ९. 'रा'–ग.। १०. 'गो' नास्ति–ख.। ११. तारक्तोद्वर्तिकान्–ग.। १२. गन्धगोधृत–ग.। १३. 'त्रिकोण' नास्ति–ग.। १४. 'विधाय' इत्यस्य स्थाने 'निर्माय'–ग.। १५. प्रभाल्य–ग.। १६. 'तत्र' इत्यस्य स्थाने 'रक्त'–ख.। १७. वनीं–ग.। १८. मयां श्लोक–ख.। १९. 'पठन्' इत्यस्य स्थाने 'च पठेत्'–ग.। २०. तदष्टवारं परिभ्रामयेत्–ग.। २१. 'यथा' नास्ति–ख.।

अन्तस्तेजो बहिस्तेज [१]एकीकृत्यामितप्रभम्।
त्रिधा देव्या परिभ्राम्य कुलदीपं निवेदयेत्॥
समस्तचक्रचक्रेशियुते देवि नवात्मिके।
आरार्त्रिकमिदं देवि गृहाण मम सिद्धये॥

---

ततो भगवत्यै पुष्पाञ्जलिं विकीर्य सकलचक्रस्थितदेवतामूलदेवीरूपं ध्यायेत्। उक्तं हि **सङ्केतपद्धत्याम्**—

महाचक्रव[न]स्यान्तः　　पद्मरागसमप्रभाम्।
पाशाङ्कुशौ शरान् [चापान्]धारयन्तीं भजाम्यहम्॥

बाह्यचक्रेषु योगिन्यस्तदुल्लाससमुद्भवाः।
तद्ध्यानेन समा ध्येयाः पूजायां साधकोत्तमैः॥

अथ श्रीचक्राग्रे भूमण्डलकं कृत्वाऽङ्गानि सम्पूज्यारं प्रतिसमर्प्य गोधूमयवशाली-विनिर्मितत्रिकोणाकारान् कर्पूरगर्भरक्तवर्तिकालङ्कृतान् सुरभिघृतान् नव वा पञ्च वा स्थाल्यां कृत्वा तदाधारे प्रतिष्ठाप्य भुवनेश्वर्या प्रज्ज्वाल्य सुवर्णरजतादिकं निक्षिप्य गुह्यमालिनीन्यासं पूजयेत्। ततो बलिपात्रेषु शोधितवारिणा बलिं हरेत्। तद्यथा—

ऐं ह्रीं श्रीं एह्येहि देवीपुत्र बटुकनाथ कपिल पिङ्गल जटाभारभासुर त्रिनेत्र ज्वाला-मुख सर्वविघ्नान् नाशय नाशय सर्वोपचारसहितबलिं गृह्ण गृह्ण स्वाहा। ऐं क्लीं ह्सौं

ऊर्ध्वान् ब्रह्माण्डतो वा दिवि गगनतले भूतले निस्तले वा
पाताले वाऽनले वा सलिलपवनयोर्यत्र कुत्र स्थिता वा।
क्षेत्रे　पीठोपपीठादिषु　सुकृतपदा　पुष्पधूपादिकेन
प्रीता देव्यः सदा नः शुभबलिविधिना पान्तु वीरेन्द्रवन्द्याः॥

यां सर्वयोगिनीभ्यो बलिं गृह्ण स्वाहा। ह्रीं श्रीं सर्वयोगिनीभ्यः सर्वभूतेभ्यः सर्वभूतपतिभ्यस्त्रैलोक्यनिवासिनीभ्य इमां पूजाबलिं गृह्ण गृह्ण स्वाहा।

ऐं ह्रीं श्रीं क्रौं सौः क्षां क्षीं क्षू क्षैं क्षौं क्षः हुं स्थानक्षेत्रपाल धूपदीपालिपिशितबलिं गृह्ण गृह्ण स्वाहा।

---

१. एकीकृत्वापि तत्प्रमम् – ग.।

ततो मण्डले प्रतिष्ठाप्य मूलविद्यया यथाशक्ति सहस्रादिसंख्यया[1] जपं विधाय तं च जपमर्घ्योदकेन[2]—

गुह्यातिगुह्यगोप्त्री त्वं गृहाणास्मत्कृतं जपम्।

सिद्धिर्भवतु मे देवि त्वत्प्रसादाद्[3] हृदि स्थिते॥

---

अथ गणनाथः — ऐं ह्रीं श्रीं ऐं क्लीं ग्लौं गं महागणपतये वर वरद सर्वजनं मे वशमानय स्वाहा। आसवजलेनामिकया तर्जनीमध्यमानामिकया तर्जन्या मध्यमया वा यथोपदेशं बलिं दत्त्वा तालत्रयछोटिकास्फारमुद्रां प्रदर्श्य पूजयेत्।

अथ जानुभ्यामवनीं गतः श्रीभगमालिन्या समभ्यर्च्य मूलविद्याजपाक्षराभ्यां दीपस्थालीमुद्धृत्य श्लोकद्वयं पठन्नध्युष्टवारं परिभ्राम्य पूर्वमण्डलाधारे स्थापयेत् श्लोकमन्त्रैः —

अन्तस्तेजो बहिस्तेज एकीकृत्यामितप्रभम्।
त्रिधा देव्याः परिभ्राम्य कुलदीपं निवेदयेत्॥

समस्तचक्रचक्रेशियुते देवि नवात्मिके।
आरार्त्रिकमिदं देवि गृहाण मम सिद्धये॥

ततः पुष्पाञ्जलिं दत्त्वा नैवेद्यादिकमपि निवेद्य अणिमाग्रादारभ्य गन्धवारिणा तर्पयामीत्यन्तेन सन्तर्प्य कामेश्वर्याद्यास्तत्तत्समयविद्यया तर्पयेत्। समयविद्या यथा — ऐं ह्रीं श्रीं ऐं क्लीं ह्सौं आं ईं ऊं यां रां लां वां सां कामेश्वरि इच्छाकामफलप्रदे सर्वार्थसाधक्रि सर्वसत्त्ववशङ्करि जगत्क्षोभकारिणि हूं हूं हूं द्रां क्लीं ब्लूं सः ह्सौं क्लीं ऐं कामेश्वरीसमयनित्याश्रीपादुकां पूजयामि। [इति] समयविद्या। ऐं ह्रीं क्रीं हूं ऐं त्रं ह्रां ह्रीं क्लीं ब्लूं सः ऐं यां रां लां वां सां सर्वकार्यार्थसाधनि वज्रेश्वरि वज्रपञ्जरमध्यगते श्रीं ह्रीं क्लिन्ने ऐं ह्रीं श्रीं क्रों नित्यमदद्रवे ह्रीं श्रीं वज्रेश्वर्यै नमः ह्रीं श्रीं ऐं त्रिपुरावज्रेश्वरिश्रीपादुकां पूजयामि, तर्पयामीति सर्वत्र योज्यम्। इति वज्रेश्वरीसमया। ऐं ह्रीं श्रीं क्लीं भगवति ब्लूं नित्यकामेश्वरि स्त्रीं सर्वसत्त्ववशङ्करि सः त्रिपुरभैरवि चें क्लीं त्रिपुरासमयानित्याश्रीपादुकां पूजयामि। इति समयविद्या। द्वितीया नित्या भगमालिनीदेहे समया।

ततः समस्तचक्रे पूर्ववद् ध्यात्वा सबीजं मुद्रानवकं प्रदर्शयेत्। यथाशक्ति हितमालया यथोक्तप्रकारेण संजप्य तेजोरूपं जपफलमर्घ्योदककृतं कुरु मे,

---

१. 'सह .... जप' इत्यस्य स्थाने 'सहस्रादिकसंख्याकं जपित्वा तं जप'– ग.। २. इतः परम्– 'मूलविद्यया'– ग.। ३. त्वत्प्रसादात् – ग.।

[1]इति मन्त्रेण देव्या वामहस्ते समर्प्य तं च जपं परमेश्वर्या परिगृह्यतां(हीतं) भावयेत्। ततो निवेद्यं विसृज्य [2]हस्तक्षालनं गन्धोदकैः परिकल्प्य मूलमन्त्रेण ताम्बूलं निवेद्य दर्पणं प्रदर्श्य] छत्रं[3] चामरं च[4] दत्त्वा [5]पुनर्गन्धादिभिरभ्यर्च्य मुद्रानवकं[6] प्रदर्श्य[7] [1]किं[8] [9]किमित्यादिना स्मृत्वाऽर्घ्यचुलुकोदकैः स्वात्मानं सप-

---

गुह्यातिगुह्यगोप्त्री त्वं गृहाणास्मत्कृतं जपम्।
सिद्धिर्भवतु मे नित्यं त्वत्प्रसादान्महेश्वरि॥

इति देव्या वामकरे ब्रह्मार्पणमन्त्रेण निवेद्य जपफलं परमेश्वर्यादिपरिगृहीतं विभावयेद् ब्रह्मार्पणमन्त्रेण। यथा—इतः पूर्वं प्राणबुद्धिदेहधर्माधिकारिता जाग्रत्स्वप्नसुषुप्तावस्थासु मनसा वाचा कर्मणा हस्ताभ्यां पादाभ्यामुदरेण शिश्ना यत्स्मृतं यत्कृतं यत्स्पृष्टं यच्च भाषितं तत्सर्वं ब्रह्मार्पणं भवतु स्वाहा। ततः श्रीदण्डकेन स्तुत्वा नमेत्।

मूलेन दर्पणचामरच्छत्रादिकान् ददेत्। मुद्रानवकं प्रदर्श्य षडाम्नायसमयान् ज्ञात्वा समर्चयेत्। यथा—३ज ह्स्रीं रुद्रशक्त्यै नमो ह्रीं इति पूर्वाम्नायसमया। दक्षिणां समयां ज्ञात्वा रुद्राणीं समयां यजेत्। ३ ऐं क्लिन्ने क्लिन्नमदद्रवे कुले ह्सौः — एषा दक्षिणेश्वरीसमया। पश्चिमं समयं ज्ञात्वा द्वात्रिंशार्णां यजेत् पुनः। ह्स्रैं ह्स्ह्रीं ह्स्रीं ह्स्ख्फ्रें ह्स्रौं भगवति अम्बे ह् स् क्ष् म् ल् व् र् यूं स् ह् क्ष् म् ल् व् र् यूं कुब्जिके ह्स्रां ह्स्रीं ह्स्रूं ङ ञ ण न मे अघोरमुखि झ्रां झ्रीं किणि किणि विच्चे हस्रें हस्ख्फ्रें हस्रीं ह्स्ह्रीं श्रीपश्चिमेश्वरिसमयादेवीश्रीपादुकां पूजयामि। एषा श्रीपश्चिमसमया।

समष्ट्याख्यं समुद्राचक्रं ज्ञात्वा तथोत्तरम्।
नर्वार्णां समयां ज्ञात्वा यजेत् सप्तदशीं कलाम्॥

---

१. 'इति ....विसृज्य' इत्यस्य स्थाने 'इति देव्या आवाहनस्तेन समर्पितं जलं तेजोरूपं .... गृहीतं विभाव्य ततो नैवेद्यं विसर्जयेत्'–ग.। २. हस्तप्रक्षालनश्चोदकैः–ग.। ३. छत्रचामरे–ख.। ४. 'च' नास्ति–ग.। ५. पुनन्यबन्धादिभैरवीमुद्रा–क., पुनश्च गन्धा–ख.। ६. दशकं–ख.। ७. इतः परम्– 'मुद्राबीजानि' द्रां द्रीं [क्लीं] ब्लूं सः क्रों हस्ख्फ्रें ह्सौः ऐं इति सर्वसंक्षोभिण्यादिमुद्राणां बीजानि'–ख.। ८. 'किं' नास्ति–क.। ९. 'किमि ....त्मानं' इत्यस्य स्थाने 'किमित्यादिनां सुधाद्यष्ट्यं चुलुकोदकैः स्वात्मानं'–क., 'किं किं दुःखमित्यादि स्तुत्वा चुलुकोदकेनात्मानं'–ख.।

---

*1. घटस्तवस्य षोडशोऽयं श्लोकोऽत्रैव स्तोत्रपद्धत्यामष्टादशश्लोकत्वेन द्रष्टव्यः।*

रिच्छदं परमेश्वर्यै परिकल्प्य पुनः पुन प्रणिपातेन कृतार्थमेवात्मानं परिभावयन् क्षमापणपूर्वकं जानुभ्यामवनिं गतो महाचक्ररहस्यं विमर्शनात्मकं प्रविभाव्य नवदर्शनमूलविद्यया तत्तत्स्थानेषु समर्पयत् । यथा—ह्स्त्रीं श्रीं वा ।

---

**ख. पाठः**

**"परिकल्प्य .... त्रिपुरसुन्दर्यै नमः" (पृ. ९३-९७) इत्यस्य स्थाने**

महाचक्रं रहस्यवेददर्शनात्मकं परिभाव्य तत्तद्दर्शनमूलविद्यया तत्तत्स्थानेषु समर्चयेत् । यथा—ह्स्त्रीं भगवति रुद्रशक्ति स्वाहा ह्स्त्रीं इति रुद्राणवया वा ह्स्त्रीं इत्येकाक्षर्या वा पूर्वसमयविद्यया, ऐं क्लिन्ने क्लीं मदद्रवे कुले ह्स्त्रौः ह्रीं हौः य व ल क्षु स ह र य हौः इति वा दक्षिणसमयविद्यया तयोरन्यतरया रुद्राणवत्या, ह्स्त्रैं ह्स्ह्रीं ह्स्श्रीं ह् स् ख् ह्रें (फ्रें) ह्सौः भगवति अम्बे ह स क्ष म ल व र यूं ह स क्ष म ल व र यीं कुब्जिके ह् स् ख् प्रां ह् स् ख् प्रीं ह् स् ख् ह्रीं अघोरे घोरे अघोरमुखि झ स्त्रां झ स्त्रीं किणि किणि विच्चे ह्सौं ह् स् ख् ह्रें (फ्रें) ह् स् श्रीं ह् स् ह्रीं ह्स्त्रैं इति श्रीपश्चिमसमयेश्वर्यम्बापादुकां पूजयामि नम इति पश्चिमया, द्वात्रिंशार्णया ऐं ह्रीं श्रीं

---

**ग पाठः**

**"परिकल्प्य .... त्रिपुरसुन्दर्यै नमः" (पृ. ९३-९७) इत्यस्य स्थाने**

महाचक्रं रहस्यबीजदर्शनादिकं परिभाव्य तत्तद्दर्शने मूलविद्यया तत्तत्स्थानेषु समर्चयेत् । यथा—ह्स्त्रैं .... इति पूर्वाम्नायसमयविद्या सृष्टिरूपा चतुरस्त्रषोडशदलाष्टदलचक्रमध्येषु पुष्पं निक्षिप्य समर्चयेत् । ऐं क्लिन्ने क्लीं मदद्रवे कुब्जे ह्सौं इति रुद्राण्या दक्षिणसमयविद्यया स्थितिरूपचतुर्दशारदशारद्वयचक्रमध्ये पुष्पं निक्षिप्य समर्चयेत् । ह्स्त्रैं ह्स्ख्फ्रें ह्सौः भगवति आः अम्बिके .... कुब्जिके ह्स्त्रैं ख्फ्रें अघोरे घोरे ह्रां ह्रीं

---

ख्फ्रें महाचण्डयोगेश्वरि द्रीं एषोत्तरसमया । एतासां स्थाननियमस्तु **सङ्केतपद्धत्याम्**—

> ब्राह्म्याद्यष्टौ च तद्युग्ममनङ्गकुसुमादिकम् ।
> सृष्टिचक्रं त्रिधा प्रोक्तं संहारमपि तच्छृणु ॥
> वशिन्याद्याष्टान्तरालपीठत्रयमनुक्रमात् ।
> संहारं तु त्रिधा ज्ञेयमनाख्या सर्वगा ततः ॥
> प्रत्येकं नामभेदेन सर्गस्थितिलयक्रमात् ।

अथ चक्रं षड्दर्शनात्मकं ज्ञात्वा पूजयेत् । उक्तं हि—

> बौद्धं ब्राह्मं तथा शैवं सौरं वैष्णवमेव च ।
> शाक्तं षष्ठं तु विज्ञेयं चक्रं षड्दर्शनात्मकम् ॥

वेदाख्यं शकलाख्यं तं सृष्ट्यादिप्रविभेदतः ।
पूर्वाम्नायक्रमं ज्ञात्वा त्वर्चयेत् रामासिञ्ज्ञा( ?) ॥ इति ।

वोद्रुशक्तिपूर्वसमयामन्वाशायुगलं चक्रं शिल्पादि . . . . ऐं क्लिन्ने क्लीं मदद्रवेन्दुलै ह्सौं । इयं रुद्रार्णा दक्षिणसमयेश्वरी ।

वसुरामात्रमध्यान्तं सं रात्रिप्रभेदतः ।
पश्चिमं समयं ज्ञात्वा द्वात्रिंशार्णां यजेत् क्रमात् ॥

---

ख्फ्रें ह्सौः अम्बे भगवति ह् स् ख् ह्रें स् ह् ख् ह्रें कुब्जिके ह्स्रां ह्स्रीं ह्सौः अघोर घोरे अघोरमुखि ह्रां ह्रीं किणि किणि विच्चे इति वा पश्चिमसमयविद्या । खफ्रें महाचण्डयोगेश्वर ॠ उत्तरमुखविद्या । म च पर महाचरण ड य ञ ट ऐ श र व र कालाप्त ग्रासकर ओंकारे तुकरि स्वाहा

---

किणि किणि रिच्चे ह्सैं ह्स्ख्फ्रें फ्रें ह्स्रीं स्हीं ह्स्रैं पश्चिमसमयेश्वरीपादुकां पूजयामि । इति पश्चिमसमयेश्वरी विद्या । द्वात्रिंशार्णया संहाररूपेऽष्टद[ल्म]ध्ये पुष्पं निक्षिपेत् । तत उत्तराम्नाय . . . . महाचण्डयोगेश्वरि एषा नवाक्षरी उत्तरसमयविद्या । ह्स्रें महाचण्ड य ॐग प व स रूं इति सप्तदशीकला कालग्रासं करोति । स(तां) मध्ये पुष्पं निक्षिप्य समर्चयेत् । ततश्च महाचक्रमेतत्प्रकृतिदर्शनात्मकं प्रतिभाव्य ततः समयमन्त्रैरर्चयेत् । ॐ तारे तुत्तारे तुरे स्वाहा इत्यनया बौद्धसमयविद्यया ताराख्यथा द्व्यष्टदलमध्ये पुष्पाणि निक्षिप्य सम[र्च]येत् । ॐ ॐ हौं शिवाय नम इति शैवसमयविद्ययाऽष्टदलमभ्यन्तराष्टारं पुष्पं निक्षिप्य समर्चयेत् ।

---

तेषा स्थाननियमोऽप्यागमान्तरे—

चतुरस्रं बौद्धभेदं ब्राह्मं वै षोडशच्छदम् ।
वस्वरं शैवभेदं तु मन्वस्रं सौरमुच्यते ॥
वैष्णवं द्विदशारं तु मध्ये शाक्तं समीरितम् ।

इत्युक्तस्थानेषु तत्तद्दर्शनमन्त्रैः पूजयेत् । षड्दर्शनमन्त्रा यथा—ॐ तारे तुत़ारे तुरे स्वाहा बौद्धदर्शनसमयादेवीश्रीपादुकां पूजयामि नम इति तारामन्त्रः ॥१ ॥ ॐ वैदिकदर्शनसमयश्रीपादुकां पूजयामीति ब्राह्ममन्त्रः ॥२ ॥ हौं शिवाय हौं नमः शिवदर्शनपादुकां पूजयामीति शिवमन्त्रः ॥३ ॥ ह्रां ह्रीं सः सौरदर्शनपादुकां पूजयामीति सौरमन्त्रः ॥४ ॥ ॐ नमो नारायणाय नारायणदर्शनश्रीपादुकां पूजयामि [इति वैष्णवमन्त्रः] ॥५ ॥ ऐं शाक्तदर्शनश्रीपादुकां पूजयामीति शाक्तमन्त्रः ॥६ ॥

ह्स्त्रैः ह्स्ह्लीं ह्स्त्रां ह्स्ख्फ्रें भगवति अम्बे ह् स् क्ष् म् ल् व् र् यूं स् ह् क्ष् म् ल् व् र् यीं कुब्जिके ह्स्त्रं ह्स्फ्रां ह्स्फ्रीं ह् स् ब् फ्र यै घोरे अघोरमुखि ह्रीं श्रीं किणि किणि ह्स्त्रौं हस्फ्रें ह्स्त्रीं ह्स्ह्लीं ह्स्त्रैं। एषा पश्चिमेश्वरी द्वात्रिंशाक्षरी समयविद्या।

समष्ट्याख्यमनाख्यं तु चक्रं ज्ञात्वा तथोत्तमम्।
नवर्णा(वार्ण)समयान्यासं यजेत् सप्तदशीं कलाम्॥

स्फ्रें महाचण्डयोगेश्वरि। एषा नवाक्षरी उत्तरसमयविद्या। स एष परमहा-चण्डल डपडङ्गए राव। एषा सप्तदशी कला कालग्रासं करोति। महारथाङ्गं प्राकृतरसदर्शनात्मकं प्रविभाव्य तैस्तैः समयमन्त्रैरर्चयेत्। यथा—

वन्दी अम्बौद्विभादन्तु वार्चाकं विकृतिसृतम्।
ज्ञात्वा प्रपूजयेत् पत्राद् वज्रतदीशमन्त्रकैः॥

---

इति बौद्धसमयविद्या। ॐ इति वैदिकसमयविद्या। ओं हौं शिवाय ह्रौं नम इति शैवस-मयविद्या। ह्रां ह्रीं सः सूर्याय नम इति सौरसमयविद्या। ओं नमो नारायणाय इति वैष्णवसमयविद्या। ऐं इति शाक्तसमयविद्या।

---

ततः कामेश्वर्यादिदेवीनां तत्तत्समयविद्यया सप्तवारं समयपुष्पं दद्यात्। ततः कामे-श्वरी-भगमालिन्यौ नित्याभेदान्तर्गतौ पूर्वार्धतो वज्रेश्वरी त्रिपुरसुन्दरी। ह्रां ह्रीं सः सूर्याय नम इति सौरसमयविद्यया चतुर्दशारमर्चयेत्। ॐ नमो नारायणाय वैष्णवसमयविद्यया द्विदशारद्वये पुष्पं निक्षिप्य समर्चयेत्। मध्यत्र्यस्रे शाक्तदर्शनं ज्ञात्वा वाग्भवेन समर्चयेत्॥

---

ततः कामेश्वर्यादिदेवीनां तत्तत्समयविद्यया सकृत् तर्पयेत्। मूलदेव्यै सप्तवारं तर्प-येत्। अथ बलिविसर्जनार्थं शिष्यं समाहूयाज्ञां कुर्यात्। बलिविसर्जनमन्त्रो यथा—३ निखिलब्रह्माण्डाशेषपीठोपपीठक्षेत्रोपक्षेत्रसन्दोहोपसन्दोहचत्वरोपचत्वरश्मशानोपश्मशा-नाधिपतये इमां पूजां बलिं गृह्ण गृह्ण स्वाहा।

इति विसर्ज्य शिष्योऽसौ पात्रे तोयं च कारयेत्।
तत्पात्रं गुरवे दद्यान्नमस्तुभ्यं शिशुः पुनः॥
आचार्यस्तत्करे कृत्वा शान्तिमन्त्रं जपन् पुनः।
तर्पयेच्छलिलं शान्त्यै समयस्य कुलस्य च॥

ॐ तारे तुतारे तुरे स्वाहा इति बौद्धमते तारानाम विद्या। द्विरष्टारं वैदिक-दर्शनं ज्ञात्वा वेदादिनाऽर्चयेत्। अष्टदलमभ्यन्तराष्टारमेव शैवदर्शनं ज्ञात्वा हौं शिवाय हौं नम इत्यभ्यर्चयेत्। चतुर्दशारं सौरदर्शनं ज्ञात्वा ह्रीं ह्रीं सः सूर्याय नम इत्यर्चयेत्। द्विदशारं वैष्णवं ज्ञात्वा ॐ नमो नारायणाय इत्यष्टाक्षरेणार्चयेत्। मध्यत्र्यश्रं शाक्तदर्शनं ज्ञात्वा वाग्भवेन पूजयेत्।

---

शान्तिमन्त्रो यथा—

[1]यजन्ति देव्यो हरपादपङ्कजं प्रसन्नधामामृतमोक्षदायकम्।
अनन्तसिद्धान्तमतिप्रबोधकं नमामि चाष्टाष्टकयोगिनीगणम्॥

योगिनीचक्रमध्यस्थं मातृमण्डलवेष्टितम्।
नमामि शिरसा नाथं भैरवं भैरवीप्रियम्॥

आपदो दुरितं रोगाः समयाचारलङ्घनात्।
सर्वाणि मे व्यपोहन्तु दिव्यचक्रस्य मेलनात्॥

सम्पूजकानां प्रतिपालकानां सामान्यतत्त्वज्ञतपोधनानाम्।
देशस्य राष्ट्रस्य पुरस्य राज्ञां करोति शान्तिं भगवान् कुलेशः॥

यासामाज्ञाप्रभावेण सुस्थितं भुवनत्रयम्।
नमस्ताभ्यो नमस्ताभ्यो योगिनीभ्यो निरन्तरम्॥

नन्दन्तु साधककुलान्यणिमादिसिद्धिः
शापाः पतन्तु समयद्विषि योगिनां च।
सा शाम्भवी स्फुरति कापि समाप्यवस्था
यस्यां गुरोश्चरणपङ्कजमेकमेव॥

ये दिव्यक्रमदूषकाः समयिनामावेशकाः सद्गुरो-
र्द्वेष्टारः कुलयोगिनां जनमनस्तापाः कुलद्वेषिणः।
वीरद्रव्यविनिन्दकाः कुलवधूवैहासकाः पूजने
द्रोहाधीनधियः पतन्तु त इमे षद्यो(ड्यो)गिनीमण्डले॥

---

1. *शान्तिस्तवोऽयं कुलार्णवेऽपि (८.३१-५४) समविषमतया दृश्यते।*

ततः कामेश्वर्यादिदेवीनां तत्तत्समयविद्यया सकृत् सकृत् पुष्पं दत्त्वा मध्ये मूलदेव्यै तत्समयविद्यया सप्तवारं समयपुष्पं दद्यात् । तत्र कामेश्वरीभगमालिन्यौ समयविद्ये नित्याभेदान्तर्गते पूर्वोद्धृते । चक्रे(वज्रे)श्वरीश्रीत्रिपुरसुन्दरीसमयविद्या । यथा—ऐं ह्रीं सर्वकार्यार्थसाधिनि वज्रेश्वरि वज्रपञ्जरमध्यगते क्लीं क्लिन्ने ऐं क्रौं नित्यमद्रद्रवे ह्रीं वज्रनित्यायै नमः । क्लीं भगवति ब्रूं नित्याकामेश्वरि श्रीं सर्वसत्त्ववशङ्करि सः त्रिपुरभैरवि ऐं विच्चे क्लीं त्रिपुरसुन्दर्यै नमः ।

ततः प्रदक्षिणनमस्कारैः परमेश्वरीं परितोष्य[१] पराङ्मुखार्घ्येण परि[२]वारदेवतागणं[३] देव्यङ्गे संयोज्य देवीमण्डल[४]स्थकुसुमेनादाय संहारमुद्रया महापद्मवनान्तस्थं[५]

---

हेरम्बा बटुकाः सवेष्टगगणाः प्रेताः पिशाचग्रहा
वेतालोरगयक्षभूतपितरः क्षेत्राधिपा राक्षसाः ।
ये त्रैलोक्यगताश्च हुंफडधिपप्रायैर्महामन्त्रजै-
स्तृप्ता यान्तु सदा स्वधार्पितपयोमांसासवान्नादिभिः ॥

स्वर्गे व्योम्नि रसातले जलनिधौ क्ष्मावह्निदिक्षु स्थिताः
सूक्ष्माः स्थूलगताश्च पीठजनिताः स्वक्षेत्रजा मन्त्रजाः ।
योगस्थाः सहजाश्च चण्डजनिताः श्रीकौलिका मन्त्रजा
योगिन्यः पललासवान्नमुदितास्ताः सर्वदा पान्तु वः ॥

द्वारस्थाः सह गह्वरादिनिलयाः श्रीनन्दने कानने
शून्यागारविहारकन्दरमठारामश्मशानस्थिताः ।
कूपस्थानगताश्चतुष्पथगताः सन्दोहसंस्थाश्च ये
पक्वान्नोदरहेतुमांसकुसुमं गृह्णन्तु तुष्यन्तु नः ॥

ततो भगवत्यै पुष्पाञ्जलिं दत्त्वा सकलीकृत्य मुद्रानवकं प्रदर्श्य श्रीमहात्रिपुरसुन्दरि पराङ्मुखार्घ्यः स्वाहेत्यर्घ्यं दत्त्वा श्रीपात्रं संशु(शो)ध्य वारचतुष्टयं निवेद्यार्घ्यदेवता देवाङ्ग-

---

१. इतः परम्—'कामेश्वर्यादिदेवीनां स्वस्वसमयविद्यया सकृत् सकृत् पुष्पं दत्त्वा मूलदेव्यै सप्तधा समयपुष्पं दत्त्वा'—ख. । २. वारे देव—क. । ३. देव्यङ्गं संशोध्य—क., गणाङ्गे संशोध्य—ग., इतः परम्—'देवीं च'—ग. । ४. लसंस्थकुसु—ग. । ५. 'स्थं' नास्ति—ख. ।

शृङ्गाटोदरं[1] नीत्वा बाह्याभ्यन्तरभेदेन कामकलाध्यानं[2] "बिन्दुं संकल्प्य" (नि.षो. १.१८५) इत्यादि सूत्रोक्तं यथाविधि[3] विदध्यात्[4]। खेचरीमुद्राबन्धेन सह यावन्मनोलयस्तावदकुलशृङ्गाटे[5] उन्मनीभूय तिष्ठेत्। तदुक्तं श्रीक्रमस्तोत्रे—

चिदङ्कुरं कामकलास्वरूपं[6] [7]बिन्दुं विगाल्यामिततेजसेद्धम्[8][9]।

अनाहतोन्मेषनिनादवृत्तिचक्रस्थितं[10][11] जन्मबिलान्तराले॥

तस्याधरस्थं शशिसूर्यरूपं[12] बिन्दुद्वयं पार्श्वयुगप्रवाहम्[13]।

तस्याप्यधो वह्निशिखाग्रभागं[14] रेखाकृती[15] द्वे प्रविलाप्य सम्यक्॥

इति ततो मूलविद्याबीजत्रयैस्तत्त्वत्रयान्तैः[16] स्वाहान्तैः प्रसादं स्वीकृत्य [17]कुमारी[बटुका]वर्चयेत्। ऐं ह्रीं [[18]इति] कुमारीमन्त्रः। ह्रीं ऐं [[19]इति] बटुकमन्त्रः। त्रिकोणवृत्तचतुरस्रं[20] मण्डलं[21] कुमारीबटुकयोः पुरस्ताद् विधाय षट्स्वरभेदेन[22] ह्रींका-

---

देवताङ्गे विलीनाः सन्त्विति विलाप्यात्मानं कामकलात्मकं ध्यात्वा खेचरीमुद्रया क्षमस्वेति तां भगवतीमकुल(गव ?)शृङ्गाटोदरगतां कृत्वा तेनैव मार्गेणाधारे विसर्जयेत्। अथैशान्यां त्रिकोणं भूमण्डले ३ त्रिपुरसुन्दरि शेषिकाभ्यो नम इति शेषिकाः सम्पूज्य ताभ्यो निर्माल्यमन्त्रेण निर्माल्यं ददेत्। निर्माल्यमन्त्रो यथा—

ऐं लेह्यचोष्यान्नपानादिताम्बूलं स्रग्विलेपनम्।

निर्माल्यभोजनं तुभ्यं ददामि श्रीशिवाज्ञया॥

---

१. दरगर्भं नीत्वा–ग.। २. 'ध्यानं' इत्यस्य स्थाने 'न्तं'–ख.। ३. 'विधि' इत्यस्य स्थाने 'वद्'–क.ख.। ४. 'विदध्यात्' इत्यस्य स्थाने 'मध्यास्य'–ग.। ५. लयं–क.। ६. इत्यस्य परं 'क्ष'–क.। ७. बिन्दौ–ख.। ८. विचिन्त्यामित–ख., विकल्पमिति–ग.। ९. तेजः सिद्धम्–ग.। १०. धृति–क.। ११. 'चक्र' इत्यस्य स्थाने 'वक्त्र'–ख, चक्रे–ग.। १२. शिवशक्तिरूपं–ग.। १३. प्रभावम्–ख.। १४. भासं–ख.। १५. कृतिर्द्वे–ख.। १६. बीजत्रितयै–ख.। १७. 'कुमा....र्चयेत्' इत्यस्य स्थाने 'कुमारीमर्चयेत्'–क., 'कुमारिकाबटुकमभ्यर्च्य'–ग.। १८. 'इति' नास्ति–क. ग.। १९. 'इति' नास्ति–क. ग.। २०. रस्र–ग.। २१. 'मण्डलं' नास्ति–ख.। २२. 'भेदेन' इत्यस्य स्थाने 'भेद' इति–ख.।

रेण मण्डलं संपूज्य साधारं पात्रं प्रतिष्ठाप्यार्घ्यप्रतिष्ठावत् प्रतिष्ठितक[1]लशं [2]दिव्येन सद्वितीयेनापूर्य तत्र स्वस्वमन्त्रान् विन्यस्य [[3]वि]शेषार्घ्य[4]बिन्दुं निक्षिप्य [[5]सु]वस्त्रासनं पुष्पगन्धताम्बूलाद्यैर्भक्ष्यभोज्यलेह्यचोष्यचर्व्यखाद्यैर्मधु-मांसभेदैश्च [6]सिद्धान्नादिभिश्च[7] सदीपै[8]स्तानर्चयित्वा पादवन्दनं विधाय त्रिः पाय-यित्वा चक्रदेवतासंख्यया चतुष्षष्टिसंख्यया वा द्वात्रिंशद्द्व[9]याष्टाष्टचतुः-[10]संख्यापर्यन्तं यथाशक्ति पादप्रक्षालनाद्यर्घ्यप्रतिष्ठापुरःसरं वित्तशाठ्यं[11] विना योगिनीचक्रं नित्यपूजान्ते [12]ह्यन्वहमर्चयित्वा त्रिः पात्रं कारयित्वा परमे-श्वरी[13]भक्तिमभिप्रार्थ्य तदनुज्ञातो मूलवि[14]द्याबीजत्रयं तु[15]रीयबीजान्तैस्तत्त्वचतुष्टयान्तैः [16]स्वाहान्तैः [[17]श्री]गुरुध्यानपुरस्स[18]रमन्तःशक्तिमुत्थाप्य समर[19]सीभावं नीत्वा तच्छि-खायां पात्रचतुष्टयं नीत्वा[20] [21]श्रीगुर्वाज्ञया चक्रराजपुरस्सरं ब[22]लिं बहिर्विसृज्य दे[23]वी पूजा नित्यं निर्विघ्नेन भवितव्येत्यभिप्रार्थ्य पुनः [24]समयपात्रमवलोक्य नैवे[25]द्यादिकं

---

अथ जानुभ्यामवनीं गतो मूलविद्याबीजतत्त्वत्रयैस्त्रिवारं प्रसादीकृत्य पूर्वोक्त-मण्डलद्वयं परिकल्प्य तत्र साधारं पात्रद्वयं प्रतिष्ठाप्य सद्वितीयेन विशिष्टजलेनापूर्य विशेषार्घ्यजलं निक्षिप्य सुवर्णवस्त्रादिभिः सम्पूज्य ऐं ह्रीं कौमार्यै नमः, ह्रीं बटुकाय नम इति मन्त्रौ तौ नमस्कृत्य विसर्जयेत्। शुक्लश्वेतश्रीचक्रं देवतासंख्यं योगिन्यष्टाष्टकसंख्यं च सदक्षिणैः सम्पूजयेत्। ततो निवेद्यजातं प्रसादीकृत्य विशिष्टं शिष्येभ्यो दत्त्वा सुखम-नुभवेत्।

---

१. कलश–क., कलशेन–ग.। २. इतः पूर्वं 'शुद्धोदकेन समापूर्य'–ग.। ३. 'वि' नास्ति–क.। ४.इतः परम्–'स्थ'–ख.। ५.स्वर्णवस्त्रादिसमं–ग.। ६.सिद्धाक्षतादि–ग.। ७.'च' नास्ति–ख.। ८.स्तावदर्चयित्वा पाद–ग.। ९.द्व्यष्टचतुः–क.,द्विरष्टाष्टचतुः–ख.। १०.संख्यया–क.ग.। ११.ढ्यं–ख.ग.। १२.त्वन्वहम–ख.,त्वन्महं–ग.। १३.भक्तिभिः प्रार्थ्य–ख.। १४.विद्यया बीज–ख.। १५.तुर्यबीजा–ख.। १६.'स्वाहान्तैः' नास्ति–ख.। १७.'श्री' नास्ति–क.ग.। १८.सरं मन्त्र–ग.। १९.रसभावं–ख.ग.। २०.हुत्वा–ख.। २१.'श्रीगुर्वाज्ञया चक्रराज' इत्यस्य स्थाने 'श्रीचक्रस्याज्ञा'–ख., 'गुर्वाज्ञा'–ग.। २२.बलं बहि–क.। २३.देव्यै पूजा–क.। २४.समर्च्य–ग.। २५.निवेद्या–ख.।

[१]पूर्वं सर्वं स्वयं प्रसादीकृत्य शिष्टं सामयिकानां[२] दत्त्वा तत्प्रसादलब्धवि[३]भवः स्वेच्छया विहरेत्। इति बाह्यपूजा[४]।

[५]अन्तःपूजा यथा[६]वद् योगिनां [७]प्रविलिख्यते। [८]सा [९]यथा—स्वकीयालिकस्थाने ज्ञानक्रियारूपौ[१०] गणेशबटुकौ स्वस्वमन्त्राभ्यां प्रतिभारूपौ[१०] संपूज्य स्वकीयमूलाधाराधः कुलक्षेत्रपालं विश्वधारणप्रतिभारूपं स्मृत्वा द्वादशान्ते भेदाभेदमहामोहविवर्तसाक्षि[११]णं [१२]परिकल्प्य मञ्चकान्तर्गतां [१३]द्वात्रिंशार्णरूपां स्मृत्वा "समस्तप्रकट[१४] गुप्त." इत्यादिपूर्व[पृ. २६]सूचितमन्त्रे[१५]णामस्तकादिगुह्यान्तं चतुष्षष्टि[१६]तदभिमानि[१७]योगिनीमयं [१८]प्रविभाव्य [१९]स्ववामभागे चतुरस्रषोडशदलान्तराले ईशानादिरोमकूपान्तं चित्प्राणविषयात्मकं [२०]गुरुक्रमगुणावलिं स्मृत्वा शिरोरन्ध्रभ्रूमध्यलम्बिकाकण्ठहृदयनाभिमेढ्राधारेषु षडासनं षडध्वरूपं विन्यस्या[२१]कुलकुलशृङ्गाट[२२]गतामनच्ककलां त्रिखण्डमुद्रया आवाहनवि[२३]द्यया [२४]आवाह्य सकलशरीरे

---

अथान्तर्यजनं योगिनीनां लिख्यते यथा—स्वशरीरमेव मण्डपम्, नन्दनकाननं रोमनिचयम्, रत्नज्योतिदृकरभ्यादिक्षोभणमेव वर्तिः, प्रतिबिम्बचिच्छक्तिस्फार एव कामः, आह्लादकारिवृत्तिषु प्रतिपादिता पारमेश्वरी स्फुरत्ता वसन्तः, बाह्यभावविमर्दनी ज्ञानशक्तिरन्तरोल्लास्यात्मिका शक्तिर्गणाधिपतिः, परविचिकीवर्णा चिच्छक्तिकला सरस्वती, नवद्वारमुखेन सकलब्विषयं सम्यक् समुदायं पदारूपा प्रतिपालयन्ती पारमेश्वरी स्फुरत्ता द्वारश्रीः, अधःशक्तिरेव दली(देहली), अन्तःस्थानानि द्वाराणि, तदन्तस्था एकादशदेवता मनसा सह एकादशेन्द्रियाणि, भैमानिताः शिवस्थारा एव गायिकाः।

---

१. 'पूर्वं' नास्ति–ग.। २. इतः परं 'बिन्दुं'–ग.। ३. विभवं लब्ध्वा–ख.। ४. इतः परं 'विधिः'–ग.। ५. अथाभ्यन्तरपूजा–ग.। ६. यथा योगिनः–ग.। ७. 'प्रवि' नास्ति–ख., प्रति–ग.। ८. 'सा' नास्ति–ख.ग.। ९. 'यथा' नास्ति–ग.। १०. रूपेण–ख.। ११. क्षिणीं–ख. ग.। १२. परकलां–ग.। १३. त्रिंशदर्णरूपा–ख.। १४. गुप्तप्रकट इत्यादि–क.ग.। १५. णम–क., णसम–ग.। १६. स्तद–ख.। १७. नयो–क.ग.। १८. परिभाव्य–ख.। १९. स्वकीयवामभागचतु–ख.। २०. गुरुं क्रमेणावलिं–ख.। २१. स्य कुल–ख.ग.। २२. टतामनाकुलानङ्कुशं तटित्प्रभां त्रिखण्डया त्वावाहनं–ख.। २३. विद्यां–क.ख., इतः परम्–'स्मरन्'–ख.ग.। २४. 'आवाह्य .... चक्रमये' नास्ति–ख.।

चक्रमये समरसीकृत[1]परापरकुण्डलि[2]नीमयचिद्दण्डे त्वनुलोमप्रति[3]लोमरूपेण मूलविद्यां स्मृत्वा [4]स्वशिरोगतचतुरस्रे [5]चूडीतलादिवायव्यादिविदिक्ष्वणिमादिकं [6]ब्राह्म्यादिकं मुद्रादशकं [7]चान्तरन्तःशृङ्गाटकेषु बाह्योक्तप्रकारेण पद्मरागरश्मिकदम्ब[8]करूपं प्रादक्षिण्येन संपूज्य तच्चक्रेश्व[9]रीं त्रिपुरां[10] नित्यां[11] त[12]च्चक्राभिमानिनीं स्मृत्वा त[13]त्रत्येन समर्पणमन्त्रेण परामृतक[14]लापात्रं स्मरेत्। तत्रैव चतुरस्राभ्यन्तरे [15]द्व्यष्टदलपद्मे ललाटाग्रा[16]दितः कलाषोडशरश्मिकदम्बकं वामावर्तेन तच्चक्रेश्वरीं त्रिपुरेश्वरीं नित्यां पूर्ववत्त[17]च्चक्रव्यापिनीं स्मृत्वा तत्समर्पणमन्त्रेण प[18]रामृतास्रावं कृत्वा तदभ्यन्तरे त[19]त्रैवाष्टदलपद्मं पद्मरागोपमं संचिन्त्य ललाटाग्राभ्यन्तरे पूर्वाद्याग्नेयादि[20]दिग्विदिक्ष्वनङ्गाद्य[21]ष्टरश्मिकदम्बकं बाह्योक्तमन्त्रैः स्मृत्वा तच्चक्रेश्वरीं त्रिपुरसुन्दरीं नित्यां त[22]त्समर्पणमन्त्रं च [23]स्मृत्वा बिन्दुम[24]ध्यं भ्रू[25]चक्रं प्रविश्य चतुर्दशदेवीं [26]चक्रेश्वरी[27] तच्चक्रसमर्पणं [28]तत्पृष्ठादिवामावर्तेन कृत्वा लम्बिकायां कण्ठे [29]चक्रदशद्वन्द्वं पूर्ववत् कृत्वा हृत्कमले त्वष्टास्रचक्रे पुरत आरभ्य

---

अथ पूजा यथा — अथ **रत्नावल्यां** कथितत्रिखण्डमुद्रया कुलकुण्डलिनीमुत्थाप्य षोडशान्तर्गतसर्वानन्दमये बैन्दवे महापीठे समावाह्य तत्रोक्तमुद्रानवकं प्रदर्श्य मानसैरुपचारैराराधयेत्। **उक्तं** हि—

---

१. कृत्य– ख.। २. लिन्यामेकीभूता चिद्दण्डमय्यामनु– ख., लिनीद्वयत्रिखण्डे अनु– ग.। ३. लोमेन रूपेण– ख.। ४. 'स्व' नास्ति– क. ग.। ५. भूतले तलादिवायव्यादिदिग्विदक्षिणमादिकं– क.। ६. ब्रह्माण्यादिकं– ख.। ७. चान्तरतः शृङ्गाटेषु– ख.। ८. म्बकं– ख.। ९. श्वरी– क. ग.। १०. पुरा– क. ग.। ११. त्या– क. ग.। १२. रथाङ्गाभिमानिनीं– ख.। १३. तत्र तेन– क.। १४. कलां स्मृत्वा तत्रैव– ख.। १५. दिरष्टदल– ख.। १६. 'ग्रा' नास्ति– क. ख.। १७. तच्चक्रेश्वरी– ग.। १८. परापरामृतस्रावं– ग.। १९. अत्रैवा– ख.। २०. 'दि' नास्ति– क. ग.। २१. ष्टकरश्मि– ख.। २२. तत्र सम– क., 'तत्' नास्ति– ख.। २३. 'स्मृत्वा' नास्ति– ग.। २४. बिन्दुचक्रे– ख., बिन्दुमध्ये– ग.। २५. भ्रूमध्ये– ख.। २६. इतः परम्– 'तत्'– ख. ग.। २७. रीस्तच्च– ख.। २८. तत्प्रतिष्ठ्यादि– ख. तत्सृष्ट्यादि– ग.। २९. 'चक्र' इत्यस्य स्थाने 'च'– ख.।

[१]वामावर्तेन वशिन्याद्यष्टकं तच्चक्रेश्वरीं तत्समर्पण[२]मन्त्रं स्मृत्वा नाभिचक्रे त्रिकोणे पुरस्तादारभ्य कामेश्वर्यादिदेवीत्रयं तच्चक्रेश्वरीं प्रादक्षिण्येन स्मृत्वा [३]तत्समर्पण-मन्त्रेण [४]समर्प्य च मेढ्राधारे मूलविद्यया समस्तया [५]तुरीयपीठमन्त्रेण कुल-कुण्ड[६]लिन्यां स्मृत्वा तच्चक्रे[७]श्वरीतुरीयबीजरूपां स्मृत्वा परामृत[८]चुलुकोदकेन तत्स-मर्पणमन्त्रं[९] [१०]स्मरन् पूजां समर्प्याध्युष्टकोटिरोमनिचये एकैकरोम [११]प्रत्यष्टाष्टकं[१२] शृङ्गाटकं[१३] स्रवदमृतक्लिन्नं[१४] स्मृत्वा चतुष्षष्टिलक्षकोटि[१५]महायोगिनीश्रीपादुकां पूजयामीति [१६]प्रपूज्य मूलाधारस्वाधिष्ठानमणिपूरकानाहतवि[१७]शुद्धिकण्ठ-लम्बिका[१८]भ्रूमध्यान्तं नित्याष्टकं भ्रूमध्यादुपरि[१९] ह्यवशिष्टनित्याष्टकमाद्वादशान्तं [२०]प्रतिगृह्यैकैकं संपूज्य पूजा[२१]पूर्त्यर्थं [२२]तुरीयसमयविद्यां परामृतवाहिनीं तत्रैव स्मृत्वा शक्ति[२३]पञ्चकचतुर्वह्निभिर्द्राव्यद्रावकभावेन स्वशरीरं[२४] योन्य(व ?)र्णव[२५]रूपमकुला-मृत[२६]कलया [२७]पद्मरागमय्या कोटिचन्द्रसुशीत[२८]लया त्वापूर्य तस्मिन् परामृत[२९]हृदये स्वविमर्शशक्तिं स्वात्मैक्येनाद्यवर्णरूपनिश्शेषबीज[३०]गर्भगां कृत्वा [३१]परानन्दानुभ-वात्मकस्तिष्ठेत् ।

---

उत्थाप्य खण्डत्रितयेन मुद्रया भवार्णवध्वंसकरीं पुरातनीम् ।
सौषुम्नमार्गे शवमूलविद्यया गले महापीठमये च तां नयेत् ॥
आधायेद्(वाहयेद्) यथापूर्वमुपचारैः पृथक् पृथक् ।
मानसैर्गन्धपुष्पाद्यैः पूजयन् योगिनां सदा ॥

---

१. 'वामावर्तेन' नास्ति– ख. । २. मन्त्रश्च– ख. । ३. 'तत्' नास्ति– ख. । ४. 'समर्प्य च' इत्यस्य स्थाने 'स्मरणम्'- ग. । ५. तुर्यपीठ– ख. । ६. लिनीं स्मृत्वा– ग. । ७. श्वरीं तुर्यबीज– ख. । ८. चुलुकेन– ख. । ९. मन्त्रेण– ग. । १०. स्मरणपूजां– ग. । ११. प्रत्यष्टकं– ख., प्रविष्टाष्टकं– ग. । १२. इतः परं 'अग्रं' इति– ख. । १३. 'टकं' इत्यस्य स्थाने 'टं'– ख. । १४. 'क्लिन्नं स्मृत्वा' इति वारद्वयं दृश्यते– ख. ग. । १५. इतः परं 'मात्र'– क. । १६. 'प्र' नास्ति– ख. । १७. 'विशुद्धि' नास्ति– ख. । १८. इतः परं 'नासिकाग्र'– ख. । १९. पर्यवशिष्ट– ख., परिवाह्यावशिष्ट– ग. । २०. प्रतिश्रध्ये एकैकं– ख. । २१. पूर्त्यर्थ– ख. । २२. तुर्यसमय– ख., तुरीयां समय– ग. । २३. पञ्चक– ख. । २४. शरीर– ख. । २५. रूपं कुला– ग. । २६. कलायां– ग. । २७. पद्मरागारुणरागा कोटि– ख., पद्मरागमयं कोटि– ग. । २८. तलं त्वा– ग. । २९. 'हृदये' इत्यस्य स्थाने 'द्रवे'– ग. । ३०. गर्भां कृत्वा– ख. । ३१ 'परा .... तिष्ठेत्' इत्यस्य स्थाने 'परानन्दात्मकं स्थित्वा'– ख. ग. ।

[1]ततः पार्थिवगुणं सौगन्[2]ध्यमशेषं गन्धपुष्पधूपभावेन समर्प्याग्नितत्त्वगुणमखिलप्रकाशं[3] दीपमालाकर्पूरारार्त्रिकं दत्त्वा[4]ऽऽप्यगुणमशेषं [5]सरसमन्नभक्ष्यभोज्यादिकं[6] निवेद्य [7]वायुतत्त्वगुणस्वशरीरचेष्टितं प्रदक्षिणनमस्कारं परिकल्प्याऽऽकाशतत्त्वगुणशब्द[8]घण्टादि[9]र्ना[10]नावाद्यं परिकल्प्य [[11]बुद्धिविभ्रमरूपा [12]वृत्तीर्नृत्यगीतं परिकल्प्य ] [13]मनोबुद्ध्यहङ्कारान् पशून् [14]सरागादिकान् [15]विशस्य तच्छोणितधारया [16]परमेश्वरीं परितोष्य ज्ञानखड्गेन मलमायाकर्माख्यान् [17]मगान् क्षयं नीत्वा तदाममांसं बहुविधं परमेश्वर्यै निवेद्य कपाल[18]चन्द्रशृङ्गाटोदर[19]गलितां मद्यधाराम् [अविच्छिन्नां] देव्यै [20]समर्प्य [21]स्वयं [22]विमर्शशक्त्या[23] शृङ्गाटोदर[24]गतया बिन्दौ परमाद्वयपदे समरसी[25]भूय पूजामनवरतं तन्वन् आनन्दमयो भवेदित्यन्तःपूजा ।

**॥ [26]इति [श्रीविद्यानन्दनाथविरचितायां श्रीत्रिपुरसुन्दरीपद्धत्यां ज्ञानदीपविमर्शिन्यां ] पूजापद्धतिस्[27]त्रयोदशी ॥**

■

---

उपचाराश्च यथा — भूमिर्गन्धः, आकाशः पुष्पम्, वायुर्धूप , तेजोः [दीपम्], जलं नैवेद्यम्, स्वशरीरचेष्टाः प्रदक्षिणं नमस्कारं परिकल्प्य शब्दं घण्टादि प्रतिभाव्य बुद्धिनर्तकीं परिकल्प्य

---

१. 'ततः' नास्ति–ख.। २. न्धम–ख.। ३. काश–क.। ४. 'आप्य' इत्यस्य स्थाने 'जल'–ग.।५. 'सरसमन्न' इत्यस्य स्थाने 'नाना'–ख.,सु–ग.।६. 'कं' नास्ति–ख.।७. 'वायु ... परिकल्प्य' नास्ति–क.। ८. शब्दं–क.ग.। ९. 'दि' नास्ति–ख.। १०. 'नाना' इत्यस्य स्थाने 'गीत'–ख.ग.। ११. 'बुद्धि ... परिकल्प्य' नास्ति–क.। १२. 'वृत्तिर्नर्तकिका परि–ख.। १३. मनोऽहङ्कारादीन्–ग.। १४. 'सरागादिकान्' नास्ति–घ.ङ.। १५. विहत्य–ग., कृत्वा–घ. ङ.। १६. 'परमेश्वरीं' इत्यस्य स्थाने 'देवीं'– घ. ङ.। १७. मृगनक्षयान् छित्वा–ख., मृगान् हत्वा तन्मांसं बहु–घ. ङ.। १८. 'चन्द्र' नास्ति–ख.ग.घ.ङ.। १९. गतां मध्यधारामविच्छिन्नां देव्यै–ख.। २०. सन्तर्प्य–क. ग.। २१. 'स्वयं' नास्ति–क.। २२. 'विमर्श .... द्वयपदे' नास्ति–घ. ङ.। २३. इतः परं 'सहज'–ख.। २४. रगाध–ख., रगताध्वा–ग.। २५. भाव–ख.। २६. 'इति .... त्रयोदशी' इत्यस्य स्थाने 'इति पूजापद्धतिस्त्रयोदशी'–ख., 'इति ... चतुर्दशी'–घ.ङ.। २७. तिरष्टमी (ष्टादशी)–ग.।

# मुद्रापद्धतिः

अथ मुद्रोद्धारो [१]यथा बाह्याभ्यन्तरभेदेन । बाह्या सर्वसंक्षोभिण्यादियोनिमुद्रान्ता[२]स्तत्तद्बीजैः सह प्रतिचक्रमेकैकाः[३] पूजायां करविरचने[४] निदर्शनीयाः । [५]त्रिखण्डा [६]त्वावाहनार्थमेव [विनियुक्ता] । [७]द्रां द्रीं क्लीं ब्लूं सः क्रों हस्क्रीं ऐं इति मुद्राबीजानि । रचनाप्रकारस्त्वस्माभिः कृतायामर्थरत्नावल्यां मुद्रापटलव्याख्याने द्रष्टव्यः ।

[८]अभ्यन्तरे [९]योनिमुद्रां [१०]योजयेत् । मेढ्राधारनाभिहृदयकण्ठलम्बिका[११]भ्रूमध्याष्टपद्मषोडशदलचतुरस्र[१२]नवाधारेषु पूर्वोक्त[१३]बीजानि वाग्भवादीनि [१४]सहजबीजान्तानि स्मरन् कुलशक्तिविभ्रमं भावयेत् । [१५]योगिनामान्तरमुद्राः ॥

॥ इति विद्यानन्द[१६]विरचितायां श्रीत्रिपुरसुन्दरीपद्धत्यां ज्ञानदीपविमर्शिन्यां मुद्रापद्धति[१७]श्चतुर्दशी ॥

■

---

१. 'यथा' नास्ति–ख.। २. न्तांस्तत्तनून् बीजैः–क.। ३. कैकाः पूजनीयाः कर–ख.ग.। ४. चनेन दर्शनीया–ख.ग.। ५. विखण्डा–क.। ६. 'त्वावा .... नियुक्ता' इत्यस्य स्थाने 'आवाहनार्थं चैवेयं'–क. 'आवाहनाय'–ग.।,७. द्रीं द्रां ब्लूं क्लीं सं क्रों ह् स् रव् फ्रें ह् सौः ऐं–ख.। ८. आभ्यन्तर–ख.ग., इत्यस्य पूर्वं 'मुद्राक्रमः'–ख.। ९. 'योनिमुद्रां' इत्यस्य स्थाने 'योनिमुद्राभागौ कृत्वान्ते बीजमुद्रां–ख.ग.। १०. 'योजयेत्' इत्यस्य स्थाने 'प्रतिलोमेन'–ख.। ११. काग्रमुख्याष्ट–क.। १२. नवस्थानेषु–क.ख.ग.। १३. इत्यस्य परं 'तत्तद्'–ख.। १४. 'सहज' इत्यस्य स्थाने 'सह'–ख., 'ह्सौं'–ग.। १५. 'योगि ...श्चतुर्दशी' इत्यस्य स्थाने 'एता आभ्यन्तरमुद्रा योगिभिरनुसन्धेया इति मुद्रापद्धतिश्चतुर्दशी'–ख.। १६. इतः परं 'नाथ'–ग.। १७. तिरेकोनविंशति–ग.।

# होमपद्धतिः

अथ होमः[१]। तत्र बाह्यो यथा—सुलक्षणे[२] योनिकुण्डे भगाङ्कचतुरस्रार्ध[३]चन्द्रवृत्त[४]त्रिकोणा[५]दिकुण्डानामन्यतमं[६] [७]कार्यानुरूपेण [८]कुण्डं साधयेत्। तत्र चतुरस्र[९]योनिकुण्डादीनां लक्षणमुच्यते। [१०]यथा—चतुरस्रं समं ततो हस्तमात्रं[११] प्रमाणं पञ्चदशाङ्गुलखातं [च[१२]]। तन्मध्ये[१३]ऽङ्गुलैकं निर्गत्याङ्गुलैकोच्छ्रितकण्ठं कण्ठोपरि नवाङ्गुलोच्छ्रिता [१४]मेखला। मेखला च प्रथमा षडङ्गुलविस्तारा। तस्यामङ्गुलद्वयं लम्बित्वा[१५] चतुरङ्गुल[१६]विस्तारा द्वितीया मेखला, तस्या[१७]प्यङ्गुलद्वयं [१८]लम्बित्वा द्व्यङ्गुलविस्तारा तृतीया मेखला। [१९]इत्थं त्रिमेखला [२०]हस्तप्रमाणाद् [२१]बहिर्बहिः कर्तव्या। तत्पश्चिमपार्श्वमध्ये द्वादशाङ्गुलदीर्घा अष्टाङ्गुलविस्तारा योनिः कर्तव्या। एकमेखलापक्षे[२२]ऽष्टादशाङ्गुलं[२३] खातम्, तत्र[२४] चैकाङ्गुलः कण्ठः षडङ्गुलोच्छ्रिता मेखला[२५] चतुरङ्गुलविस्तृता योनिः। [२६]प्राग्वदङ्गुलौ काष्ठकण्ठौ। कुण्डाभ्यन्तरमुखा किञ्चिदवनता अश्वत्थपत्रवद् योनिः। एवं लक्षणयुक्तं[२७] त्रिकोणाद्याकारं वा कुर्यात्। इत्थं देव्यास्त्वीशानभागे[२८] कुण्डं कुर्यात्। तत्र उल्लेखनप्रोक्षणादि[२९]संस्कृते हसन्त्यां भूमौ वा[३०] चतुरस्रत्रिकोणाङ्कितायां [३१]मूलविद्यामुच्चार्य

---

१. होमो बाह्याभ्यन्तरभेदेन तत्र– ख. ग., इतः परं 'सोऽपि द्विधा'– घ. ङ.। २. सुलक्षणयोनिकुण्डभगाकारचतु– ख.। ३. 'अर्धचन्द्रवृत्त' नास्ति– घ. ङ.। ४. इत्यस्य परं 'अष्टपत्रनवपत्रनव'– ख.। ५. णवृत्तानाम– ग.। ६. 'अन्यतमं .... कुण्डादीनां' नास्ति– घ. ङ.। ७. तमे काम्यानुरूपेण– ख.। ८. 'कुण्डं .... कुण्डं कुर्यात्। तत्र' नास्ति– ख.। ९. 'योनि' नास्ति– ग.। १०. 'यथा' नास्ति– ग.। ११. 'मात्रं' नास्ति– घ. ङ.। १२. 'च' नास्ति– ग. घ. ङ.। १३. 'तन्मध्ये' इत्यस्य स्थाने 'अन्य'– क.। १४. 'मेखला' नास्ति– घ. ङ.। १५. लङ्घित्वा– ग.। १६. ङ्गुलीवि– ग.। १७. तस्यामपि– ग., तस्यामेव– घ. ङ.। १८. लङ्घित्वा– ग., लङ्घयित्वा– घ. ङ.। १९. 'इत्थं त्रिमेखला' नास्ति– घ. ङ.। २०. हस्ते– क.। २१. 'बहिः' नास्ति– घ. ङ.। २२. 'अष्टाङ्गुलः खातः'– ग.। २३. लघातकर्तव्या– घ. ङ.। २४. 'तत्र .... कण्ठः' इत्यस्य स्थाने 'तत्रैव मेखला'– घ. ङ.। २५. इतः परं 'पक्षे'– घ. ङ.। २६. 'प्राग्वद ... योनिः' नास्ति– घ. ङ.। २७. णयुतम्– घ. ङ.। २८. 'भागे' इत्यस्य स्थाने 'मध्ये'– ग.। २९. इतः परं 'संस्कारैः'– घ. ङ.। ३०. 'वा' नास्ति– घ. ङ.। ३१. मूलबीजमुच्चार्य– ख.।

कुण्डाय नम इति कुण्डं संपूज्य[१] ऋतुमतीं कामेश्वरीं[२] सकामां ध्यात्वा समावाह्य मूलविद्यया समभ्यर्च्यारणेः सूर्यकान्तात् कुलाष्टकरूपवेश्यादिगृहाद्वा पुष्पित[३]स्त्री[४]सुभगानामन्यतम[५]स्या गृहाद्वा[६] विशेषतः। अथवा द्विजातिगृहाद्वा [७]स्वगृहाद्वा वह्निमानीय वौषडन्तमूलविद्याभिमन्त्रि[८]ताभ्यां लोचनाभ्यामवलोकनमग्नेरस्त्रमन्त्रेण ताडनं [९]हुंफडन्तेन क्रव्यादंशपरित्यागः। कवचमन्त्रेण संपूज्य कुण्डस्योपरि प्रदक्षिणं[१०] [११]त्रिधा [१२]परिभ्रम्य जानुभ्यामवनीं गत[१३] आत्मनः संमुखं कृ[१४]त्वा कुण्डे स्थापयेत्। क्लीं वह्निमूर्तये नम [इत्यग्निमभ्यर्च्य] कामेश्यां[१५] गर्भनाड्यां [१६]वामनाड्यां प्राणपूरणपुरस्सरं मूलमध्येनाग्निं[१७] संहारमुद्रयान्तःसमाकृष्य बैन्दवो[१८]दराग्निना समरसी[१९]कृत्योद्भवमुद्रया कामराजेनैव दक्षिणनाड्या रेचकेन मूलम[२०]ध्यानन्त[२१]रं वह्निचै[२२]तन्याय नमः। इत्थं[२३] तेन कामे[२४]शीगर्भनाड्यां प्रतिष्ठाप्य ज्वालिनीमुद्रां प्रदर्श्य मू[२५]लषडङ्गे[२६]नाग्निषडङ्गेन च पूजयेत् [२७]तमग्निम्।

[२८]यथा—सहस्रार्चिषे हृदयाय नमः। स्वस्तिपूर्णाय शिरसे स्वाहा। [२९]अन्तस्थपुरुषाय शिखायै वषट्। धूमव्यापिने[३०] कवचाय हुं। सप्तजिह्वाय नेत्रत्रयाय वौषट्। धनुर्धराय अस्त्राय फट्—[३१]इत्यग्निषड[३२]ङ्गानि। वैश्वानर जातवेद इहावह लोहिताक्ष[३३] सर्वकर्माणि साधय स्वाहे[३४]त्यग्निमन्त्रेण[३५] शक्तिस्वस्तिक-

---

१. इतः परं 'ऐं ह्रीं श्रीं वामायै नमः ३ ज्येष्ठायै ३ रौद्र्यै. ३ अम्बिकायै. ३ एताः शक्तीर्मेखलोपरि पूर्वद्वारस्य संपूज्य तन्मध्ये' इत्यधिकः पाठः–ग.। २. रीं कामेश्वरं सकामं ध्यात्वा–ख.। ३. 'स्त्री' इत्यस्य स्थाने 'श्री'–क.। ४. सुगण्डानाम–ख.। ५. मस्थ–ख.। ६. 'वा' नास्ति– ख.घ.ङ.। ७. 'स्वगृहाद्वा' इत्यस्य स्थाने 'अपि'–ग.। ८. न्त्रितनेत्राभ्या–ख.। ९. 'हुं' नास्ति–ग.। १०. णेन–ख.। ११. 'त्रिधा' इत्यस्य स्थाने 'त्रिः'–ख.। १२. कृत्वा संपरिभ्राम्यात्मनो जानु–ग.। १३. गतः सन्नात्मनः–ख.। १४. 'कृत्वा' नास्ति–घ.ङ.। १५. इतः परं 'कामेश्वर्या'–ख. ग. घ. ङ.। १६. 'वाम .... स्सरं' इत्यस्य स्थाने 'प्रतिष्ठाप्य ज्वालिनीमुद्राङ्गपूरणसमं'–ग.। १७. 'ग्नि'–क.। १८. दरा–क. ख.। १९. कृत्यावाहनमुद्रया–घ.ङ.। २०. ध्येनान्तरं–ख.। २१. न्तर–क.। २२. वैतत्याय–क.। २३. इत्यनेन–ग. घ. ङ., अस्य स्थाने 'इति'–ख.। २४. कामेश्वरीगर्भ–ख. घ. ङ.। २५. कामराजेन षडङ्गेन पूज–ख.। २६. 'नाग्निषडङ्गेन च' नास्ति–ग.। २७. 'तमग्निम्' नास्ति–ख.घ.ङ.। २८. 'यथा' नास्ति–ख.। २९. 'अन्तस्थ' नास्ति–ख., अस्य स्थाने 'उत्तिष्ठ'–ग.घ.ङ.। ३०. पिन्यै–ग.। ३१. 'इत्यग्निषडङ्गानि' नास्ति–घ.ङ.। ३२. षडङ्गैराराध्य वैश्वा–ग.। ३३. इतः परं 'कर्माणि'–ख.। ३४. त्यनेनाग्नि–घ.ङ.। ३५. णाराध्य वरदा–ग.।

वरदाभय[1]धारिणं कनकवर्णं कनकमालालङ्कृतं[2] वह्निं सम्पूज्य तन्मध्ये जिह्वा-सप्तक[3]बीजविन्यासं विदध्यात्। [4]यथा—अग्निमुखे षट्कोणं [5]विलिख्य ऐं [6]स्त्र्यूं [7]पद्मरागायै [8]तप्तचामीकरवर्णायै [9]हिरण्यायै नमः। [10]मध्ये [11]शाङ्करकोणे ऐं [12]ख्र्यूं [13]सुवर्णायै सूर्यवर्णायै गगनायै नमः। [14]ऐन्द्रकोणे [15]ऐं स्त्र्यूं [16]रुद्रलोहितायै प्रोद्यदादित्यवर्णायै रक्तायै नमः। [17]वह्निकोणे ऐं [18]ह्र्यूं लोहितायै[19] नीलवर्णायै नमः। [20]ततस्तदग्निहृदये देवीं सपरिवारां संपूज्य तदनन्तरं रक्तश्वमारपुष्पाणि सिताज्यक्षीरसंयुतानि केवलाज्यहोमपूर्वकं मूलविद्यया [21]नैर्ऋत्यकोणे ऐं ब्ल्यूं श्वेतायै मुक्तामणिवर्णायै सुप्रभायै नमः। [22]पश्चिमकोणे ऐं [23]प्र्यूं धूमिन्यै पद्मराग[24]वर्णायै अतिरक्तायै नमः[25]। [26]वायव्यकोणे ऐं [27]ष्ट्र्यं करात्यै [28]चन्द्रकोटिप्रभायै बहुरूपायै[29] नमः[30]। [31]एतदनन्तरं [32]कुण्डमध्ये देवीं[33] समभ्यर्च्य पूर्ववत् [34]सपरिच्छदामिति गर्भनाड्या [35]स्थापितस्य [36]मन्त्रसंस्कृतवह्ने[37]स्तोयबिन्दुं दत्त्वा

---

१.धारकं–ग.। २.लङ्कृतांसं–ख.। ३.सप्तकन्यासं–ख.। ४.'यथा' नास्ति–घ.ङ.। ५.विन्यस्य–ग.। ६.'स्त्र्यूं' इत्यस्य स्थाने 'स्त्रूं'–ख.ग., 'श्रीं' घ.ङ.। ७.परागायै–ख.। ८.तच्चामी–घ.ङ.। ९.'हिरण्यायै' नास्ति–घ.ङ.। १०.'मध्ये' नास्ति–ख.। ११.अग्रकोणे–ग., 'शाङ्करकोणे' नास्ति–घ.ङ.। १२.ब्यूं–ख.घ.ङ., स्त्रूं–ग.। १३.सुपर्ण्यै वैडूर्यवर्णायै कनकायै नमः–ख., सुवर्णवैदूर्यवर्णायै गगना–ग., वैडूर्यवर्णायै सुपणीकनकायै नमः–घ.ङ.। १४.'ऐन्द्रकोणे' इत्यस्य स्थाने 'पूर्वे'–ग., 'ईशाने'–घ.ङ.। १५.'ऐं स्त्र्यूं' इत्यस्य स्थाने 'श्र्यूं'–ख., 'स्त्रूं'–ग. 'स्त्रूं'–ग. 'ल् र् ईं'–घ.ङ.। १६.'रुद्र ....नमः' इत्यस्य स्थाने 'आदित्यवर्णायै लोहितायै रक्तायै नमः'–घ.ङ.। १७.'वह्नि' इत्यस्य पूर्वं 'दक्षिणे'–ग.। १८.ब्यूं–ख., यूं–ग., प् र् यूं–घ.ङ.। १९.'लोहि... 'नमः' इत्यस्य स्थाने लोहितायै इन्द्रनीलप्रभायै कृष्णायै नमः'–ख., 'इन्द्रनीलवर्णायै नमः'–ग., 'इन्द्रनीलवर्णायै लोहितायै कृष्णप्रभायै नमः–घ.ङ.। २०.'ततस्त ....मूलविद्यया' नास्ति–ख.ग.ङ.। २१.'नैर्ऋत्य ....नमः' इत्यस्य स्थाने 'नैर्ऋतिकोणे ऐं ल्यूं श्वेतायै मणिप्रभायै सु .... भायै नमः'–ख., 'पश्चिमकोणे ऐं ल्यूं श्वेतायै मुक्तामणिवर्णायै नमः'–ग., 'अग्ने ऐं र् ल् यूं मुक्तामणिप्रभायै श्वेतायै प्रभायै नमः–घ.ङ.। २२.'पश्चिम ...नमः' इत्यस्य स्थाने 'नैर्ऋत्यकोणे ऐं थ्यूं कल्पकोटिचन्द्रसमप्रभायै बहुरूपायै अग्निरक्तायै नमः'–ग., 'नैर्ऋत्ये ऐं र् ल् यूं पद्मरागवर्णायै धूमिन्यै रक्तायै नमः'–घ.ङ.। २३.'ह्यूं'–ख.। २४.रागप्रभायै–ख.। २५.इतः परं 'इति'–ख.। २६.पश्चिमकोणे–घ.ङ.। २७.ऐं ट्र्यूं करात्यै–ख., 'ऐं प्यूं चन्द्रं'–घ.ङ., 'ऐं ....नमः' इत्यस्य स्थाने 'दक्षिणोत्तरगामिनी नित्या विन्यसेदिति'–ग.। २८.'चन्द्र ....नमः' इत्यस्य स्थाने 'मध्ये बहुरूपां दक्षिणोत्तरगामिनीं विन्यसेदिति। एतद्बहिर्मध्ये'–ख.। २९.इतः परं 'करात्यै'–घ.ङ.। ३०.इतः परं 'वायव्ये मध्येजिह्वदक्षिणोत्तरगामिनी न्यसेत्'–घ.ङ.। ३१.'एतद ....मध्ये' नास्ति–ग.घ.ङ., तत्स्थाने 'तद'–घ.ङ.। ३२.कुण्डलमध्ये–क.। ३३.देवीमभ्यर्च्य–घ.ङ.। ३४.वच्छन्दामिति–क., वत् सपरिवारामिति–घ.ङ.। ३५.क्षिप्तस्याग्निमन्त्र–ख.। ३६.'मन्त्रसंस्कृत' नास्ति–घ.ङ.। ३७.वन्दीस्तोय–ख.।

सदिन्धनैराच्छाद्य[1] गर्भरक्षार्थमस्त्रजप्तदर्भकङ्कणं[2] देवीहस्ते बध्वा गर्भाधानार्थं मूलविद्यया मूलस्वामिनीमभ्यर्च्य प्रथमबाणेनाहुतित्रयं दत्त्वा रक्ताश्वमारपुष्पाणि सिताज्यक्षीरसंयुतानि जुहुयात् [3]त्रिधा। ततः पुंसवनार्थं मूलविद्यया मूलस्वामिनीं [4]संपूज्य द्वितीयबाणेनाहुतित्रयं हुत्वा ततः सीमन्तोन्नयनार्थं [5]मूलविद्यया मूलस्वामिनीं [6]समभ्यर्च्य तृतीयबाणेनाहुतित्रयं [7]हुत्वा ततो मूलविद्ययाभिमन्त्रितकुसुमेन[8] [9]चक्राङ्गकल्पनं [10]कुर्यात्। गर्भनिष्क्रामणं[11] च विधाय तदर्थं मूलविद्यया[12] देवीं[13] समभ्यर्च्य चतुर्थबाणेनाहुतित्रयं [14]हुत्वा [15]नामकरणार्थं मूलस्वामिनीं संपूज्य पञ्चमबाणेनाहुतित्रयं [16]हुत्वा कामाग्निस्त्वं हुताशन[17] इति नाम विधाय [18]ततो मेखलासु रक्षार्थं[19] ब्राह्म्यादिकं[20] संपूज्य कुलिशाद्यस्त्राणि[21] [22]च [23]वज्रशक्तिदण्डखड्गपाशध्वजगदाशूलपद्मचक्राणि। ब्राह्म्यादीनामनन्तरं [24]दिक्षु कामबीजेन[25] [26]कामं संपूज्य पूर्वे[27] दक्षिणस्यां[28] वसन्तं पश्चिमायां रतिम् उदीच्यां प्रीतिमिति। ततश्चन्दनादिसुगन्धकाष्ठैर्धूपदीपार्थं[29] वह्निमुद्धृत्य कुण्डान्तरे धारणीयम्[30]। यथाशक्ति[31] नित्यहोमं जुहुयात्।

---

१. सदित्वनै–क.। २. मन्त्रजप्तं दर्भ–ख.ग.ङ.। ३. 'त्रिधा' नास्ति–ख.ग.। ४. 'संपूज्य .... मूलस्वामिनीं' नास्ति–ग.। ५. 'मूलविद्यया' नास्ति–ख.घ.ङ.। ६. नीमभ्यर्च्य–ख.। ७. दत्वा–ग.घ.ङ.। ८. विद्याऽभिमन्त्रित–ख.ग.घ.ङ.। ९. वस्त्राङ्ग–ख.। १०. 'कुर्यात्' नास्ति–ख.। ११. निष्क्रमणं–ग.। १२. 'विद्यया' नास्ति–ख.। १३. वीमभ्यर्च्य–घ.ङ.। १४. दत्वा–घ.ङ., इतः परं 'ततो'–घ.ङ.। १५. 'नाम .... हुत्वा' नास्ति–ख.। १६. दत्वा–घ.ङ.। १७. तासने–ग.। १८. 'ततो' इत्यस्य स्थाने 'नव'–ग.। १९. र्थब्राह्म्या–ख., र्थं ब्राह्म्या–ग.घ.ङ.। २०. काः संपू–ख., कान् संपू–ग.घ.ङ.। २१. स्त्रेण–ख.। २२. 'च वज्र .... दिक्षु' नास्ति–ख.। २३. 'वज्र' इत्यस्य स्थाने 'नक्र'–क.। २४. 'दिक्षु' नास्ति–ग.। २५. इतः परं 'च'–ख.। २६. 'कामं' नास्ति–ग.। २७. 'पूर्वे .... काष्ठैः' इत्यस्य स्थाने 'पूर्वं वसन्ताय नमः। दक्षिणे रं रतये नमः। पश्चिमे ऐं प्रीत्यै नमः। उदीच्यां ततः बर्बशसुन्धकायै नमः'–ग.। २८. णायां–ख.। २९. र्थं बहिरुद्धृत्य कुलान्ते धारणीयम्–ख.। ३०. णीय–ग., इत्यस्य परं 'तदग्निहृदये देवीं सम्पूज्य तदनन्तरं रक्ताश्वमारपुष्पाणि सिताज्यक्षीरसंयुतानि केवलाज्यहोमपूर्वकं मूलविद्यया'–ख. घ. ङ., 'ततस्तदग्निसमये देवीं सपरिवारां सम्पूज्य तदनन्तरं रक्ताश्वमारपुष्पाणि सिताज्यक्षीरसंयुक्तानि केवलाज्यहोमपूर्वकं मूलविद्यया'–ग.। ३१. शक्त्या तु होमं–ख.।

काम्यार्थी[१] [1]मूलग्रन्थोक्तमल्लिकाजात्यादिद्रव्यैर्जुहुयात्। पुरश्चरणार्थी [२]मन्त्रदशांशं पलाशपुष्पैर्जुहुयात्। [३]परिवाराणां चैकैकशः पश्चादन्नपानभक्ष्यभोज्यलेह्यचोष्यताम्बूलादिकं नैवेद्यार्थमस्मिन् जुहुयात्। ततो [४]देव्याः करो[५]द्वर्तनादिकं संकल्प्य [६]स्रुचमापूर्य [७]स्रु[८]क्स्रुवं सम्बद्धं कृत्वा [९]तदनूत्थाय ऋजुकायो[१०] भूत्वा स्वनाभिमूले [११]स्रुक्स्रुवादि कृत्वा [१२]पूर्णाहुतिं [१३]हुत्वा मूलविद्यया आज्यधारामविच्छिन्नां [१४]पूर्णा[१५]हुत्यर्थं क्षिपेत्। ततो देवीं [१६]विसृजेत्। [१७]सापेक्षं पूजाचक्रं [१८]गच्छेदिति। ततो व्याहृतिं हुत्वा भस्म [१९]धारयेत्। नाडीसन्धानेन [२०]वह्निस्थां देवीं ब्रह्मरनन्ध्रे[२१] परदेव्यां वा[२२] संयोज्य वह्निमन्त्रात् संहृत्य [२३]द्वादशान्तं नीत्वा हृदि निवेश्य वह्निं विसृज्य प्रस्तररूप[२४]दर्भमालामुद्वास्य मेखलासु स्थितान् मन्त्रान् समाकृष्य [२५]निवेद्य काल[२६]दन्तं त्रिविधबलिमन्त्रान् हृदि कृत्वा[२७] [२८]सम्यग् देवीमुपेत्य पुनर्धूपेन सन्धूप्यार्घ्यपुष्पादिकं दत्त्वा साष्टाङ्गं प्रणम्य अर्घ्यपात्रस्थद्रव्यचुलुकत्रयेण जपहोमौ देव्यै निवेदयेत्।

अथान्तरहोमो यथा—नाभिकुण्ड[२९]कुण्डलिनीचिदग्नौ देवीमये रावरौद्रप्रयोग[३०]लब्धपर[३१]मामृताज्येन सहा[३२]क्षवृत्त्याख्यद्रव्याणि[३३] [३४]सप्तावृत्त्या जुहुयात्।

---

१. इतःपरं 'तु'–ख.। २. जपाद्दशांशं–घ.ङ.। ३. 'परिवाराणां ....जुहुयात्' नास्ति–ग.। ४. 'देव्याः' नास्ति–ख.। ५. र्तनकं–ग.। ६. स्रुवमा–ख.। ७. 'स्रुक्स्रुवं सम्बद्धं' इत्यस्य स्थाने 'स्रुचा सुबन्ध्यां'–ख., 'स्रुवा स्रग्वत्वा'–घ.ङ.। ८. स्रुवा–ग.। ९. 'तदनूत्थाय' इत्यस्य स्थाने 'तदन्व ....'–क., 'तदनु'–ग., 'तदनुस्थापयत्'–घ.ङ.। १०. योऽत्र भूत्वा–ग.। ११. 'स्रुक्स्रुवादि' इत्यस्य स्थाने 'स्रुक्स्रुवः'–ख., 'स्रक्स्रुवादिकं'–ग., 'स्रुक् स्रुवादिकं'–घ.ङ.। १२. 'पूर्णा ....विद्यया' नास्ति–ख.। १३. हुनेन्मूल–ग.। १४. पूर्णां–ख.। १५. हुत्यर्थे–क.। १६. 'वि' नास्ति–ख.। १७. मान्त्रेऽयं–क., 'साक्षेपं' इति पाठान्तरम्–क., 'मान्त्रोऽयं .... धारयेत्' नास्ति। १८. वक्ष्येदिति–क.। १९. वदेत्–ख.। २०. 'वह्नि ....संहृत्य' इत्यस्य स्थाने 'च वह्निस्थां देवीं परदेवतायां संयोज्य वह्निमन्त्रात् समाहृत्य'–ख.। २१. रन्ध्रेषु–ग.। २२. 'वा' नास्ति–ग.घ.ङ.। २३. द्वादशान्ते–ख.। २४. 'दर्भ' नास्ति–ख.। २५. 'निवेद्य ....बलि' इत्यस्य स्थाने 'बलिं दत्वा विविधान् बलि'–ख.। २६. कालदृष्टान्–ग.। २७. इतः परं 'आचम्य'–ख.ग.घ.ङ.। २८. 'सम्यक्' नास्ति–ख.घ.ङ., 'सम्यक् .... प्रणम्य' नास्ति–ग.। २९. 'कुण्डलिनी ....रौद्र' इत्यस्य स्थाने 'कुलि तच्चिदग्नौ देवीमयैरावरणदृक्'–ख.। ३०. गोपलब्धपराज्येन–ग.। ३१. परामृताज्येन–ख.घ.ङ.। ३२. प्रत्याख्य–ख.। ३३. इतः परं 'सप्ताहुतीः'–घ.ङ.। ३४. सप्तव्याहृतिभिर्जुहुयात्–ग.।

---

*१. मूलग्रन्थो नित्याषोडशिकार्णवः, तत्र "मल्लिकामालतीजाति" (५.२७) इत्यादिवचनं द्रष्टव्यम्।*

ॐ [1]धर्माधर्महविर्दीप्तामात्माग्नौ मनसा स्रुचा ।
सुषुम्नावर्त्मना [2] [3]नित्यमक्षवृत्तिं [4] जुहोम्यहम् ॥

स्वाहेति मूलमन्त्रपूर्वको [5] ऽयमाभ्यन्तरहोममन्त्रः [6] ।

प्रकाशाकाशहस्ताभ्यामवलोक्योन्मनीस्रुचा [7] [8] ।
धर्माधर्मकलास्नेहपूर्णां [9] वह्नौ जुहोम्यहम् ॥

स्वाहेति मूलमन्त्रपूर्वकेनै(णै)तेन [10] पूर्णाहुतिं दद्यात् । [11]तदुक्तं **सङ्केतपद्धत्याम्**—

[12]आभ्यां रावाख्यरौद्राभ्यामान्त्यं [13] यस्मिन्ननामके ।
तद्दृष्ट्या तद्बलेनाशु लभ्यते न कथाक्रमैः ॥
मन्त्रमुद्रानिरीहः सन्नज्ञानं येन केनचित् ।
तपदग्नौ हुनेदिद्धे भावप्रा(व्रा)तं हविर्महत् ॥
चित्तवृत्तिसमायुक्तामेमां पूर्णाहुतिं क्षिपेत् ।
एष होमवरः श्रेष्ठः समिदाज्यादिवर्जितः ॥

**॥ [14]इति [15]श्रीविद्यानन्दनाथविरचितायां श्रीत्रिपुरसुन्दरीपद्धत्यां ज्ञानदीपविमर्शिन्यां होमपद्धतिः [16] पञ्चदशी ॥**

■

---

१. इतः पूर्वं 'ऐं ह्रीं श्रीं'–ग.। २. म्णा–ग.। ३. दीप्तं–ख.। ४. वृत्तीर्जुहो–ख.। ५. को यस्याभ्यन्तर–घ.ङ.। ६. 'होममन्त्रः' इत्यस्य स्थाने 'होमः'–ख.। ७. मवलम्ब्योन्मनि–ख. घ. ङ.। ८. स्रुचम्–क., स्रुवा–घ. ङ.। ९. पूर्णवह्नौ–ग.। १०. मन्त्रपूर्वकेणानेन पूर्णा–ख., मन्त्रेण पूर्णा–घ. ङ.। ११. 'तदु .... त्याम्' नास्ति–ख.। १२. 'आभ्यन्तरावन्त्यरौद्राभ्यामित्यादिना' इत्येव–क., 'आभ्यङ्गवादो रौद्राभ्यामित्यादि'–ग., 'आभ्यां रौद्राभ्याम्'–घ.ङ.। १३. इत्यादि–ग.घ.ङ.। १४. 'इति श्री .... जपपद्धतिः षोडशी' नास्ति–घ. ङ.। १५. 'श्री .... र्शिन्यां' नास्ति–ख.। १६. तिर्विंशतिः–ग.।

# जपपद्धतिः

अथ जपलक्षणं त्रिभेदम्[1]—मानसमुपांशुर्वाचिकं[3] चेति । तत्रोपांशुवाचिकौ कर्मयोगिनाम् । तल्लक्षणमुक्तं श्रीसिद्धनाथपादैः—

उपांशुर्निजकर्णैकगोचरः सिद्धिदायकः ।
सुस्पष्टवचनोच्चारो[4] वाचिकः[5] सुविशुद्धिदः ॥ इति ।

मानसस्तत्त्वमुद्रा[6]प्रयोगेण शक्तिधाराचारेण[7] । तदुक्तम्—

उच्चारो[8] मनसा स्थानध्यान[9]वर्ण[प्र]कल्पनात् ।

इत्यादिना । तेषां फलाधिक्यमपि शतलक्षकोटिभेदेनोत्तरोत्तरवैशिष्ट्यं मूलागमेषु द्रष्टव्यम् ।

॥ इति [10]जपपद्धतिः षोडशी ॥

■

---

१. त्रिविधम्–ख.। २. शु वा–ख.। ३. कश्चे–ग.। ४. नः ख्यातो–ग.। ५. 'शुद्धिदो जपः'–ख., 'सिद्धिदो जपः'–ग.। ६. सस्त्वन्तर्मुद्रा–ख.। ७. क्तिवाराचारेण–ख., क्तिचराचरेण–ग.। ८. च्चारे मनसा–ख., च्चारमनसः–ग.। ९. 'ध्यान' नास्ति–ख.। १०. जपलक्षणपद्धतिः–ख., 'जप . . . षोडशी' इत्यस्य स्थाने 'श्रीविद्यानन्दनाथविरचितायां ज्ञानदीपविमर्शिन्यां श्रीत्रिपुरसुन्दरीपद्धत्यां जपपद्धतिरेकविंशतिः'–ग.।

## अक्षमालापद्धतिः

अथाक्षमालालक्षणं बाह्याभ्यन्तरभेदेन निरूप्यते। मुक्ताफल[1]मणि[2]स्फीत-वै[3]दूर्यप्रवालपद्मराग[4]रक्तचन्दनरुद्राक्षशङ्खकुशग्रन्थिपद्मबी[5]जानि यथाकामं रक्तसूत्र-प्रोतानि मृगनाभिकर्पूरकुण्डगोलोद्भवमिश्रप्रथ[6]मार्तव[7]भावितानि मूलविद्याजप्तानि [8]सप्तविं[9]शत्यष्टाविंशतित्रिंशदष्टपञ्चाशदष्टोत्तरशतानि [10]शतानि वा [11]शुभेऽहनि समाहृत्याक्षमाला[12] कार्या। [13]तयाक्षमालया [14]यथोक्त[15]मुद्रया जपं कुर्यात्।

[16]यथा मध्यमाङ्गुलिमध्यपर्वणि मालां निधाय[17] ज्येष्ठाङ्गुलिमध्यपर्वणा[18]कर्षणं गृहस्थानाम्। आभ्यन्तरा तु [19]कुण्डलीसूत्रप्रोतानि [20]हंसमनुभूषितानि[21] अनुलोमविलो[22]म[23]मातृकाक्षराणि शतसंख्यानि वर्गाष्टकसमेतान्यष्टोत्तरशतानि भवन्ति।

[24]कार्य [:]प्राणसमो जपः स्फुटतरोच्चारक्रमात् कारयेत्
पञ्चाशन्मणिमालिका कुलवधूसूत्रं च बन्धुः कुजा।

---

१. माणिक्य–ख.। २. 'स्फीत' नास्ति–ग., स्फुट–घङ.। ३. वैडूर्य–ख.। ४. 'रक्त' नास्ति–ग.। ५. जादीनां–घ.ङ.। ६. मार्त्त–ख.। ७. वप्रभा–ग.। ८. 'सप्त' नास्ति– घ.ङ.। ९. विंशाष्टविंशद्वात्रिंश–ख.। १०. 'शतानि' नास्ति–ख.ग.घ.ङ.। ११. वा समेरुकानि–ख.ग.घ.ङ.। १२. लां कुर्यात्–ग.। १३. तया कुलमालया–क., तयाऽक्षमालया–ग.। १४. 'यथोक्त .... गृहस्थानाम्' इत्यस्य स्थाने 'सृष्टिमुद्रया गृहस्थः संहारमुद्रया योगी शतसहस्रादि यथाशक्ति जपं कुर्यात्'–घङ.। १५. मुप्रया–क.। १६. 'यथा .... गृहस्थानाम्'–ख.। १७. यामध्याङ्गुलि–क.। १८. 'कर्षणं' नास्ति–ग.। १९. कुण्डलिनी-सूत्र– ख.ग.घ.। २०. हंसमेरुभूषि–ख.ग.घ.ङ.। २१. तात् पुरुलोमेन मातृका–क.। २२. लोमेन–ख.ग.घ.ङ.। २३. 'मातृका.... संख्यानि' इत्यस्य स्थाने 'शतानि'–ख.। २४. 'कार्यः .... खेचर' नास्ति– क.ख.घ.ङ.।

मेरु[:] सोऽपि लयान्तकोऽपि पिहितो मेरो[र्]विनोल्लङ्घयेद्
एवं निश्चललक्षजापनिरतः सिद्धो भवेत् खेचरः ॥

तया जपं कुर्याद् [1]योगी। [2]योगिनी तर्जन्या वा अनामिकया वा मालां विधाय तयाकर्षणम्।

[3]**अक्षमालापद्धतिः सप्तदशी ॥**

■

१. योगिनी–क.। २. योगिनां–ग., 'योगिनी ....कर्षणम्' इत्यस्य स्थाने 'अथवा चिच्छक्तिस्पन्दगणानां वर्णावर्णप्रचाररूपिणीं त्रुट्यणुलवलवातीतभेदेन एकोच्चारे शतं दशे सहस्रं शते दशसहस्रं सहस्रे लक्षभेदेनाहोरात्रशक्तिस्पन्दनसंख्यानेन च ज्ञात्वा जपं कुर्यात्'–ख., 'अथवा चिच्छक्तिगणना वर्णा परापररूपिणी तदग्रानुलपातां तत्कालभेदेन शतसहस्रकोटिभेदेन एकोच्छ्वासशतं दशे सहस्रं दशसाहस्रलक्षभेदेऽहोरात्रशक्तिस्पन्दसंख्यामक्षमालां ज्ञात्वा जपं कुर्याद्योगीति। पुनरप्युक्तम्—माला पञ्चाशिका प्रोक्ता सूत्रं शक्तिशिवांशकम्। ग्रन्थिः कुण्डलिनी शक्तिः कलान्ते मेरुसंस्थितिः॥'–घ.ङ.। ३. इत्यक्ष–ख., 'इति श्रीविद्यानन्दनाथविरचितायां त्रिपुरसुन्दरीपद्धत्यां ज्ञानदीपविमर्शिन्यामक्षमालापद्धतिः द्वाविंशतिः'–ग., इति 'श्रीविद्यानन्दनाथविरचितायां श्रीज्ञानदीपविमर्शिन्यां श्रीत्रिपुरसुन्दीपद्धत्यां चक्रार्चनपूजाहोमपद्धतिः सप्तदशी'–घ.ङ.।

# स्तोत्रपद्धतिः

[1]अथ स्तोत्र[2]जपप्रकारः[3]—

[4]किं किं दुःखं [5]दनुजदलिनि [6]लीयते न स्मृतायां

का का कीर्तिः कुल[7]कमलिनि [8]ख्याप्यते न स्तुतायाम् ।

कं[9] कं योगं [10]सुरवरनुते [11]नाप्नुवन्त्यर्चितायां

[12]का का सिद्धिस्त्वयि न चिनुते चित्तमालम्बितायाम् ॥१ ॥

सर्ग[13]संसर्गसंरम्भस्फारि[14]ताघौघविभ्रमे ।

चिच्चन्द्रमण्डलान्तस्थे नमस्ते हरवल्लभे ॥२ ॥

जगदाह्ला[15]दनोद्योतयोगभोग[16]वियोगिनि ।

स्थिति[17]लाभस्थिते देवि नमः[18] स्थाणु[19]प्रियेऽम्बिके ॥३ ॥

भावाभावपृथ[20]ग्भावस्वभावोदयधर्मिणि ।

चैतन्यपञ्चके देवि नमस्तुभ्यं [21]वराङ्गने ॥४ ॥

---

१. इतः पूर्वं 'अथ श्रीमूलसूत्रोक्तस्तोत्रादिभिरन्यैर्वा कविकृतैर्देवऋषिसिद्धसाधकसामयिकादिभिर्योगिनीभिर्वा कृतैर्गद्यपद्यमितिगाथात्रोटकादिभिर्देव्याः स्तुतिं कुर्यात् । गीतवाद्यनाट्यलास्यादिभिश्च घण्टावादनडमरुडिण्डिमादिभिश्चार्चयेत् । निसर्गशुद्ध्याऽष्टाङ्गपुरस्सरं कराञ्जलिमाधाय'– घ.ङ. । २. जपः– क., 'जप' नास्ति– ग.घ.ङ. । ३. इतः परं 'कथ्यते'– ग. । ४. इतः पूर्वं '३'– घ.ङ. । ५. सकलजननि– ख.ग., हरसि जननि– घ.ङ. । ६. क्षीयते– ख.ग.घ.ङ. । ७. लकुम– क.ग. । ८. प्राप्यते– घ.ङ. । ९. का का सिद्धिः सुर– ग.घ.ङ. । १०. 'सुरवर ...सिद्धिः' नास्ति– ख. । ११. प्राप्यते नार्चितायां– ग.घ.ङ. । १२. कं कं योगं त्वयि– ग.घ.ङ. । १३. 'संसर्ग' नास्ति– घ.ङ. । १४. रितोद्योगवि– ख.घ.ङ. । १५. दनोद्योगयोग– ख., दने देवि योग– ग. । १६. भोगावि– ख. । १७. 'लाभ' इत्यस्य स्थाने 'भाव'– ख.घ.ङ. । १८. नमस्था– ख. । १९. प्रियाम्बि– क. । २०. 'पृथ.... भावो' इत्यस्य स्थाने 'प्रथातीवान् प्रभावो– क., 'वृथाभावस्वभावो'– ख., 'पृथग्भावसुभत्वो'– ग. । २१. हराङ्गने– ख.घ.ङ., हरानने– ग. ।

सृष्टिस्थित्युपसंहार[1]प्रत्युज्झितपदोदये ।

चिद्विश्रान्तिमहा[2]सत्तामात्रे [3]मात्रे नमोऽस्तु ते ॥५ ॥

[4]वह्न्यर्कशीतकिरणे[5] ब्रह्मचक्रान्तरोदिते ।

चतुष्पीठेश्वरि शिवे नमस्ते त्रिपुरेश्वरि ॥६ ॥

चराचरमिदं विश्वं [6]प्रकाशयसि [7]शाम्भवि ।

मातृकारूपमास्थाय तस्यै [8]मातर्नमोऽस्तु ते ॥७ ॥

स्मृता भवभयं हंसि पूजिता शि[9]वशङ्करि ।

[10]स्तुता त्वं वाञ्छितं वस्तु ददासि करुणा[11]परे ॥८ ॥

भक्तस्य [12]मे नित्य[13]पूजायुक्तस्य [14]समनन्तरम् ।

वाग्भवादिमहासिद्धिं देहि[15] त्रिपुरसुन्दरि ॥९ ॥

परमानन्दसन्दोहप्रमोदभरनिर्भरे ।

दुःखत्रयपरिम्लानवदनं [16]त्राहि मां शिवे ॥१० ॥

शब्दब्रह्ममये स्वच्छे देवि त्रिपुरसुन्दरि ।

यथाशक्ति जपं पूजां गृहाण मदनुग्रहात् ॥११ ॥

[17]द्रव्यहीनं क्रियाहीनं [18]मन्त्रहीनं च[19] यद्भवेत् ।

तत्सर्वं [20]कृपया देवि क्षमस्व परमेश्वरि ॥१२ ॥

---

१. रप्रत्युभित्त्रभवोदये–क., रवृत्युक्षिति–ख.। २. इत्यस्य परं 'सत्त्वे'–घ.ङ.। ३. 'मात्रे' नास्ति–क.ख.घ.ङ.। ४. बाह्यधर्मशीत–क.। ५. णब्रह्म–ख.ग.घ.ङ.। ६. प्रणाशयसि–क.घ.ङ., प्रकाशयति–ग.। ७. भास्वथ–ख.घ.ङ., 'ग' मातृकायां रिक्तमत्र स्थानम्। ८. मात्रे नमो–ख.। ९. सि शवङ्करि–ख.। १०. स्तुत्वा त्वं–खं.। ११. णाकरे–ख.। १२. 'मे' नास्ति–ग.। १३. जायां युक्त–ग.। १४. मम साम्प्रतम्–ग.। १५. इत्यस्य परं 'मे'–ग.। १६. पाहि–घ.ङ.। १७. मन्त्रहीनं–ख.। १८. भक्तिहीनं–ख.। १९. 'च' इत्यस्य स्थाने 'तु'–ख.। २०. क्रियया–क.।

द्वैताद्वैतमहामोहशर्वरीक्षपणक्षमः[१] ।
भास्वानिव जयत्येको गणेशो भूतिसंयुतः ॥१३ ॥

[२]प्रतिभायाः परोल्लासो निशाकर इवापरः ।
मूर्तियुक्तः[३] स जयति बटुकस्ताण्डवान्वितः[४] ॥१४ ॥

षट्त्रिंशत्तत्त्वविभवं क्षेत्रं [५]यः पालयत्यलम् ।
क्षेत्रेशं तमहं [६]नौमि ताण्डवस्थं महा[७]लयम् ॥१५ ॥

चतुष्पीठनिवासिन्यो योगेश्वर्यो महाबलाः ।
चतुष्षष्टिप्रकारास्ता नित्यं वन्दे कुलाङ्गनाः[८] ॥१६ ॥

भेदाभेदमहामोहवि[९]वर्तपरिमण्डिताम् ।
आपूरयन्तीं [१०]समयां [११]त्रिंशार्णां तां नमाम्यहम् ॥१७ ॥[1]

---

**ख. पाठः**

[2]यन्मया क्रियते कर्म जाग्रत्स्वप्नसुषुप्तिषु ।
तत्सर्वं तावकी पूजा भूयाद् भूत्यै च मे शिवे ॥
यन्मयोक्तमिहाज्ञानात् तन्महत् स्वल्पमेव वा ।
हन्त ! सर्वं जगद्धात्रि क्षन्तव्यमयमञ्जलिः ॥

---

१. क्षमा–ख. । २. प्रभायाः परमोल्लासो–ग. । ३. क्तस्य जयति–ख. । ४. तम्–ख. । ५. यत् पाल–ख.घ.ङ. । ६. 'नौमि' इत्यस्य स्थाने 'वन्दे'–घ.ङ. । ७. महाबलम्–ख.घ.ङ. । ८. ङ्गतः–ख. । ९. विवृत्तिपरि–ख. । १०. 'समयां' इत्यस्य स्थाने 'वपुषा'–ख. । ११. 'त्रिंशार्णां तां' इत्यस्य स्थाने 'द्वात्रिंशार्णां'–ख.ग.घ.ङ. ।

---

*1. क.ग. मातृकयोः स्तोत्रपद्धतिरत्रैव समाप्यते ।*

*2. 'यन्मया' इत्यादितः स्तोत्रपद्धतिसमाप्त्यन्तः पाठः केवलं खपुस्तके दृश्यते । अस्य स्थाने घ.ङ. मातृकयोर्भिन्नः पाठः षष्ठे परिशिष्टे स्थापितः ।*

तन्त्रौम्यनन्तविभवां भुवनालिवर्तिमत्ताङ्गनां हृदयमोहनदक्षरक्षाम् ।
देवीं परां त्रिपुरभोगिनिनामधेयां सर्वाभिलाषपरिपूरणकल्पवल्लीम् ॥

अथ पञ्चश्लोकाः —

अद्य मे सफलं जन्म अद्य मे सफला क्रिया ।
अद्य मे सफलं स्थानं जीवितं सफलं मम ॥
अद्य धन्यः कृतार्थोऽहमद्य मे सफला गतिः ।
अद्य मे सफलं सर्वं त्रैलोक्यं सचराचरम् ॥
यन्नाथ भवदङ्घ्रिभ्यामङ्कितस्तु शिरो मम ।
तेन विख्यातसत्कीर्तिश्चरिष्यामि जगत्त्रये ॥
त्वत्प्रसादान्महादेव सर्वज्ञत्वं लभाम्यहम् ।
किमनेन न पर्याप्तं यदायात इह प्रभुः ॥
किं कर्म का गतिर्मह्यमादेशो दीयतां प्रभो ।
यदि मां मन्यसे नाथ श्रद्धाभक्तिसमन्वितम् ॥
त्रैलोक्यमोहनं चक्रं सर्वाशापरिपूरकम् ।
सर्वसंक्षोभणं चक्रं सर्वसौभाग्यदायकम् ॥
सर्वार्थसाधकं चक्रं सर्वरक्षाकरं तथा ।
सर्वरोगहरं चक्रं सर्वसिद्धिप्रदायकम् ॥
सर्वानन्दमयं मध्यं नवमं चक्रनायकम् ।
नवधा चक्रसङ्केतं यो जानाति स पूजकः ॥
प्रकटाश्चैव गुप्ताश्च तथा गुप्ततराः पराः ।
सम्प्रदायकुलोत्तीर्णा निगर्भाश्च रहस्यकाः ॥
अतिपूर्वरहस्याश्च परापररहस्यकाः ।
नवधा नामसङ्केतो योगिनीनां यतः स्थितः ॥

त्रिपुरा त्रिपुरेशी च सुन्दरी पुरवासिनी ।
श्रीर्मालिनी च त्रिपुरा सिद्धा च त्रिपुराम्बिका ।
नवमी भैरवी प्रोक्ता चक्रेश्वर्यो यथाक्रमम् ॥

[1]जयति निजसुधाम्भस्सम्भवा वाग्भवश्री-
रथ सरससमुद्यत्कामतत्त्वानुभावा
तदनु परमधामध्यानसंलक्ष्यमोक्षा
रविशशिशिखिरूपा त्रैपुरी मन्त्रशक्तिः ॥१ ॥

जय जय जगदेकमातर्नमश्चन्द्रचूडेन्द्रसोपेन्द्रपद्मोद्भवोष्णांशुशीतांशुशिखि-पवनयमधनददनुजेन्द्रपतिवरुण[प्र]मुखसकलसुरमकुटमणिनिचयकरनिकरपरि-जनितपुरविविधरुचिरुचिरकुसुमचयबुद्धिलुब्धभ्रमद्भ्रमरमालानिनादानुगतमञ्जु-शिञ्जानमञ्जीरकलकनकमयकिङ्किणीक्वाणयन्नृत्यदुद्दामनिभृतपदललितकिङ्करा-लङ्कृतसुचङ्क्रमणलीले सुलीले स्थलाम्भोजनिभचरणनखरत्नकान्तिच्छलेन हरनयनहव्याशनप्रतिकृतानङ्गविजयश्रियाऽसौ भवत्या भवेनेव शरणागतः पादमूले समालीन इवालक्ष्यते सुलक्ष्यते ललितलावण्यतरुकन्दलीसुभगजङ्घालते चिल्लते ॥२ ॥

गलितकलधौतप्रभोरुद्युते सुद्युते विद्युदुद्योतमाणिक्क(क्य)बन्धोज्वलानर्घ-काञ्चीकलापानुसंयमितसुनितम्बबिम्बस्थले सुस्थले ॥३ ॥

स्मरद्विरदपरिरचितनवरोमराज्यङ्कुशे निरङ्कुशे ॥४ ॥

दक्षिणावर्तनाभिभ्रमत्त्रिवलीतटपरिलुठितललितलावण्यरससुरतनिम्नगा-भूषितसुमध्यदेशे सुदेशे स्फुरत्तारहारावलीगगनगङ्गातरङ्गव्रजालिङ्गितोत्तुङ्ग-निबिडस्तनसौवर्णगिरिशिखरयुग्मे अयुग्मे उमे ॥५ ॥

मुरारिकरकम्बुरेखानुगतकण्ठपीठे सुपीठे लसत्सरलसविलासभुजयुगल-परिहसितनवकोमलमृणाले सुनाले ॥६ ॥

---

१. त्रिपुरसुन्दरीदण्डकमिदमितः परं स्थापितं सौभाग्यहृदयस्तोत्रं च नित्याषोडशिकार्णवपरिशिष्टेषु मुद्रितमवलोकनीयम् (पृ. २७९-२८३, ३०४-३०५)।

महार्हमणिवलयजमयूखचयमांसलि(ल)करकमलनखरत्नकिरणे जितरणे सुकरणे सुशरणे ॥७ ॥

स्फुरत्पद्मरागेन्द्रमणिकुण्डलोल्लसितकान्तिच्छदोच्छुरितगण्डस्थलीरचितकस्तूरिकापत्ररेखासमुद्घातसुधानाथगाण्डीवशोभे सुशोभे ॥८ ॥

महासिद्धगन्धर्वगणकिन्नरीतुम्बुरुप्रमुखवररचितवरविविधपदमङ्गलानङ्गसङ्गीतसुखश्रवणसम्पूर्णकर्णे सुकर्णे जय स्वामिनि ॥९ ॥

शशिशकलसुगन्धिताम्बूलपरिपूर्णमुखि सुमुखि ॥१० ॥

बालप्रवालप्रभाधरदलोपान्तविश्रान्तदन्तद्युतिद्योतिताशोकनवपल्लवासक्तशरदिन्दुकरनिकरसान्द्रप्रभे सुप्रभे देवि ॥११ ॥

विश्वकर्मादिनिर्माणविधिसूत्रसुस्पष्टनासाग्ररेखे सुरेखे ॥१२ ॥

कपोलतलकान्तिविभवेन न विभान्ति नश्यन्ति धावन्ति तेजांसि च तमांसि च विमलतरतरलतरतारकानङ्गलीलाविलासोल्ल सत्कर्णमूलान्तविश्रान्तविपुलेक्षणाक्षेपविक्षिप्तरुचिरचितनवकुन्दनीलाम्बुजप्रकरपरिभूषिताशावकाशे सुकाशे ॥१३ ॥

चलद्भ्रूलताविजितकन्दर्पकोदण्डभङ्गे सुभङ्गे ॥१४ ॥

मिलन्मध्यमृगनाभिमयबिन्दुपदचन्द्रतिलकायमानेक्षणालङ्कृतार्धेन्दुरोचिल्ललाटे सुललाटे ॥१५ ॥

लसद्वंशमणिजालकान्तरितवरचलत्कुन्तलान्तानुगतकुन्दमालानुषक्तभ्रमद्भ्रमरपङ्क्ते सुपङ्क्ते ॥१६ ॥

वहद्बहलपरिमलमनोहारिनवमालिकामल्लिकामालतीकेतकीचम्पकेन्दीवरोदारमन्दारमालानुसंग्रथितधम्मिल्लमूर्धावनद्धेन्दुकरसञ्चयोऽयं गगनतलसञ्चरोऽयं यशच्छत्ररूपः सदा दृश्यते ते शिवे ॥१७ ॥

यस्य मधुरस्मितज्योतिषा पूर्णहरिणाङ्कलक्ष्मीः क्षणाक्षेपं विक्षिप्यते तस्य मुखपुण्डरीकस्य कविभिः कदा कोपमा केन कस्मिन् कथं दीयते ॥१८ ॥

सुस्फुटस्फटिकघटिताक्षसूत्रनक्षत्रचयचक्रपरिवर्तनविनोदसन्दर्शितनिशासमयचारे सुचारे महाज्ञानमयपुस्तकं हस्तपद्मेऽत्र वामे दधत्या भवत्या तदा सुस्फुटं वाममार्गस्य सर्वोत्तमत्वं समुपदिश्यते ॥१९ ॥

दिव्यमुखसौरभे योगपर्यङ्कबद्धासने सुवदने सुरसने सुदर्शने सुमदने सुहसने सुरेशि जननि तुभ्यं नमो जय जननि तुभ्यं नमो जय जननि तुभ्यं नमः ॥२० ॥

अ इ उ ऋ ऌ इति लघुतया तदनु दैर्घ्येण पञ्चैव योनिस्तथा वाग्भवं प्रणव औ बिन्दुरः क ख ग घ ङ च छ ज झ ञ ट ठ ड ढ ण त थ द ध न प फ ब भ म य र ल व श ष स ह ळ क्षेति सुबद्धरुद्रात्मिकाममृतकरकिरणगणवर्षिणीं मातृकामुद्गिरन्ती हसन्ती लसन्ती वसन्ती सदा तत्र कमलवनभवनभूमौ भवन्ती भवभेदिनी भयभञ्जिनी सभूर्भुवःस्वर्भुवनमूर्तिभव्ये सुभव्ये सुकाव्ये ॥२१ ॥

सुकृतिना येन संभाव्यसे तस्य जर्जरितजरसो विरजसोऽपि पुत्रीकृतार्कस्य सत्तर्कपदवाक्यागमवेदवेदाङ्गवेदान्तसिद्धान्तसौरशैवादिवैष्णवपुराणेतिहासस्मृतिगारुडभूततन्त्रस्वरोदयज्योतिषायुर्वेदनानाख्यानपातालशास्त्रार्थमन्त्रशिक्षादिकं विविधविद्याकुलं लिखितपदगुम्फसम्बन्धरससत्कान्तिसोदारभणित-प्रबन्धप्रभार्थसमलङ्कृताशेषभाषामहाकाव्यलीलोदया सिद्धिरूपयाति सद्योम्बिके ॥२२ ॥

वाग्भवेनैकेन वाग्देवि वागीश्वरो जायते । किन्तु किल कामाक्षरेण सकृदुच्चरितेनैव तव साधको बाधको भवति भुवि सर्वशृङ्गारिणां तन्नयनपथपतितनेत्रनीलोत्पला झटिति यदि सिद्धगन्धर्वगणसुन्दरीललितवरविद्याधरी वासुरी वामरी वा महीनाथनाथाङ्गना वा ज्वलन्मदनगरशरनिकरदलितसंक्षोभिता निगडितेव ज्वलितेव स्खलितेव मुषितेव संपद्यते । शक्तिबीजैकसन्ध्यायिनां योगिनां भोगिनां वैनतेयायते दाहिनाममृतमेघायते दुस्सहविषाणां निशानाथचूडायते । ध्यायते धार्यते येन बीजत्रयं तस्य नाम्नैव पशुपाशमलपञ्जरं त्रुट्यति तदाज्ञया सिद्ध्यति च गुणाष्टकं भक्तिभाजां महाभैरवि कवलितसकलतत्त्वात्मिके सुस्वरूपे सुरूपे परिणतशिवायां त्वयि तदा कः परः शिष्यते का क्रिया शिष्यते यदि त्वद्भक्तिहीनस्य

तत्त्वस्य कार्थक्रियाकारिता तदिति तस्मिन् विधौ तस्य किं धाम किं नाम किं कर्म किं शर्म किं नर्म किं वर्म किं धर्म का गतिः का रतिः का मतिः किं वर्जनीयं च ॥२३ ॥

झटिति यदि सर्वशून्यान्तभूमौ निजेच्छासमुन्मेषसमयं समासाद्य वालाग्र-कोट्यंशरूपा विगर्भीकृताशेषसंसारबीजानुबध्नासि कन्दं तदा त्वमम्बिका गीयसे। तदनु परिजनितकुटिलाग्रतेजोऽङ्कुरा जननि वामेति संस्तूयसे। ततो बद्धस्पष्टरेखा शिखा ज्येष्ठेति संभाव्यसे। सैव शृङ्गाटकाकारतामागता रौद्रीति विख्याप्यसे ॥२४ ॥

ताश्च वामादिकास्त्वत्कलास्त्रीन् गुणान् सन्दधत्यःक्रियाज्ञानचयवाञ्छास्व-रूपाः क्रमात् तामरसजन्ममधुमथनपुरवैरिणां बीजभावं भजन्त्यः सृजन्त्यस्त्रिभुवनं त्रिपुरसुन्दरीति तेन संकीर्त्यसे ॥२५ ॥

तत्र शृङ्गाटपीठोल्लसत्कुण्डलोकाकलापा कुलात् प्रोल्लसन्ती सगन्धी शिवार्कं समास्कन्द्य चान्द्रं महामण्डलं द्रावयन्ती पिबन्ती सुधां कुलवधूः कुलं परित्यज्य परपुरुषं कुलीनमवलम्ब्य विश्वं परिभ्राम्य सर्वस्वमाक्रम्य तेनैव मार्गेण निजकुलनिवासं समागत्य सन्तुष्यसीति प्रियः कः पतिः प्रभुः कोऽस्तु तेनैव जानीमहे हे महेशानि ! रमसे च कामेश्वरी कामगिर्यालयेऽनङ्गकुसुमादिभिः सेविता तदुपरि जालन्धरपीठे वज्रपीठेषु वज्रेश्वरीपरिजना नट्यसि पुनः पूर्णगिरिगह्वरे नग्नवसना-ञ्चिते भगमालिनी विलससि देवि ज्वलन्मदनशरनिकरमधुविकसितसमदमधुकर-कदम्बविपिनविभवे भगवति श्रीत्रिपुरसुन्दरि श्रीओड्याणपीठे नमस्ते नमस्ते नमस्ते नमस्ते शिवे ॥२६ ॥

इति त्रिपुरसुन्दरीचरणकिङ्किणीशिञ्जितं
महाप्रणतिदीपकं त्रिपुरसुन्दरीदण्डकम् ।
इमं भजति भक्तिमान् पठति य सुधीः साधकः
स चाष्टगुणसंपदां भवतु भाजनं सर्वदा ॥२७ ॥

सौधाम्बुधावरुणपोतसुवर्णशैल-
कादम्बदिव्यवनमध्यमवर्णभूमौ ।
भास्वद्विचित्रमणिमण्डपदिव्यपीठ-
मध्यस्थितां भुवनमातरमाश्रयामि ॥२८ ॥

ब्रह्मेन्द्ररुद्रहरिचन्द्रसहस्ररश्मि-
स्कन्दद्विपाननहुताशनवन्दितायै ।
वागीश्वरि त्रिभुवनेश्वरि विश्वमात-
रन्तर्बहिश्च कृतसंस्थितये नमस्ते ॥२९ ॥

इति **त्रिपुरसुन्दरीदण्डकं** समाप्तम् ॥

■

[अथ **सौभाग्यहृदयस्तोत्रं** पठेत्]

तन्महः परमं नौमि कृत्यैः पञ्चभिरङ्कितम् ।
अशेषविश्वाभेदात्म पूर्णाहन्तात्मकं शिवम् ॥१ ॥
त्रिधा विभक्तं यद्वस्तु स्तोतृस्तुत्यस्तुतिक्रमात् ।
एकस्मै महसे तस्मै नमः सकलचक्षुषे ॥२ ॥
स्मरामि तां परा वाचं पश्यन्त्यादिक्रमाश्रयाम् ।
नानाविधरसाकारां महानुभवरूपिणीम् ॥३ ॥
देशकालपदार्थात्म यद्यद्वस्तु यथा यथा ।
तत्तद्रूपेण या भाति तां श्रये सांविदीं कलाम् ॥४ ॥
मूलादिबिलपर्यन्तं महात्रिपुरसुन्दरि ।
या तनुस्ते तटित्प्रख्या तां भजे भवशातनीम् ॥५ ॥
योनौ कनकपुञ्जाभं हृदि विद्युच्छटोज्वलम् ।
आज्ञायां चन्द्रसंकाशं महस्तव महेश्वरि ॥६ ॥
प्रसृतामृतरश्म्यौघसन्तर्पितचराचराम् ।
भवानि भवशान्त्यै त्वां भावयाम्यमृतेश्वरीम् ॥७ ॥

वर्णः कला पदं तत्त्वं मन्त्रो भुवनमेव च ।
इत्यध्वषट्कं देवेशि भाति त्वयि चिदात्मनि ॥८॥

अनाश्रितादिकालाग्निरुद्रान्तं चित्रमद्भुतम् ।
उन्मीलयसि मातस्त्वं प्रकाशवपुषि त्वयि ॥९॥

यदिदं भासते देवि नामरूपक्रियात्मकम् ।
प्रकाशवपुषि त्वत्तस्तत्सर्वं नातिरिच्यते ॥१०॥

नेत्रादिजालकोपान्ते हृत्पद्मासनलीलया ।
वारं वारं त्वया देवि रूपादिमधु सेव्यते ॥११॥

संविद्देव्यः समाक्रम्य विषयानमृतासवान् ।
योगिनां प्रेषयन्त्यार्ये त्वत्पूजार्थं हि सर्वदा ॥१२॥

**सौभाग्यहृदयं** गुह्यं **शिवानन्देन** योगिना ।
समाराधनपूर्त्यर्थं स्मृतं सकलकामदम् ॥१३॥

इति विरचितमेतत् त्रैपुरं स्तोत्रमाप्तं
प्रकटितपरमार्थं योगिवर्योपजुष्टम् ।
सकलदुरितरोगध्वंसनानन्यकार्यं
प्रतियजनविधानं सेव्यतां भक्तियुक्तैः ॥१४॥

**॥ इति[1] स्तोत्रपद्धतिरष्टादशी[2] ॥**

■

१. इतः परं 'श्रीविद्यानन्दनाथविरचितायां'—ग. । २. तिस्रयोविंशतिः—ग. ।

# पवित्रपद्धतिः

अथ पवित्रारोपणं [१]बाह्याभ्यन्तरभेदेन लिख्यते । तत्र मि[२]थुनसंक्रा[३]न्तिमारभ्य [४]तुलासंक्रमणपर्यन्तमुभयपक्षचतुर्थ्यष्टमी[५]नवमीचतुर्दशीनामेकस्यां तिथौ—

सौवर्णं[६] राजतं[७] ताम्रं[८] कृतादिषु य[९]थाक्रमम् ।
कलौ कार्पासजं[१०] वापि यथाशक्ति पवित्रकम् ॥
कर्तितं द्विजकन्याभि[११]स्त्रिगुणं त्रिगुणीकृतम् ।
धौतं[१२] [१३]शुक्लं शुभं सूत्रमन्यदप्युपयुज्यते ॥
[१४]पट्टवल्कलपद्मोत्थं[१५] क्षौमं[१६] दार्भं शणो[१७]द्भवम् ।
मुञ्जादिसंभवं सूत्रं पवित्राय प्रशस्यते ॥
प्रणवश्चन्द्रमा व[१८]ह्निर्ब्रह्म नागो गुहो रविः ।
[१९]सादाख्यः सर्वदेवाश्च क्रमेण नवत[२०]न्तुषु ॥

[[२१]इति] [२२]**सोमशम्भु**[२३]ग्रन्थोक्तयुक्त्या नवतन्तुसूत्रं विधाय [२४]शिरोमन्त्राभिमन्त्रितेन पञ्चगव्येन संशोध्य मदन[२५]फलादिजलेन [२६]हृन्मन्त्रितेन [२७]प्रक्षाल्य पुनरस्त्रे-

---

१. 'बाह्याभ्यन्तरभेदेन' नास्ति–घ.ङ.। २. थुनार्कसं–ख.घ.ङ.। ३. संक्रमणादारभ्य–घ.ङ.। ४. लार्कसं–ख.घ.ङ.। ५. 'नवमी' नास्ति–घ.ङ.। ६. र्णं–क.ग.। ७. त–क.ग.। ८. म्राङ्कितादिषु–क., म्राङ्कितपट्टादिषु–ग.। ९. यथा कर्तव्यम्–ग.। १०. सनं–क.। ११. भिर्गुणं–क.। १२. धौत–क.ग.घ.ङ.। १३. 'शुक्लं' इत्यस्य स्थाने 'युक्तं'–क.ग.। १४. 'पट्ट' इत्यस्य स्थाने 'एतद्'–ग.। १५. द्मोर्थं–ख.। १६. क्षौमजाभं–ख., मन्दारकषणो–ग.। १७. शनोज्ज्वलम्–घ.ङ.। १८. वह्निर्ब्रह्मा–ख.। १९. 'सादाख्यः' इत्यस्य स्थाने 'सयन्ता'–क., 'महेशः'–ग.। २०. न्तुभिः–क.ग.। २१. 'इति' नास्ति–क.ग.। २२. 'सोम .... तन्तु' नास्ति–ग.। २३. 'ग्रन्थोक्त' इत्यस्य स्थाने 'ग्रन्थेऽप्युक्त'–क., 'प्रोक्त'–ख.। २४. सोमगिरो–ख., 'शिरो' नास्ति–ग.। २५. नद्रुमादि–ख.। २६. हृन्मन्त्रमन्त्रितेन–ख.। २७. 'प्रक्षा .... भ्युक्ष्य' इत्यस्य स्थाने 'पुनरस्त्रेण प्रक्षाल्याभ्युक्ष्य'–ख.।

णाभ्युक्ष्य नेत्रेणा[१]वरोध्य कवचेन ग्रथित्वा रक्तचन्दनकाश्मीरकस्तूरी[२]चन्द्ररोचना-हरिद्रा[३]गैरिक[४]कषायकल्कादिना[५] [६]रञ्जयेत्। अन्यतमेन[७] [तदेति] [८]यथासम्पत्ति शिखामन्त्रेण [९]रञ्जयित्वा समस्तेनाङ्गषट्[१०]केनोद्धूत्य मूलमन्त्रेण मण्डपेशाने स्थापयेत्। तत्र पूर्वेद्युरधिवासनार्थं निजबाहुमात्रं पञ्चाशद्गुणमेकग्रन्थि [११]श्रीखण्डमण्डितं [१२]पवित्रकं विरच्य ततोऽपरेद्यु[१३]रारोपणार्थ[१४]मष्टोत्तरशतचतुःपञ्चा-शत्सप्तविंशतिगुणमुत्तमादिक्रमेण षोडशद्वादश[१५]नवसंख्याधारग्रन्थि [१६]तत्पुर्यष्ट-काभिप्रायेण [१७]स्वरैः [१८]षोडशभिरनपुंसकैर्द्वादशभिर्वर्गाद्यैः [१९]सक्षकारैर्नवभिः स्वगुणसंख्याकै[२०]रङ्गुलैः प्रतिपर्वमानं [२१]वा पवित्र[२२]त्रयं कुर्यात्।

गणेशक्षेत्रपालाभ्यां नवतन्तु[२३]तत्तुल्यग्रन्थिमणिबन्धप्रमाणं[२४] गुरूणां[२५] [सिद्धानां] समं नवतन्[२६]तुतत्समं [२७]ग्रन्थित्र्यङ्गुलीमात्रं प्रतिगुरु[२८] [प्रतिसिद्धं] पवित्र-[२९]कम्, अथवैकमेव सर्व[३०]त्र बोद्धव्यम्। आसनषट्कस्य प्रत्येकं [३१]कण्ठमनुग्रन्थ्यङ्गुलं चतुर[३२]ङ्गुलस्थानां सिद्ध[३३]ब्रह्मादिमुद्राणाम[३४]ष्टतन्तु [३५]तावता ग्रन्थ्यङ्गुलं च कुर्यात्।

---

१. वलोक्य–घ. ङ.। २. रीचन्दनरोचना–ख., रीचन्दनगोरोचना–ग., रीश्रीचन्दनगोरो-चना–घ.ङ.। ३. 'गैरि ....दिना' इत्यस्य स्थाने 'गैरिकाश्लैषां'–ख.। ४. 'कषाय' इत्यस्य स्थाने 'यावक'–ग.। ५. दिनां–घ. ङ.। ६. 'रञ्जयेत्' नास्ति–घ. ङ.। ७. तमेन च–ग.। ८. यथाशक्तिसम्पत्ति–ख.। ९. 'रञ्ज ....मन्त्रेण' नास्ति–ग.। १०. षट्केन संधूप्य मूल– घ. ङ.। ११. श्रीगन्धचर्चिता पवि–घ. ङ.। १२. त पवित्रं विरच्य–ख.। १३. द्युः पवित्रारोपणा–ग., 'रारो ....त्तर' इत्यस्य स्थाने 'रष्ट'–ख.। १४. 'मष्टो .... गङ्गावतारक' नास्ति– घ. ङ.। १५. शमेव–क.। १६. 'तत्' इत्यस्य स्थाने 'सा'–ख., 'तत्पु ...प्रायेण' इत्यस्य स्थाने 'तत्पुर्यष्टकानि प्रयोगः'–ग.। १७. इत्यस्य पूर्वं 'ससप्रणवैः'–ख.। १८. 'षोडश ....र्नवभिः' नास्ति–ख.। १९. 'सक्षका ....स्वगुण' नास्ति–ग.। २०. ख्यातैर–ख.। २१. 'वा' नास्ति–ख.। २२. त्रकं कुर्यात्–ग.। २३. न्तुवत्तु–ग.। २४. णं गुरूणां–ख. ग.। २५. इतः परं 'सिद्धानां'–ख.। २६. न्तुसमग्रन्थ्यङ्गुलिमानं प्रति–ख.। २७. ग्रन्थ्यङ्गुलीमात्रं–ग.। २८. इत्यस्य परं 'प्रतिसिद्धं'–ग.। २९. त्रं अकथवै-कैकमेव–ख.। ३०. त्रानुबो–ख.। ३१. 'कण्ठमनु' इत्यस्य स्थाने 'षट्'–ख., 'षट्तन्तु'–ग.। ३२. रस्त्रस्थानां–ख. ग.। ३३. 'ब्रह्मादि' इत्यस्य स्थाने 'मुद्रा'–ख., 'ब्राह्मादि'–ग.। ३४. मक्षत–क.। ३५. 'तावता' इत्यस्य स्थाने 'तावद्'–ख., 'तावता' नास्ति–ग.।

षोडश[1]कला[2]द्व्यष्टत्रिको[3]णान्तचक्र[4]देवतानां स्वचक्रसंख्यया सूत्रादि कार्यम्। तत्र चक्रेश्वरीणां चैकाधिकं[5] [6]तन्त्वादिपवित्रकं कार्यम्। कामेश्वर्यादिदेवीत्रयस्य प्रत्येकं द्वादश[7]तन्त्वादिकं मुख्यदे[8]व्यास्तु[9] उत्तमादिक्रमेण चतुष्षष्ट्यष्टत्रिंशत्सप्तविंशतितन्त्वादि पूर्वोक्ताभिप्रायेण कुर्यात्। [10]मध्यचक्रेश्वर्या मूलदेवतावदेव[11] कार्यम्। गङ्गावर्ता[12]रकमष्टोत्तरशतचतुःषष्टिचतुःपञ्चाशत् [13]तन्त्वादि विधाय आचार्यस्य सप्ततन्तू[14]पवीतमानं यथाशोभं[15] ग्रन्थि [16]विरच्य तथैव साधकसामयिकानाम्, किन्तु साधकस्य पञ्चतन्त्वादि, साम[17]यिकानां त्रितन्त्वादि[18] [बटुकादि]ब[19]लित्रयस्य नवतन्त्वादि[20] कार्यम्। [21]अग्निस्थापनं [22]प्राग्वत्। [23]सर्वासामथवा मुख्यदेव्या एकमेव। [24]ततः [25]कलशाष्टकवारिधानीदेवीकु[26]म्भानां सप्तविंशतिद्वादशनवतन्त्वादि[27] कार्यम्।

ततोऽधिवासनवासरेऽस्त्रमन्त्रेण मण्डपं त्रिसूत्रेण वेष्टयित्वा [28]ईशानादिकोणोपकण्ठे [29]यवान् [30]प्रस्तीर्य [31]तदुपर्यासनषट्[32]कं समभ्यर्च्य तदुपरि [33]पयःसंयुतोदकपूर्ण[34] [35]पञ्चर[36]त्नसर्वौषधिपूगफलादि[37]फल[38]गर्भं कुङ्कुमादि[39]विच्छित्ति-

---

१. शदला–ख.। २. लाद्यष्टकोणा–ख.। ३. कोण्यन्तं–क.। ४. 'चक्र .... तत्र' नास्ति–ख., तस्य स्थाने 'संख्यादि तच्च'–ग.। ५. धिक–ख.। ६. तत्त्वादि–क.। ७. दशेकं तन्त्वा–क.। ८. ख्या–ख.। ९. स्तुतमादि–क., स्तत्तमादि–ग.। १०. 'मध्य .... कार्यं' नास्ति–ख.। ११. देकं कार्यम्–क.। १२. तारमष्टो–ख., तारशतमष्टो–ग.। १३. तत्त्वादि–ख. घ. ङ.। १४. वीतमानम्–ख.। १५. भनं ग्रन्थियुतं विर–घ.ङ.। १६. विरेच्यं–ख.। १७. यिकस्य–घ.ङ.। १८. इतः परम् 'बटुकादि'–ख.। १९. बलित्रयास्यवन्द–क., बलात्रयस्य नव'–ग., 'बलिचतुष्कस्य नव'–घ.ङ.। २०. इत्यस्य परं 'कं'–ग.। २१. चक्रस्थानां सर्वेषां प्रा–घ.ङ.। २२. पूर्ववत्–ग., प्राग्वदेव–घ. ङ.। २३. 'सर्वासाम्' नास्ति–घ. ङ.। २४. 'ततः' नास्ति– घ. ङ.। २५. 'कलशा .... वासरे' नास्ति–ख., 'कलशा .... कुम्भानां' इत्यस्य स्थाने 'कुलाष्टकविधानी देवि कुमारी'–ग.। २६. कुम्भसवितृसन्ध्यानां सप्त–घ.ङ.। २७. इत्यस्य परं 'कं'–ग.। २८. वाय्वीशानकोणो–घ. ङ.। २९. यवाक्–ख.। ३०. प्रतीर्य–क.। ३१. 'तदुपरि' नास्ति–घ. ङ.। ३२. षट्कमभ्यर्च्य–ग.। ३३. 'पयः' इत्यस्य स्थाने 'रस'–ग.। ३४. पूर्णाय–ग.। ३५. 'पञ्च' इत्यस्य स्थाने 'सर्व'–ग.। ३६. 'रत्न' नास्ति– घ. ङ.। ३७. फलं–क.। ३८. गर्भ–ख., 'गर्भं' नास्ति–ग., अस्य स्थाने 'युतं'–घ.ङ.। ३९. दिचिच्छक्तिर–घ.ङ.।

रञ्जितं[1] चूतपल्लवच्छन्नं[2] सोपवीतं समाल्यं तण्डुलफलसम्पूर्णपात्रमुखं[3] [4]सवस्त्रयुग्माच्छादितं[5] देवीकुम्भं व्यवस्थाप्य तदुपरि देवीमावाह्य मूलमन्त्रेण तां संपूज्य वारिधानीमलङ्कृत्यास्त्रेणाभ्यर्च्य पूर्वादीशानान्तेषु [6]मुख्यकुम्भवदलङ्कृतेषु कुम्भेष्वष्टसु अष्टौ वशिन्यादिका(:)[7] [8]सैकारै(:) [9]स्वस्वनामपदैर्नमोन्तैर्यज्ञरक्षार्थं पूजयेत्। ततः [10]प्राग्वन्मण्डले नित्यनैमित्तिकार्थं[11] पूजां [12]कृत्वाऽधिवासनपवित्रं[13] [14]देव्या आरोपयेत्। यथा पवित्रं[15] गन्धपुष्पसहितं धूपवासितमादाय ध्यात्वा देवीं[16] पवित्रस्य समग्रस्याधिकारिणीं[17] मूलविद्यां समुच्चार्य सर्वचक्रान्तरालस्थे[18] सर्वपीठाधिपे [19]सर्वतत्त्वात्मिके परब्रह्माभिन्नरूपे[20] महात्रिपुरसुन्दरि कृतसंवत्सरनित्यनैमित्तिकपूजापरिपूरणाय[21] सर्वकामावाप्तये च[22] एह्येहि[23] द्वारपालगुरुसिद्धदेवताचक्रेश्वरीपरिवारिता[24] [25] पवित्रारोहणावाहनसमये आमन्त्रणगन्धपवित्रकमिदं[26] तुभ्यं नम इति गन्धपवित्रं[27] देवीशिरस्यर्पयेत्[28]।

ततः परेद्युः कुम्भपूजां[29] [30]नित्यनैमित्तिकीं च देवीपूजां कृत्वा देवीकुम्भे [31]तावन्मूलेन तत्समाप्तौ[32] तुभ्यमिदं [33]पवित्रं नम इत्यनेन पवित्रकमारोप्यास्त्रेण[34]

---

१. रजतचूत–ख.। २. पर्णादिच्छन्नं–घ.ङ.। ३. 'सम्' नास्ति–ख.ग.। ४. 'स' नास्ति–ख.घ.ङ.। ५. ग्मादिच्छा–ग.। ६. मुखकुम्भ–क.। ७. दिकान् स्त्वैकारस्थैर्नामपदैर्मांमात्रैर्यज्ञ–क.,द्या रूपकरैः स्वस्व–घ.,द्यात् त्वङ्कुरैः स्व–ङ.।८.सैंकारैः–ग.।९.'स्व' नास्ति–ग.। १०.प्राग्वत्पूजामण्डले–ख.,'प्राग्वत् क्षमस्वेति खेचर्या विसर्जयेत्। अथ तत्पूजामण्डले'–घ. ङ.। ११. कार्थं च पूजा–क., कां च पूजां–ख., कार्थे पूजां–घ. ङ.। १२. कृत्वा विद्यासन–क., कृत्वा पूर्वेद्युस्तदेव चाधिवासन–ख.। १३.'पवित्र' नास्ति–घ.ङ.। १४.'देव्या' नास्ति–ख.ग.,देव्यां–घ.ङ.।१५.इतः परं 'हस्तगतं कृत्वा'–ख.।१६.देवीप–ख.। १७. मयस्या–क.। १८. 'चक्रा' इत्यस्य स्थाने 'वत्रा'–क., 'चा'–ख.। १९. 'सर्व' नास्ति–क.ग.। २०. ह्यात्मिकेऽविभिन्न–ग.। २१. 'पूजा परि' नास्ति–ख.। २२. 'च' नास्ति–ग.। २३. 'एह्ये ....पाल' इत्यस्य स्थाने 'गुह्ये सिद्धारपात्र'–ग.। २४. 'देवता' नास्ति– घ.ङ.। २५. 'परिवारिता' इत्यस्य स्थाने 'रिवातिता'–क., 'परिवारदेवता'–ख., 'युतो'–ग.। २६. 'गन्ध' नास्ति–ग.। २७.वित्रकं–ख. घ. ङ.। २८. स्यर्चयेत्–ख.। २९. 'पूजां' इत्यतः परं 'निवृत्य'–घ.ङ.। ३०. 'नित्य' नास्ति–घ.ङ.। ३१. तावता मूलेन–क.। ३२. प्तेस्तुभ्य–क.। ३३. पवित्रकमित्यन्तेन–ख.,पवित्रकं नम–ग.। ३४. णास्त्रवारि–ख.।

वारि[१]धान्यां तथैवारोप्य वशिन्यादिदि[२]ग्देवतानां स्वस्वनामभिरौं[३]कारादिनमोन्तैस्तुभ्यमिदं पवित्रकं नम इत्युच्चार्यार्प[४]येत् । ततः प्रधानदे[५]वीमन्त्रमुच्चार्यात्मानं देवीरूपं ध्यात्वाऽऽत्मनि पवित्रकं [६]समारोपयेत् । ततः परिवारदे[७]वीनां स्वस्वनाममन्त्रैस्तुभ्यमिदं पवित्रकं नम [८]इत्येव मन्त्रैः [९]प्रतिचक्रं पवित्रकं [१०]समर्प्य मूलमन्त्रमुच्चार्य [११]सोमसूर्यवह्निचक्रेश्वरि त्रैलोक्यमोहनादिसर्वचक्रा[१२]धिष्ठातृ ब्रह्मविष्णुरुद्र[१३]परब्रह्मात्मिके आत्मतत्त्व[१४]विद्यात[१५]त्त्वशिवतत्त्वव्यापिके निजरूपा[१६]भिन्ने[१७]च्छाज्ञानक्रिया[१८]शक्तिस्वरूपोल्लासभू[१९]ते समस्त[मन्त्र][२०]माता[२१]र्महात्रिपुरसुन्दरि[२२] प[२३]रचिच्चमत्कारधर्मिण्यणिमादिनिखिलसिद्धिप्रदे [२४]सांवत्सरिकनित्यनैमित्तिकपूजापरिपूरणाय[२५] तुभ्यमिदं [२६]सुपवित्रकं नम इति [[२७]चक्र]देव्यै [२८]दत्त्वा [२९]पवित्रत्रयं ततः समयविद्यां स्मृत्वा तेनैव वाक्येन गङ्गावतारे[३०] तुभ्यमिदं पवित्रकं नम इति समर्पयेत् ।

[३१]अथ—

[३२]प्रसीद मम देवेशि क्रियालोपो[३३] यतो गतः ।<br>
मध्ये संवत्सरस्यास्य [३४]आदावन्ते तथा भवेत् ॥

---

१. रित्वा ध्यात्वा तथै–क.। २. 'दिग्देव ....रौका' इत्यस्य स्थाने 'देवताभिरैङ्का'–ग.। ३. रैङ्का–ख.घ.ङ.। ४. र्याचयेत्–त्रि.। ५. देवतामूलमन्त्र–ख.। ६. समर्पयेत्–ख.। ७. देवतानां–ग.। ८. 'इत्येव मन्त्रैः' इत्यस्य स्थाने 'इत्यन्तैः'–ख.घ.ङ.। ९. प्रतीचं पवि–ख.। १०. समर्च्य–क., समभ्यर्च्य–ग., समर्पयेत्–घ.ङ.। ११. 'सोम ....श्वरि' इत्यस्य स्थाने 'अग्निब्रह्मचक्रेश्वरि'–ख., 'सोमसूर्यब्रह्मरन्ध्रचक्रेश्वरि'–ग., 'सोमसूर्याग्निब्रह्मचक्रेश्वरि'–घ.ङ.। १२. धिष्ठिता त्रिब्रह्म–ख.। १३. 'पर' नास्ति–ग.। १४. 'तत्त्व' नास्ति–ख.। १५. 'तत्त्व' नास्ति–ख.। १६. रूप भिन्ने–ख.ग.। १७. न्ने इच्छा–ग.। १८. 'शक्तिस्वरूपो' इत्यस्य स्थाने 'नाक्लिष्टरूपो'–क.। १९. 'भूते' इत्यस्य स्थाने 'हेतुभूति'–क.। २०. 'मन्त्र' नास्ति–क.ग.घ.ङ.। २१. मातृर्महा–ग.। २२. न्दरी–क.। २३. परचित्तचम–क., परिचितचम–ग.। २४. सांस्तरिक–क.। २५. णार्थं–ग.। २६. सप–ख., 'सु' नास्ति–ग.। २७. 'चक्र' नास्ति–क.ख.घ.ङ., अस्य स्थाने 'च'–ख.। २८. 'दत्वा ... .समय' इत्यस्य स्थाने 'तत्समय'–ख.। २९. 'पवि ....ततः' नास्ति–ग.। ३०. तारे च रूपं पवि–क., तारं चतुर्थं रूपं–ख.घ.ङ.। ३१. 'अथ' इत्यस्य स्थाने 'यथा'–ग.घ.ङ.। ३२. 'प्रसीद' इत्यस्य स्थाने 'प्रमादात्'–ख.ग.घ.ङ.। ३३. लोपस्तु यद्गतम्–ख., लोपस्तु यद्भवेत्–ग.। ३४. चादा–ख.घ.ङ.।

[1]तदनेनानुयोगेन सि[2]तसू[3]त्रान्वितेन तु ।
ममास्तु [4]तत् सुसम्पूर्णमखण्डं त्रिपुरेश्वरि ॥

इति पठित्वोपतिष्ठेत् । [5]ततोऽग्निकार्यं निर्वर्त्याग्नौ देवीं ध्यात्वा पूर्ववत् पवित्र[6]कमर्पयित्वा महानैवेद्यादि[7]धूप[[8]दीप]घण्टा[9]वादित्रारार्तिकगीतनृत्यकुमारी-बटु[10]क[11]योगिनीतर्पणादि[12]प्रदक्षिणं कृत्वा कृतकृत्यः [13]स्वपेत् ।

ततोऽपरेद्युर्नि[14]त्यनैमित्तिकपूजां कृत्वा [15]होमं विधाय कुमारीबटुकयोगि-नीच[16]क्रमभ्यर्च्य देव्यै [17]दक्षिणां नैवेद्यं पूर्णाहुतिं कृत्वा वह्निस्थां देवीं [18]विसर्ज्य [19]एतत्ते निर्मा[20]ल्यनैवेद्यपवित्रादिकं [21]श्रीत्रिपुरसुन्दरि शेषिकाभ्यो नम इति [22]समर्प्य तत्सर्वं[23] [24]वस्त्रे बद्ध्वाऽ[25]गाध[26]जलेषु [27]विनिक्षिपेत् ।

[28]अथान्तरं [29]पवित्रं यो[30]गिनां लिख्यते । कुलशक्तिम[31]ध्युष्ट[32]वलयां मृणालत-न्तुनिभां तडित्कोटिविडम्बिनीं विश्व[33]सूचनात् सूत्रभूतामुत्थाप्य नवचक्र[[34]वि]भ्रम-चतुरां चक्रप्रतिलोमेन[35] ब्रह्मरन्ध्रं नीत्वा शृङ्गाटोदरग[36]तायामनवगर्भस्थितायां

१. तदनेन तु योगेन– ख.घ.ङ., तदन्तेन तु योगेन– ग. । २. सितासू– ख. । ३. त्रार्चितेन– ग. । ४. 'तत् सु' इत्यस्य स्थाने 'जन्म'– ख. । ५. ततो वक्ष्यमाणमग्निकार्यं– ख. । ६. कं समर्पयित्वा– ग. । ७. दिकं धूप– ग. । ८. 'दीप' नास्ति– क.ख. । ९. 'वादित्रा' नास्ति– ख. । १०. कान्तजतर्पण– क. । ११. 'योगिन्यर्प'– क.ख.घ.ङ. । १२. सद– ख.घ.ङ. । १३. 'स्वपेत्' इत्यस्य स्थाने 'स्तोत्रं कुर्यात्'– घ.ङ. । १४. 'नित्य' नास्ति– घ.ङ. । १५. 'होमं .... कृत्वा' नास्ति– घ.ङ. । १६. क्रं समभ्यर्च्य– ग. । १७. सदक्षिणां– ग. । १८. विसृज्य– ख.ग.घ.ङ. । १९. 'एतत्ते' इत्यस्य स्थाने 'मण्डलस्थां देवीं विसृजेत्'– ख.ङ. । २०. ल्यं निवेद्यं– ख. । २१. 'श्रीत्रिपुर .... इति' इत्यस्य स्थाने 'नागराजाय'– ख., 'श्रीत्रिपुरसुन्दरीकेशिकाभ्यो नम इति'– ग. । २२. समर्पयेत्– क. । २३. इतः परं 'निधाय'– ग. । २४. वस्त्रेण– घ.ङ. । २५. अगाधे– ख. । २६. 'जलेषु' इत्यस्य स्थाने 'जलसु'– क., 'जले'– ख. । २७. 'विनिक्षिपेत्' इत्यस्य स्थाने 'शुचिर्निक्षिपेत्'– ख.घ.ङ., 'निक्षिपेत्'– ग. । २८. तथान्तरं– घ.ङ. । २९. 'पवित्रं' नास्ति– ग., इतः परं 'कं'– घ.ङ. । ३०. गिनीनां यथा लिख्यते– घ.ङ. । ३१. 'मध्युष्ट' इत्यस्य स्थाने– मभ्युक्ष्य– क.ग. । ३२. वलया– क., 'वलयां' नास्ति– ग. । ३३. 'सूचनात्' नास्ति– ख. । ३४. 'वि' नास्ति– क.ग. । ३५. इतः परं 'क्ष्यं'– क. । ३६. गतायामनुगर्भस्थितायां– क., गतत्र्यर्गगर्भे स्थितायां– ख. ।

[१]परशक्[२]त्यामर्पयेत् [३]त्रिवारम्, [1]तेन मानसकर्म[४]लक्षणं वत्सरजं[५] प्राप्यते।

तदुक्तमनन्त[६]शक्तिभट्टारकैः [[७]त्रिपुरसुन्दरीकल्पलतायाम्] —

[८]यत्प्रोतं विश्वमेतद्भुवनविरचनात् तत्त्वव[९]र्णाद्यमुद्य-
न्मन्त्रस्फारानुषक्तं [१०]प्रततपदकलाद्वैतरूपं विभाति।
[११]तद्दीपं [१२]शक्तिसूत्रं परमशिवमहापू[१३]गदेदीप्यमानं
वन्दे पूजाक्रमस्य प्रचुरफलविधौ हेतुभूतं [१४]स्वहस्तस्थम्॥

॥ [१५]इति श्रीविद्यानन्दनाथविरचितायां त्रिपुरसुन्दरीपद्धत्यां [१६]ज्ञानदीप-
विमर्शिन्यां [१७]पवित्रपद्धतिरेकोनविंशतिः॥

■

१. परमशक्त्या–ख.ग.। २. क्त्यां समर्पयेत्–ग.घ.ङ.। ३. 'त्रिवारं तेन' इत्यस्य स्थाने 'समूलमन्त्रं स्मरन्'–घ.ङ.। ४. 'लक्षणं' इत्यस्य स्थाने 'फलं'–ख.। ५. रजाः–ख.। ६. 'शक्ति' नास्ति–घ.ङ.। ७. 'त्रिपुर....तायाम्' नास्ति–क.ख.। ८. तत्प्रोतं–घ.ङ.। ९. वज्राद्य–ख.। १०. व्रतनपद–क.। ११. तद्दिव्यं–ख.घ.ङ.। १२. विश्वसूत्रं–ख.। १३. 'पूग' इत्यस्य स्थाने 'पुञ्ज'–ख.घ.ङ.। १४. 'स्व' नास्ति–क.। १५. 'इति .... विंशतिः' इत्यस्य स्थाने 'इति पवित्रारोपणपद्धतिरेकोनविंशतिः'–ख.। १६. 'ज्ञान....शिन्यां' नास्ति–घ.ङ.। १७. पवित्रारोपणपद्धतिर्विंशतितमी–घ.ङ.।

*1. 'तेन मा' इति मध्य एव गमातृकाऽवसिता।*

# दमनकपद्धतिः

अथ [1]दमनकारोपणं [2]द्विविधं बाह्याभ्यन्तरभेदेन ।

हेलावलोकन[3]बलाद्विलयं [4]विधाय
कामं चकार तरसाभिनवं [5]स शम्भुः ।
[6]यद्दीप्तवीर्यविभवाश्रयणेन शक्तिः
[7]साव्यात् त्रिलोकजननी त्रिपुरा जगन्ति ॥

देव्याः[8] करोति पर[9]शक्तिमहोदयेन
दिव्यं वसन्तसमये दम[10]नोत्सवं यः ।
का[11]मान् नितान्तमिह कामिजनः सम[12]न्ता-
दाप्नोति शश्वदमितान् [13]स्वहृदन्तरस्थान् ॥

[14]दमनकस्य विधिं वक्ष्ये शास्त्रदृष्टेन [15]कर्मणा ।
येन सांवत्सरी पूजा साफल्यं भजते नृणाम् ॥
पूर्वं समाधिसंस्थस्य शिवस्यामिततेजसः ।
[16]तपोनिकृत्तये [17]कामः शक्रेण प्रेषितो [18]यदा ॥

---

१. मदनका– ख.। २. 'द्विविधं' नास्ति– ख.। ३. नवशाद्वि– ख., नभयाद्वि– घ. ङ.। ४. निधाय– घ. ङ.। ५. 'स' इत्यस्य स्थाने 'हि'– ख.। ६. तद्दिव्यवीर्य– ख., यद्दिव्यवीर्य– घ. ङ.। ७. साव्यात् .... महोदयेन' नास्ति– घ. ङ.। ८. व्याक्षरो– क.। ९. रभक्ति– ख.। १०. मकोत्स– ख.। ११. कामं निता– ख.। १२. मस्तादा– घ. ङ.। १३. 'स्वहृदन्तरस्थान्' नास्ति– क.। १४. दमनस्य– ख.। १५. वर्त्मना– घ. ङ.। १६. तपोनिर्वर्तये– क.। १७. कामं– ख.। १८. 'यदा' इत्यस्य स्थाने 'दये'– ग., नास्ति– क.।

[1]तदा ललाटनेत्राग्निज्वालाभिस्तेन शम्भुना ।
भस्मराशीकृतः कोपात् स कामस्तत्र वि[2]श्वजित् ॥
रतिः पतिवियोगार्ता प्रीतिः शोकाद् रुरोद च ।
तदश्रु[3]पातादुद्भूता [4]दमनस्य लता शुभा ॥
तद्[5] रामणीयं सौरभ्यं पवित्रत्वं च [6]शङ्करः ।
[7]दृष्ट्वादाय मुद्रा दध्रे मूर्ध्नि तामतिकौतुकात् ॥
रतिप्रीतिशुचं [8]ज्ञात्वा करुणावि[9]ष्टमानसः ।
अनङ्गं निर्ममे शम्भुर्भूयः संकल्पमात्रतः ॥
ततो वरं ददौ तस्मै कन्दर्पाय स शक्तिमान् ।
वसन्ते दामनीं पूजामस्माकं न करोति यः ॥
वत्सरार्चाफलं तस्य [10]तव सर्वं भविष्यति ।
इत्यस्मात्कारणात् सन्तः कुर्वन्ति [11]दमनोत्सवम् ॥

तत्र पवित्रमृदापूर्णे खपरि समूलं दमनकमादाय [12]नवधा कृत्वा हसक्षमलवरयूं इति मन्त्रेणामन्त्र्यास्यैवैकैकाक्षरेण सनादबिन्दुना नवधा [13]मन्त्रितं [14]पृथक् पृथगारोप्य [15]अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः सर्वेभ्यः शर्व सर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यो नम इत्यघोरमन्त्रेणाभिषिच्यास्त्रेण वाम[16]करतर्जन्याग्री[17]वलेखनेन

---

१. ततो–क.। २ विसर्जितः–क.। ३. श्रुघाता–क.। ४. दमनास्ता लताः शुभाः–ख.। ५. तद्ग्राम–ख.। ६. शङ्कर–क.। ७. 'दृष्ट्वा ....कौतुकात्' इत्यस्य स्थाने 'दृष्ट्यादाय मुदां चक्रे मूर्ध्ना च महत्कौतुकात्'–क.। ८. 'ज्ञात्वा' इत्यस्य स्थाने 'दृष्ट्वा'–घ.ङ.। ९. ष्टचेतसा–ख.। १०. तपः–ख.। ११. मदनो–ख.। १२. 'नवधा ....क्षरेण' इत्यस्य स्थाने 'नवाक्षरमन्त्रेणाभिमत्यास्यैकैकाक्षरेण'–घ.ङ.। १३. मन्त्रितेन–ख.। १४. 'पृथक्' नास्ति–ख.। १५. 'अघोरे ....त्यघोरमन्त्रेणा' इत्यस्य स्थाने 'अघोरेभ्योऽथ घोरेभ्य इत्याद्यघोरमन्त्रेणा'–ख., 'घोरमन्त्रेणा'–घ.ङ.। १६. 'कर' नास्ति। १७. न्याङ्गुलेनूल्लेखनेन–क.।

रक्षां कृत्वा कवचेन [१]मूलमुद्रयोपरि करभ्रामणेनावगुण्ठ्य स्थापयेत्। ततो वृद्धिगतश्चैत्र[२]मासि सितत्रयोदश्यां[३] तं दमनकमस्त्रे[४]णोद्धृत्य कुङ्कुमादिसुगन्धद्र[५]व्यैर्हृदयमन्त्रेणालभ्य पवित्रवदधिवास्य प्रातश्चतुर्दश्यां [६]नित्यपूजां निर्वर्त्य पवित्रवद् घटस्थापनादिकं[७] कृत्वा [८]ततः [९]कुङ्कुमधूपादिवासितेन[१०] [११]तेनैव [[१२]दमनेन] नित्यनैमित्तकपूजां कृत्वा दमनकं [१३]समर्प्य देव्यै [१४]पूजामण्डले कुङ्कुमोदकादिना [मण्डलान्तरं] विरच्य हस्तेनाशोकतरुमालिख्य तदुपरि त्रिकोणं कृत्वा तन्मध्ये [१५]नवयौवनमारक्तवस्त्रालङ्कारभूषितं[१६] रतिप्रीतिभ्यां [१७]कामदेवं सर्वोपचारसहितेन [१८]मद(दम)नकेनाभ्यर्च्य[१९] [२०]ऐं ह्रीं श्रीं फ्रें रत्यै नमः, [२१]ऐं ह्रीं श्रीं फ्रें प्रीत्यै नम इति मन्त्रेण [२२]रतिप्रीती समभ्यर्च्य[२३] वं वसन्ताय नम इति [[२४]मन्त्रेण]वसन्तमर्चयित्वा[२५] ऐं कं कदम्बवनाय नम [२६]इत्युद्यानं संपूजयेत्।

[२७]तेषां ध्यानं [२८]यथा — वसन्तो गौरवर्णो वामकरार्पितामृत[२९]पूर्णकलशः, दक्षिणकरे नानापुष्परचितमालाधारी, रतिप्रीती द्वे गौरश्यामवर्णे ताम्बूल[३०]पत्रमु[३१]दितवामकरे कुशेशयनीलोत्पलहस्ते दिव्यवस्त्रावृते दिव्याभरणभू-

---

१. शूल–ख.ङ.। २. 'मासि' नास्ति–क.। ३. श्यां तु तदेव दमनकमस्त्रेणो–क.। ४. णच्छित्वा कुङ्कु–ख.। ५. व्यैर्हृन्मन्त्रे–घ.ङ.। ६. तिथिपूजां–ख.। ७. 'कं' नास्ति–क.। ८. तत्–ख.। ९. कुसुम–घ.ङ.। १०. 'तेन' नास्ति–ख.। ११. 'तेनैव' नास्ति–घ.ङ.। १२. 'दमनेन' नास्ति–क. घ. ङ.। १३. 'समर्प्य . . . . मण्डले' इत्यस्य स्थाने 'समर्च्य पूजामण्डलसमीपे मण्डपं'–ख.। १४. 'पूजामण्डले' इत्यस्य स्थाने 'पूजामण्डपे मण्डलसमीपे'–घ.ङ.। १५. नवयोनिमारक्त–ख.। १६. षितां–ख.। १७. 'कामदेवं' इत्यस्य स्थाने 'वामदक्षिणपार्श्वशोभितं पञ्चबाणं धनुर्धरं वसन्तयुतकदम्बवनमध्यगतं मदनं ध्यात्वा ऐं ह्रीं क्लीं कामदेवाय नम इति मन्त्रेण'–ख., 'वामदक्षिणपार्श्वशोभितं पञ्चबाणं धनुर्धरं वसन्तसंयुतं कदम्बवनमध्यगं ध्यात्वा क्लीं कामदेवाय नम इति मन्त्रेण कामदेवाय'–घ.ङ.। १८. 'मदनकेनाभ्यर्च' नास्ति–घ.ङ.। १९. र्चयेत्–ख.। २०. ऐं ह्रीं श्रीं ख्फ्रें–ख., ह्रीं श्रीं प्रें–घ.ङ.। २१. 'ऐं ....नमः' नास्ति–ख.। २२. 'रतिप्रीती' इत्यस्य स्थाने 'रतिं'–क.। २३. इत्यस्य परं '२वं'–ख., 'ह्रीं श्रीं वं'–घ.ङ.। २४. 'मन्त्रेण' नास्ति–क.घ.ङ.। २५. मभ्यर्चयेत्–ख., मभ्यर्च्य–घ. ङ.। २६. 'इत्यु . . . . जयेत्' इत्यस्य स्थाने 'इति मन्त्रेणोद्यानमभ्यर्चयेत्–ख.। २७. एतेषां–घ.ङ.। २८. 'यथा' नास्ति–घ.ङ.। २९. तामृतकलशपूर्णो दक्षकरे–क.। ३०. 'पत्र' नास्ति–ख., पत्रं–घ.ङ.। ३१. मुद्रित–ख., मुद्रयित्वा–घ.ङ.।

षिते पुष्पमालोपशोभिते ध्येये। इति [१]काममर्चयित्वा **आगमोक्तं** तत्प्रसादनाय[२] वाक्यं पठेत्। [३]यथा—

देव्यभ्यर्हितेन देवेन वरस्ते मन्मथार्पितः[४]।
यस्तेन पूजा निर्विघ्नं भूयान्मे त्वत्प्रसादतः॥

इति [५]मदनोत्सवपूजां निर्वर्त्याग्निकार्यं कृत्वा दमनकपूजासमर्पणं विधाय ततो [६]दमनकसंपूजिता[७]मिष्टदेवतामागमपुस्तकं ततो गुरुं ततः[८] स्वात्मानं दिव्य-सूक्ष्मघण्टिकाद्यलङ्कृतहिन्दोलकाधिरूढं कृत्वा गीतवाद्यनृत्यादि [वि[९]विधोत्सवं] विधायाभीष्टदेवतामुद्दिश्य कुमारीचक्रं सन्तर्प्य स्वविभवानुसारेण [१०]स्वगुरुं सपरिवारं यथा[११]शक्त्या हेमवस्त्रादिना[१२] संपूज्य तत्प्रसादादाज्ञां गृहीत्वा दीपोत्सवं कुर्यात्। [१३]यथा—

गोधूमाश्च[१४] सिताशालीगुडखण्डविमिश्रिताः।
शर्करादिकसंयुक्ता लवणेन्दु[१५]विमिश्रिताः॥
[१६]क्षीरेणा[१७]लोडयेत् तत्तु स्वयम्भुकुसुमान्वितम्।
कुण्डगोलकसंमिश्रं नवद्रव्य[१८]विमिश्रितम्॥

सार्धत्र्यङ्गुलमानां त्रिकोणाकारां चक्रेश्वरीं नवकसंख्यया कृत्वा घृतेन [१९]पक्तान् रक्तवर्त्तिकान् गोघृत[२०]पूरितान् स्थाल्यभ्यन्तरे चाष्टदिक्षु [२१]मध्ये संस्थाप्य[२२] [२३]सिद्ध-

---

१. कामं संवीजित्वा–क.। २. 'नाय' नास्ति–घ.ङ.। ३. 'यथा' नास्ति–घ.ङ.। ४. थार्चितः–ख.। ५. दमनो–घ.ङ.। ६. 'दमनकसंपूजिता' इत्यस्य स्थाने 'मदनपूजा'–ख.। ७. 'मिष्ट' इत्यस्य स्थाने 'नित्ये'–क.। ८. 'ततः स्वात्मानं' इत्यस्य स्थाने 'स्वात्मनि'–घ.ङ.। ९. दिव्यं विधाया–क., 'विविधोत्सवं' नास्ति–क.ख.। १०. 'स्व' नास्ति–ख.। ११. शक्तिदानेन हेम–ख.। १२. नाभिपूज्यानुज्ञां गृहीत्वा–घ.ङ.। १३. 'यथा' नास्ति–घ.ङ.। १४. श्च स्मृता–ख.घ.ङ.। १५. 'वि' नास्ति–ख.। १६. क्षरेण–क.। १७. लोकयेत्तन्तुं–ख., लोडयेत्तत्र–घ.ङ.। १८. विनिर्मितम्–ख.घ.ङ.। १९. पक्त्वा तान् रक्तवर्तिकान्–ख.। २०. घृतेन पूरि–घ.ङ.। २१. 'मध्ये' नास्ति–घ.ङ.। २२. प्य मत्स्यमांससिद्ध–घ.ङ.। २३. 'सिद्ध ... त्वेन'' इत्यस्य स्थाने 'द्रव्यचरुव्यञ्जनदधीन्दुघृतलोलीभूतचरुं मध्यदीपस्यासनत्वेन'–ख., सिद्धद्रव्यव्यञ्जनदधि–घ.ङ.।

द्रव्यं यवदधिमधुघृतलोलीभूतचरुं मद्यदीपासनत्वेन [१]संस्थाप्य [२]चणकादीन् विकीर्य परितस्ताम्बूलपत्रान् सपूगफलान् निक्षिप्य [३]रत्नस्वर्णसमेतान् कृत्वा [४]ऐङ्कारांङ्कितत्रिकोणवृत्तचतुरस्रमण्डलं कृत्वा देवीं षडङ्गेनाभ्यर्च्य दीपासनस्थालीश्च तस्मिन् प्रतिष्ठाप्य [५]क्लींकारेण [६]प्रबोध्य नवनि[७]त्याभिः प्रत्येकं [८]हेतुपुष्पगन्धै[९]राराध्य भूजानुको भूत्वा कराभ्यामुद्धृत्य मूलविद्यासमयविद्याचतुष्टयप्रा[१०]न्ते प्रागारार्त्तिकप[११]रिभ्रामणोक्तं वाक्य[१२]द्वयं पठन् देवीपुरतः प्रादक्षिण्येनाध्युष्टवारं परिभ्राम्य तन्मण्डले [१३]प्रतिष्ठाप्य [१४]स्वस्वसामयिकैः सह रहसि तान् दीपान् [१५]सचतुष्कान् [१६]सशालिकान् [१७]संप्राश्याचम्य मूलदेवीं नमस्कृत्य पूर्णाहुतिं [[१८]दत्त्वा] वह्निस्थां मण्डलस्थां[१९] देवीं विसृज्य निर्मा[२०]ल्यानि वेद्यारोपितं [२१]मद(दम)नकं शेषिकाचेटिकाभ्यो निवेद्य ताश्च विसृज्य मूलविद्यामङ्गसहितां [२२]प्राग्वद् देहे विन्यसेत्।

अथाभ्य[२३]न्तरदमनकं [[२४]यथा]—भ्रूमध्ये मूलविद्यामुदितकोटिबालार्काभां दमनकाख्यां दमनोद्भवां [ध्यात्वा] मनसा संपाद्य तामाभ्यन्तरचक्रेश्वर्यै अनच्ककलासंसृ(श्रि)तायै मूलेन [२५]समर्प्याभ्यन्तरद्वारस्थेभ्यः कामरतिप्रीतिवसन्तोद्यानेभ्यो दत्त्वा मानसकर्मसि[२६]द्ध्यै प्रार्थनावाक्यं पठेत्[२७], [२८]दीपोत्सवं चाभ्यन्तरं

१. 'सं' नास्ति–क.। २. 'चणकादीन्' इत्यस्य स्थाने 'रक्तकाण'–क.। ३. रक्तसुवर्णसमेतं–ख.। ४.ईकारा–ख.घ.ङ.। ५. ह्रींकारेण–ख.घ.ङ.। ६.प्रवेध्य–ख.,प्रज्वाल्य–घ. ङ.। ७. वमित्या–क.। ८. हेतुभिस्सर्वमिन्दुपुष्पगन्धैः–ख.। ९. न्धै समाराध्यावनिगतजानुको–ख.। १०.'प्रान्ते प्रागारार्तिक' नास्ति–ख.। ११.कत्रिकभ्रा–क.। १२.वाक्यत्रयं–ख.। १३.संस्थाप्य–घ.ङ.। १४.'स्व स्व' नास्ति–घ.ङ.। १५.सचरुकान्–ख.। १६.'सशालिकान्' नास्ति–ख.। १७.'सं' नास्ति–ख.। १८.'दत्त्वा' नास्ति–क.। १९.लस्थाय देवीं–क.। २०.ल्यं निवे–ख.,ल्यं नैवेद्यमारो–घ.ङ.। २१.'मदन ....विसृज्य' इत्यस्य स्थाने 'मदनकं शेषिकाचेटिकाभ्यो निवेदिताश्च विमृष्टया'–क.,'दमनकमशेषिकायै निवेद्य तां च विसृज्य'–ख.,'दमनकश्च चेटिकाभ्यो नम इति निवेद्य ताश्च विसृज्य'–घ.ङ.। २२.'प्राग्व ....न्यसेत्' इत्यस्य स्थाने 'पश्चाद्विग्रहे न्यसेत्'–घ.ङ.। २३.न्तरे–ख., न्तरं–घ.ङ.। २४.'यथा' नास्ति–क.घ.ङ.। २५.समभ्यर्च्या–ख., समर्प्य अन्तस्थेभ्यः काम–घ.ङ.। २६.सिद्धौ–क.। २७.इतः परं 'अनेन वत्सरस्तं मनसा कर्मफलं प्राप्यते'–ख.। २८.'दीपो ....कुर्यात्' नास्ति–घ.ङ.।

[1]कुर्यात् । यथा—अकुलशृङ्गाटे निश्शेषजगद्बीजमाद्यंवर्णं प्रकाशं शिवरूपं दीपं[2] समर्पयेत् । चरुकमपि तद्विमर्शरूपमधःशृङ्गाटोदरगतं परामृतकलया सिक्तं भावयेत् ।

[3]निमित्तार्चनतिथयस्त्वेता मन्तव्याः — शिवरात्रिदिनत्रयं दीपोत्सवदिनत्रयं दक्षिणोत्तरायण[दिनद्वयं] चन्द्रसूर्योपराग[4]ड[दिनद्वयं]चैत्रनवमी युगाद्या[5]दिदिन-मात्मजन्मत्रयं[6] गुरुजन्मत्रयं स्वदीक्षादिनमित्यादि ।

**॥ इति [7]श्रीविद्यानन्दनाथविरचितायां श्रीत्रिपुरसुन्दरीपद्धत्यां [8]दमनकपद्धतिर्विंशतिः ॥**

■

---

१.'कुर्यात् । यथा' इत्यस्य स्थाने 'पर्वसु योगी विदधीत तद्यथा'– ख.। २.दीपमर्पयेत्– ख.। ३.नैमित्तिकार्चन– ख.। ४.रागानि चैत्र– क.। ५.द्यानि चात्म– ख.। ६.त्रय– क.,इतः परं 'श्री'– ख.।७.'इति ....विंशति' इत्यस्य स्थाने 'इति दिनदीपोत्सवपद्धतिर्विंशतिः'– ख.। ८.दमनारोपणपद्धतिरेकविंशतितमा– घ.ङ.।

# [1]काम्यपद्धतिः

अथ काम्यप्रयोगांश्च कथयामि समासतः ।

यैः प्राप्नुवन्ति मनुजाः प्रार्थितानप्रयत्नतः ॥

सारस्वतार्थी मूलवाग्भवमाणवोपायेन शाक्तोपायेन वा साधयेत् । अ(आ)णवः क्रियानुध्यानजः । यथा—श्वेतवस्त्रगन्धालङ्कारादिसहितः श्वेतापवरकमध्यगः श्वेतवस्त्रालङ्कारां पुस्तकाक्षमालाम्बरां चतुरस्रसहितमध्यचक्रगां ध्यात्वा श्वेतैरेव गन्धाद्युपचारैर्मूलाद्येन सिद्धिमातृकामुद्रावशिन्यादिसहितां कोणदेवीरहितामभ्यर्च्य तत्पुरतः श्वेताक्षमालया नवलक्षं जपेत् । तदन्ते योनिकुण्डे मल्लिकाजात्यादिश्वेतपुष्पैराज्यमधुप्लुतैर्दशांशं जुहुयात्, तर्पयेत् शतांशेन । [१]मस्तके[२] हृदये[३] श्वेतवर्णां ध्यात्वाऽऽत्मानमपि दे[४]वीरूपं ध्यात्वा जपेत् । अथवा पूजावि[५]रहितं [६]हितकृतन्यासः श्वेतवर्णां भगवतीं मूर्ध्नि [७]हृद(द्)ध्यानपूर्वकमात्मानं [च] तन्मयं ध्यात्वा [८]मूलाद्यरूपां कुण्डलिनीं [९]मूलादिब्रह्मरन्ध्रगां शरच्चन्द्रकरोपमां करामृतलोलीभूतां समस्तवेदशा[१०]स्त्रागमानुद्गिरन्तीं चक्रे [११]विलीनां ध्यायेत् । अयं शाक्तोपायः । तथा[१२] (व्य ?) वश्याद्यर्थी रक्तवस्त्रगन्[१३]धानुलेपनादिकृतन्यासः कामकलारूपमात्मानं ध्यात्वा तदनु चतुरस्रचतुर्दशारद[१४]शारद्वयाष्टकोणत्रिकोणचक्रगां कामकलारूपां चतुर्भुजां पाशाङ्कुशचापबाणधरां ध्यात्वा सिद्धिमातृमु[१५]द्राचतु-

---

१. इतः पूर्वं 'स'–घ.ङ.। २. इतः परं 'च'–घ.ङ.। ३. इतः परं 'च'–घ.ङ.। ४. देवतारूपं–घ. ङ.। ५. 'विरहितं' इत्यस्य स्थाने 'रहितांशे'–घ. ङ.। ६. 'हितन्यासः' नास्ति–घ.ङ.। ७. 'हृद्' नास्ति–घ.ङ.। ८. 'मूलाद्यरूपां' नास्ति–घ.ङ.। ९. 'मूलादि .... करामृत' इत्यस्य स्थाने 'कुण्डादिरन्ध्रान्तं योगमयीं परमामृत'–घ.ङ.। १०. स्त्राणि ज्वलन्ती चक्रे–घ.ङ.। ११. विश्रान्तां ध्यायेत्–घ. ङ.। १२. 'तथा .... द्यर्थी' इत्यस्य स्थाने 'अथ वश्यार्थी'–घ. ङ.। १३. न्धोत्तमालेपादिकं कृत्वा न्यासकाले काम–घ. ङ.। १४. 'दशार' नास्ति–घ.ङ.। १५. 'मुद्राचतुर्दश' नास्ति–घ.ङ.।

---

*1. काम्यपद्धतिरेषा ख. नास्ति ।*

दशद्व[1]यवसुदेवीसहितां कोणदेवीर[2]हितां मूलमध्येन संपूज्य रक्ताक्षमालया न[3]वलक्षजपं विधाय ततो रक्ताश्वमारज[4]पापुष्पाद्यैर्मधुरत्रितययुतैस्त्रिकोणकुण्डे [5]दशांशं जुहुयात्। शतांशेन तर्पयेत्। एवं [6]कृत्वाऽचिरादपरः कामो भवति। अथवा [7]तादृग्रूपां भगवतीमात्मानं[8] ध्यात्वा [9]मूलमध्यरूपां कुलकुण्डलिनीमूलाद् ब्रह्मरन्ध्राद् मूलान्तं द्राव्यद्रावकभावेन ध्यायेत्। तथा विषापहारार्थी [10]श्वेतवस्त्रालङ्कारादिश्वेतवर्णां [11]पाशाङ्कुशपुस्तकाक्षमालाधरां समस्तचक्रमध्यगां ध्यात्वा [12]कोणदेवीरहितसमस्तपरिवारदेवतासहितां मूलतार्तीयेन संपूज्य श्वेताक्षमालया नवलक्षं [13]जपं विधाय श्वेत[14]पुष्पैराज्यमधुप्लुतैश्चतुरस्रकुण्डे [15]दशांशं जुहुयात्[16]। शतांशेन तर्पयेत्। [17]एवंकारी [18]कामकलावञ्चनकरी(रो) [19]भवतीति।

[20]तादृग्रूपां देवीमात्मानं सञ्चिन्त्य मूलतार्तीयरूपां कुण्डलिनीं मूलान्तं [लम्बि]बिकान्तं लम्बिकातो ब्रह्मरन्ध्रं(न्ध्रान्तं) ब्रह्मरन्ध्रात् पुनर्लम्बिकापर्यन्तं शरच्चन्द्रकरोपमां ध्यायेत्। तस्याप्यचिरात् पूर्ववत् फलसिद्धिः। अथवा रक्तवस्त्राद्यं त्रिपुरसुन्दरीविग्रहमात्मानं ध्यात्वा [21]समस्तचक्रमध्यस्थां समस्तपरि[22]वारसहितां समष्टिविद्यया [23]चाभ्यर्च्य [24]तत्पुरस्ताद् रक्ताक्षमात्रया नवलक्ष[25]जपं कृत्वा चतुरस्रादिकुण्डे पलाश[26]पुष्पैर्मधुरत्रयान्वितैर्दशांशं [27]हुत्वा शतांशं [28]सन्तर्प्य

---

१. 'द्वय' इत्यस्य स्थाने 'द्वन्द्व'–घ.ङ.। २. सहितां–घ.ङ.। ३. 'नव .... विधाय' इत्यस्य स्थाने 'नवलक्षं जपेत्'–घ.ङ.। ४. 'जपा .... युतैः' इत्यस्य स्थाने 'जवापुष्पाद्येवं मधुत्रितययुतं'–घ. ङ.। ५. शांशेन जुहु–घ. ङ.। ६. 'कृत्वा .... भवति' इत्यस्य स्थाने 'कृत्वा त्वचिरेणापरकामदेवो भविष्यति न संशयः'–घ. ङ.। ७. तद्रूपां–घ. ङ.। ८. इत्यस्य परम् 'च'–घ.ङ.। ९. 'मूल .... ध्यायेत्' नास्ति–घ.ङ.। १०. श्वेतवस्त्रगन्धादिभूषितः श्वेत–घ.ङ.। ११. 'पाशाङ्कुश' नास्ति–घ.ङ.। १२. 'कोण .... र्तीयेन' इत्यस्य स्थाने 'सपरिवारां मूलान्तेन'–घ. ङ.। १३. 'जपं विधाय' इत्यस्य स्थाने 'जपेत्'–घ. ङ.। १४. पुष्पैरभ्यर्च्यमाज्यमधुश्चतुरस्र–घ. ङ.। १५. 'दशांशं' नास्ति–घ. ङ.। १६. इतः परं 'दशांशं शतांशं तर्पयेत्'–घ. ङ.। १७. 'एवं कृत्वा काम'–घ. ङ.। १८. कामकालवचनकरी–क.। १९. भवति–घ. ङ.। २०. 'तादृग्रूपां .... अथवा' नास्ति–घ. ङ। २१. 'समस्तचक्रमध्यस्थां' नास्ति–घ. ङ.। २२. वारां समस्तविद्यया–घ. ङ.। २३. अभ्य–घ. ङ.। २४. तत्पुरतो रक्ता–घ. ङ.। २५. लक्षं जप्त्वा चतुरस्रा–ध. ङ.। २६. ष्पैर्मधुत्रययुक्तैर्दशांशं–घ. ङ.। २७. 'हुत्वा' इत्यस्य स्थाने 'जुहुयात्'–घ. ङ.। २८. 'सन्तर्प्य' इत्यस्य स्थाने 'तर्पयेत्'–घ. ङ.।

पश्चिमाभिमुखलिङ्गपुरतो लक्षमेकं जपेत्। इत्थंकारी[१] साक्षाद् भैरवो [२]भवति। अथवा महात्रिपुरसुन्दरीमात्मानं ध्यात्वा [३]समस्तविद्यारूपां कुलकुण्डलिनीं जन्मस्थानाद् [४]हृदयं हृदयाद् भ्रूमध्यं [५]भ्रूमध्याद् ब्रह्मरन्ध्रं पुनश्च [६]ब्रह्मरन्ध्राद् भ्रूमध्यमित्येवंक्रमेण। द्राव्यद्रावकभावेन [७]केवलपद्मरागनिभां ध्यायेत्, यावन्मनोलयः। [८]तस्यापि पूर्ववत् [९]तत्फलसिद्धिः[१०]। इतरवश्यादिकाम्यप्रयोगोऽस्माभिः कृतायाम**र्थरत्नावल्यां**[११] सर्वं स्पष्टमेवास्तीति।

**॥ इति[१२] कामविधानपद्धतिरेकविंशतिः ॥**

■

---

१. 'कारी' इत्यस्य स्थाने 'कृत्वा'–घ.ङ.। २. भवेत्–घ.ङ.। ३. समयष्टिस्तविद्या–घ.ङ.। ४. 'हृदयं' इत्यस्य स्थाने 'हृदये'–क.। ५. 'भ्रूमध्याद्' नास्ति–घ.ङ.। ६. 'ब्रह्मरन्ध्राद्' नास्ति–घ.ङ.। ७. 'केवल' नास्ति–घ.ङ.। ८. 'तस्यापि' इत्यस्य स्थाने 'स्यात्'–घ.ङ.। ९. 'तत्' नास्ति–घ.ङ.। १०. इतः परं 'अथवा ब्रह्मरन्ध्रेण तुरीयरूपां पराशक्तिमच्छशीतामृततुषारवर्षिणीं ध्यात्वा सर्वमपि साधयेत्'–घ.ङ.। ११. वल्यां प्रयोगपटले द्रष्टव्यः–घ.ङ.। १२. इति श्रीविद्यानन्दनाथविरचितायां ज्ञानरूपविमर्शिन्यां काम्यसाधनपद्धतिर्द्वाविंशतिः–घ.ङ.।

# दीक्षापद्धतिः

अथ [दीक्षा[१]] कथ्यते । यथा—

प्रणम्य सर्वतो ज्योतिरहं[२] सामरसात्मिकाम् ।
वामकेशीमतप्राप्तां[३] दीक्षां वक्ष्ये गुरूदिताम् ॥

देवमानुषपित्र्यादिवत्सरादिदिने सुधीः ।
[४]सिद्धपक्षे शुभदिने [५]चन्द्रशुद्ध्यामतन्द्रितः ॥

[६]मण्डपं करयित्वा तु लक्षणैरन्वितं[७] गुरुः ।
दीक्षोपकरणं सर्वं तत्रानीय यथाविधि ॥

रक्ततेजोमय(यं) [८]स्थाप्य ब्रह्माण्डे मण्डपे[९] सुधीः ।
उपविश्यासने रम्ये [१०]हृद्ये रक्तोत्तराम्बरे ॥

---

**ख. पाठः**

प्रणम्य परमेशानीं धामत्रयनिवासिनीम् ।
वामकेशीमतप्राप्तां दीक्षां वक्ष्ये शिवोदिताम् ॥१ ॥

देवमानुष्यपैत्रादिवत्सरेषु शुभे दिने ।
सुमुहूर्ते सुयोगे च चन्द्रशुद्ध्यामतन्द्रितः ॥२ ॥

मण्डपं कारयित्वा तु लक्षणैरन्वितं गुरुः ।
दीक्षोपकरणं सर्वं तत्रानीय यथाविधि ॥३ ॥

स्नात्वा सन्ध्यादिकं सर्वं सूर्यपूजादिकं क्रमात् ।
कृत्वा सुरक्तगन्धाद्यैरनुलिप्तः स्वलङ्कृतः ॥४ ॥

---

१. 'दीक्षा' नास्ति–क.।.२. रहसा सरमात्मकम्–क.। ३. मते प्रोक्तां–घ.ङ.। ४. 'सिद्ध' इत्यस्य स्थाने 'सित'–घ.ङ.। ५. दीक्षयेत शिष्यं गुरुः–घ.ङ., किन्त्वत्र 'शिष्यं' इत्यस्य स्थाने 'शिशुं'–ङ.। ६. 'मण्डपं .... यथाविधि' नास्ति–घ.ङ.। ७. रपि तं–क.। ८. 'स्थाप्य' इत्यस्य स्थाने 'व्याप्ते'–घ.ङ.। ९. ण्डले ये सुधीः–घ.ङ.। १०. ऋजुरक्ताम्बरोत्तरे–घ.ङ.।

शिवादिगुरुपर्यन्तां पारम्पर्यक्रमावलीम्[1]।
स्मृत्वा कपङ्कजे विद्वान् तदाज्ञादानपूर्वकम्[2] ॥
समाप्य[3] नित्यपूजां तु होमान्ते देशिकोत्तमः।
[4]आसामैशानदिग्भागे नवारचतुरस्रकम् ॥
[5]मण्डलं वर्तयित्वा [6]तु कलशा[न्][7] स्थापयेन्नव[8]।
हैमजान् ताम्रजान् वापि मार्तिकान् [9]वापि नूतनान् ॥
संशोध्य नेत्रप्रणवै रक्तसूत्रगुणान्वितान्।
[10]पयःपूर्णान् फलोपेतान् पञ्चामृतपवित्रितान् ॥
ध्यानामृतसमोपेतान् अष्टगन्धिसुगन्धितान्।
हेमरत्नयुतान् कृत्वा रक्ताम्बरयुगान्वितान् ॥

---

शक्त्या समन्वितः श्रीमान् चार्वङ्ग्या चारुभूषया।
चक्रमुद्धृत्य सकलं विधिवद् देशिकोत्तमः ॥५॥
नित्यनैमित्तिकीं पूजां कृत्वान्ते होमसंयुताम्।
मण्डपेशान् [वि]दिग्भागे नवारं चतुरस्रकम् ॥६॥
मण्डलं वर्तयित्वा तु रञ्जितैस्तण्डुलैः शुभैः।
पञ्चवर्णैर्यथान्यायं रजोभिर्वाथ कुङ्कुमैः ॥७॥
हेमांस्ताम्रानथान्यान् वा मार्तिकान् वाथ नूतनात्।
रक्तसूत्रैर्यथान्यायं मण्डितान् मण्डलैरनु ॥८॥
नवकुम्भान् समाहृत्य कषायजलपूरितान्।
रत्नस्वर्णादिसंयुक्तान् स्थापयित्वाथ मण्डले ॥९॥

---

१.मात्विधिम्–घ.ङ.। २.'दा' नास्ति–क.। ३.प्ति नि–घ.ङ.। ४.तत ईशान–घ.ङ.। ५.'मण्डलं' नास्ति–घ.ङ.। ६.'तु' इत्यस्य स्थाने 'च'–घ.ङ.। ७.इतः परम् 'नूतनान्'–घ.ङ.। ८.न्नरः–घ.ङ.। ९.वा च नूतनान्–घ.ङ.। १०.पयः....गन्धितान्' इत्यस्य स्थाने 'दिव्यपूर्णान् सद्वितीयान् पञ्चरत्नविचित्रितान्। कुलामृतसमोपेतानष्टगन्धसलोडितान्'–घ.ङ.।

[१]चूतपल्लवसंच्छन्नमुखानक्षतकान्वितान् ।
[२]सशङ्खदर्पणोपेतान् सफलान् फलदायकान् ॥

गणे[३]शक्षेत्रपालाभ्यां सहितं गुरुमण्डलम् ।
ऋत्वासना[४]न्तमभ्यर्च्य व्रीहितण्डुलमण्डिते ॥

सर्वधान्यसमायुक्ते कुशकूर्चविराजिते ।
मध्ये च वसुकोणे च प्रणवैः[५] स्थापितान् यजेत् ॥

मूलदेवीं मध्यकुम्भे वशिन्यादींस्तथाष्टसु ।
सहस्रादिक्रमेणैव [६]स्पृशन् मूलमनुं जपेत् ॥

नीराजनविधिं कुर्यात् पूर्ववद्देशिकाग्रणीः ।
रक्तगन्धवि[७]लिप्ताङ्गः स्त्रीवेषाभरणान्वि[८]तः ॥

---

मध्ये देवीमयं कुम्भं बहिरष्ट यथा परान् ।
कोणेषु कारणैर्युक्तान् वशिन्यादिसमाश्रयान् ॥१० ॥
उदितारुणसङ्काशैः परिधाप्यांशुकैः शुभैः ।
युग्मयुग्मक्रमेणाथ वस्त्रेणाच्छाद्य बुद्धिमान् ॥११ ॥
अथवा मध्यगे युग्मं बहिरेकमलाभतः ।
सतण्डुलैः फलमुखैः सताम्बूलैः सपुष्पकैः ॥१२ ॥
पल्लवोपरि राजद्भी रञ्जितान् पत्रकैः शुभैः ।
गणेशबटुकौ द्वारि सम्पूज्य स्वस्वमन्त्रतः ॥१३ ॥
ईशानादि यथान्यायं वायव्यान्तं गुरुक्रमम् ।
अभ्यर्च्यासनषट्कं तु मध्यकुम्भासने बुधः ॥१४ ॥

---

१. 'चूत ....कान्वितान्' नास्ति–घ.ङ. । २. शंशरवार्तृर्पणोपेतान्–क. । ३. शबटुकाभ्यां च–घ.ङ. । ४. नादिम–घ.ङ. । ५. वस्था–घ. । ६. 'स्पृशन्' इत्यस्य स्थाने 'स्वरान्'–क. । ७. विलेपाङ्ग–क. । ८. न्विताः–क. ।

ताम्बूलपूरितमुखो [1]विज्ञानानन्दचेतनः ।
सर्वशृङ्गारवेषाढ्यस्त्रिपुरीकृतविग्रहः ॥

सुशीलः [2]सत्यसन्धश्च करुणादिगुणान्वितः ।
विनीतः कुलपालश्च शाक्तशाम्भवतत्त्ववित् ॥

शक्त्या च सहितः श्रीमान् चार्व्यङ्ग्या चारुशीलया ।
रक्तगन्धविलिप्ताङ्ग्या [3]विज्ञानानन्दमात्रया ॥

क्षौमवस्त्रपरीताङ्ग्या मुदितो देशिकाग्रणीः ।
[[4]ब्रह्मानन्देन संयुक्तः] मदिरानन्दनन्दितः ॥

दि(दी)क्षये[द्] देशिकः शिष्यं तदानन्दोपलक्षणम् ।
कुम्भस्य पुरतो भूयो योनिवृत्तं[5] सुमण्डलम् ॥

---

मूलदेवीं मध्यकुम्भे आवाह्यानुविधानतः ।
चक्रं [सं]पूजयित्वा तु बाह्ये कुम्भे यथा गुरुः ॥१५ ॥

वशिन्यादिमथाभ्यर्च्याष्टकं तुष्टिदं गुरुः ।
गन्धपुष्पादिभिस्तत्र यथान्यायं यथोचितैः ॥१६ ॥

षोडशैरुपचारैस्तु बहिर्नैवेद्यकादिभिः ।
परितोष्य यथाशक्ति भक्त्या भक्तेष्टदं ततः ॥१७ ॥

तत्पुरो मण्डलं भूयो गुरुणा चतुरस्रकम् ।
तत्र शङ्खं प्रतिष्ठाप्य सुगन्धिजलपूरितम् ॥१८ ॥

ऋत्वासनेऽर्चिते तत्र देवीं सम्भाव्य बुद्धिमान् ।
कोणदेवीवृतां देवीं सम्पूज्यानुविधानतः ॥१९ ॥

---

१. मदिरानन्द–घ. ङ. । २. त्यसम्पन्नः करु–घ. ङ. । ३. मदिरानन्द–घ. ङ. । ४. मदिरानन्दिनेच्छन्ति वेति–क. ख., 'ब्रह्म .... संयुक्तः' नास्ति–घ. ङ. । ५. वृत्तास्रमण्डलम्–घ. ङ. ।

विधाय विधिवद् विद्वानभ्यर्च्य रसमासनम् ।
तत्र शङ्खं प्रतिष्ठाप्य दिव्यरत्न[१]गुणान्वितम् ॥
कोणदेवीयुतां देवीमर्चयेत् शङ्खवारिणा ।
अष्टोत्तरशतं जप्त्वा [२]स्पृशन् शङ्ख[३]मम(न)न्यधीः[४] ॥
नितान्तदक्षिणान् दक्षान् सात्त्विकान् सुदृढव्रतान् ।
ईर्ष्याकालुष्यरहितान् [५]मायाहम्भाववर्जितान् ॥
गुरुसुश्रूषणरतान् वेदवेदाङ्गपारगान् ।
सुरूपान् बहुवित्तांश्च श्रद्धाभक्तिसमन्वितान् ॥
स्थापयित्वा पुरस्तस्य नवारचतुरस्त्रके ।
[६]वर्गबीजसमेताभिर्वशिन्यादिभिरर्चिते ॥

---

अष्टोत्तरशतं तत्र मूलमन्त्रं स्पृशन् जपेत् ।
नीराजनविधिं कुर्यात् पश्चाद् देशिकपुङ्गवः ॥२० ॥
शिष्यानाहा(नावाह)येद् योग्यान् सुगुप्तानप्रमादिनः ।
नितान्तदक्षिणान् दक्षान् लक्षणैरन्वितान् पुनः ॥२१ ॥
प्रवेश्य प्रतिसीमान्तवस्त्रच्छन्नमुखान् गुरुः ।
प्रोक्षयेन्मूलमन्त्रेण त्रिवारं शङ्खवारिणा ॥२२ ॥
नवारचतुरस्राख्ये मण्डले पूजिते सुधीः ।
स्थापयित्वा ततः शिष्यान् स्वेच्छया स्वात्मनः पुरम्(रः) ॥२३ ॥

---

१. गणा–घ. । २. 'स्पृष्ट्वा'–घ.ङ. । ३. मणिं निधिः–घ.ङ. । ४. इतः परम्– 'तत्र शिष्यं समाहूय कुसुमैः पूरिताञ्जलिम् । प्रणामं कारयित्वाग्रे प्रोक्षयेच्छङ्खवारिणा ॥ गुणवादिनो गुणोपेतान् सुगुप्तानप्रमादिनः' इत्यधिकः पाठः–घ.ङ. । ५. मायादम्भविवर्जितान्–घ.ङ. । ६. गर्भबीज–घ.ङ. ।

मण्डले परमेशानीम[१][ा]बाह्याभ्यर्च्य देशिकः ।
[२]मुखे संप्रोक्षणं कृत्वा विसृष्ट्याच्छादकं पटम् ॥
अणुशक्तिमयीं वापि शाम्भवीं [३]वापि योजयेत् ।
दृष्टिं [४]शिष्यशरीरे[५] तु पारम्पर्यक्र[६]मागताम् ॥
द्वात्रिंशसमये [७]दीप्ते कालाग्नौ [८]भ्रामणात्मके ।
ब्रह्माण्डं [९]दह्यमानं [१०]तु सञ्चिन्त्यादौ म[११]हामनाः ॥
ततः संवर्तवह्निं तु तन्मध्ये [१२]न्यस्य मूलके ।
षोडशाक्षं महाज्वालं लेलिहानं रसातलम् ॥

---

मुखे बिन्दुत्रयं दत्त्वा विसृज्याच्छादकं पटम् ।
अणुं शक्तिमयीं वापि शाम्भवीं वा प्रयोजयेत् ॥२४॥
दृष्टिं शिष्यशरीरे तु आज्ञासंक्रमणाय च ।
द्वात्रिंशास्त्रमये दीप्ते कालाग्नौ भ्रममाणके ॥२५॥
कोटिकल्पानलज्वालाच्छटाभिः कवलीकृतम् ।
ब्रह्माण्डं दह्यमानं तु सर्वतः संवृतं बुधः ॥२६॥
सञ्चिन्त्याभ्यन्तरे तत्र षोडशास्त्रं महाप्रभम् ।
कायमूलं तु निर्विद्य सङ्गतं कालवह्निना ॥२७॥
रसातलादिकं कृत्वा दग्ध्वा पातालसप्तकम् ।
प्रविष्टं वाडवं वह्निं षट्कोणाकारमद्भुतम् ॥२८॥
त्रैलोक्यमानन‌ह्यं(क्यं दह्यमानं च) ज्वालाभिरतिभीषणैः ।
कालसंवर्तवडवावह्नित्रयसमुद्भवैः ॥२९॥

---

१. नीं समावाह्य च देशिकः –घ. ङ.। २. 'मुखे .... पटम्' नास्ति–घ. ङ.। ३. वा प्रयोजयेत्–घ. ङ.। ४. शिशुशरी–घ. ङ.। ५. रेषु पार–क.। ६. मागमात्–क.। ७. दीक्षे काला–घ. ङ.। ८. भ्राममाणके–क.। ९. वह्य–क.। १०. 'च'–घ. ङ.। ११. हात्म–घ. ङ.। १२. 'अस्य'–क.।

क्रमेण [1]दह्यमानं तु तलान्तकं रसात्मकम् ।
ततो [2]वाडववह्निं तु षडश्रं विश्वपञ्चकम् ॥

सञ्चिन्त्य जिह्वया तस्य दह्यमानं भुवादिकम् ।
[3]अन्योन्यश्लिष्टशिखया ग्रस्तं शिष्यस्य विग्रहम् ॥

[4]व(ज्व)लन्तं विह्वलीभूतं ध्यात्वा तन्मूलमण्डले ।
कल्पाग्निं प्रस्फुरन्तं तु तडिद्वलयसन्निभम् ॥

[5]त्र्यश्राकारं ज्वलन्तं च ध्यात्वा तन्मध्यतः शिवम् ।
वाक्कामविषरूपां तु रुद्रशक्तिं तडित्प्रभाम् ॥

प्रबोध्य हंसमुच्चार्य संहरेत् तन्मलत्रयम् ।
[6]मायीयं वाग्भवेनैव[7] कामराजेन कार्मजम् ॥

[8]शाक्ते[नाणव]कं गृह्य [9]रौद्रीकुञ्चिकया पुनः ।
[10]उत्पाट्य तरसा विद्वान् कपाटाग्रतलो विशेत् ॥

---

भुवनानि सप्तपर्यन्तं दग्ध्वा भुवनसंचयम् ।
ज्वालाभिस्तीव्ररूपाभिर्ग्रस्यमानं विचिन्तयेत् ॥३० ॥

शिष्यदेहं यथान्यायं परिपूर्य समन्ततः ।
कुलालचक्रमध्यस्थं वस्तुवच्चञ्चलात्मकम् ॥३१ ॥

वेष्टनं परितः कृत्वा मूलाधारासनं गुदम् ।
निर्भिद्य शिखया साक्षान्मूलवह्निं गुणात्मकम् ॥३२ ॥

---

१. वह्य–क. । २. वार्धिकवह्निं–घ. ङ. । ३. अन्यान्यसंख्या–घ. । ४. चलन्तं–घ. ङ. । ५. पङ्क्तिरेषा न दृश्यते–घ. । ६. 'मायामयं'–घ. ङ. । ७. वेन काम–घ. ङ. । ८. शाक्ते मान-वजं दह्याद्–घ. ङ. । ९. 'रौद्रीं' इत्यस्य स्थाने 'रौद्रां'–घ. ङ. । १०. 'उत्पाट्य .... चालयेत्' इत्यस्य स्थाने 'उद्याद्यरोधका भूयः शक्तिं संचालयन् क्रमान् । नाडिमध्यस्थितं बीजं नादेन प्रविचालयेत् ॥'–घ. ङ. ।

बीजाष्टकजपं तत्र दग्ध्वा पुर्यष्टकं क्रमम् ।
महत्क्षेत्रज्ञसंयुक्तं शक्तिं शक्त्यन्तसंस्थिताम् ॥

चालयेन्नादमध्यस्थं जीवं नादेन चालयेत् ।
जीवेन [1]चालयेत् प्राणं नाडीं प्राणेन चालयेत् ॥

नाडीभिश्चालयेत् पिण्डं पिण्डे शक्तिं प्रचालयेत् ।
तया भ्रमन्त्या वेगेन [2]शिष्यः पतति [3]तत्क्षणात् ॥

[4]अथवा रोदनं कुर्यात् सहेद्वा जल्पति स्वयम् ।
गायेद्वा [5]नृत्यते वापि [6]तत्पतेदथवा लुठेत् ॥

आज्ञासंक्र[7]मणस्यैतच्चिह्नं विन्देत देशिकः ।
सृष्टिक्रमं भजेद् भूयः कारुण्यात् करुणापरः ॥

---

प्रविश्यैकीकृतं सर्वं शतकोट्यादिकल्पितम् ।
संचिन्त्याचार्यराजेन्द्रो [रौ]द्रशक्तिं तडित्प्रभाम् ॥३३ ॥

प्रबोध्याधारषट्कं च षडध्वात्मकमुग्रधीः ।
संहृत्य तु क्रमेणैव ज्वा[ला]लोलैश्चलात्मकैः ॥३४ ॥

निर्भिद्य बिन्दुमध्येन सहस्राराम्बुजं पुनः ।
भित्वा दग्ध्वाथ भूयोऽपि महाशून्यपथं नयेत् ॥३५ ॥

तत्र भूयः सदाचार्यो मुण्डव्योम्नि निरामयैः ।
चिदानन्दात्मकं नीत्वा शिष्यात्मानं विचक्षणः ॥३६ ॥

अध्वोत्तीर्णे शिवे स्थाप्य शिष्यपुर्यष्टकं शनैः ।
बीजाष्टकं जपन् दग्ध्वा मायाकार्माणवं मलम् ॥३७ ॥

मायेयं वाग्भवेनैव कामराजेन कर्मजम् ।
शक्तिबीजं स्मरन् भूय आणवं सन्दहेत् मलम् ॥३८ ॥

---

१. चलितं–घ.ङ.। २.शिशुः–घ.ङ.। ३.कृत् क्षणात्–घ.ङ.। ४. वा–क.।
५.दृश्यते–घ.ङ.। ६.उत्प–घ.ङ.। ७.मणं सेकं चिह्नं–घ.ङ.।

[१]रमते विमले व्योम्नि सहस्रा[२]राम्बुजोदरे ।
[३]महाचक्रमनुस्मृत्य शुक्लं शुक्रामृतप्लुतम् ॥

समस्तवर्ण[४]रक्तं तु ध्यात्वा तन्मध्यतः[५] सुधीः ।
[६]तन्मध्ये संस्थिता देव्यस्तावत्यः क्षीरसन्निभाः ॥

[७]श्वेतपीयूषधाराभिः [८]सिञ्चन्त्यः शिष्यविग्रहम् ।
ध्यात्वा परामृतापू[९]र्णं तैराप्लाव्य कालमूलतः ॥

[१०]बीजाष्टकं विलोमेन जपन् पुर्यष्टकादिकम् ।
निर्माय शिष्यचैत[११]न्यं स्वस्थाने स्थापयेद् बुधः ॥

---

शक्त्या चलन्त्या नादस्य चलनाच्चालयेद् बुधः ।
जीवं तु चालयेत् सम्यच्चलता तेन मारुतम् ॥३९ ॥

चलता वायुना सम्यक् चलन्त्यो नाडयो मुहुः ।
नाडीभिश्चाल्यमानाभिः पिण्डस्य चलनं बुधः ॥४० ॥

भावयित्वाथ शक्तेस्तु चलनात् सर्वचालनम् ।
अथ तद्भावनां दृष्ट्वा पातयेत् शिष्यदेहकम् ॥४१ ॥

एवमाणववेधेन वेधयित्वा शिशुं गुरुः ।
सृष्टिक्रमं भजेद् भूयः शिष्यस्य भक्तिशालिनः ॥४२ ॥

द्वादशान्ते परे व्योम्नि निरालम्बपदाश्रये ।
सितारं केसराढ्यं च सहस्राराम्बुजं गुरुः ॥४३ ॥

अधोमुखं सुधापूरैः पूरयन्तं जगत्त्रयम् ।
कोटिचन्द्रप्रतीकाशं चिदिन्दोर्मण्डलाङ्कितः ॥४४ ॥

---

१. भव्यन्ते–क., रमन्ते–घ. । २. स्राम्बुं–क. । ३. 'महा .... प्लुतम्' नास्ति–घ.ङ. । ४. 'चक्रं'–घङ. । ५. इतः परम् 'सुचानोः'–क. । ६. 'तन्मध्ये .... सन्निभाः' नास्ति–घ.ङ. । ७. श्वेतकुम्भधूलिपूर्णं सञ्चि–क. । ८. पूर्णं शिष्यस्य विग्रहम्–घ.ङ. । ९. पूर्योराप्लाव्य–घ.ङ. । १०. 'बीजा .... कादिकम्' नास्ति–घ.ङ. । ११. देहस्य–घ.ङ. ।

[1]बीजाष्टकं यथा—

शिवचन्द्रमहायोनिबिन्दुभिः प्रथमं पुनः ।
[2]शिववज्रश्चाद्य[3]शक्र[4]रेफ-ऐकारबिन्दुभिः ॥
द्वितीयं च तृतीयं तु[5] [6]शिवाद्योकारबिन्दुभिः ।
चन्द्रेशरेफ-ऐ[7]कारबिन्दुभिश्च [च]तुर्थकम् ॥
[8]चन्द्रस्य शिवसाद्यं स्याद्रेफएकारबिन्दुभिः ॥
पञ्चमं तु[9] चन्द्रशिव[10]रेफहुंकारबिन्दुभिः ॥
षष्ठं चन्द्र[11]शिवौकारकान्तफान्ताग्निबिन्दुभिः ।
[12]सप्तमं चाष्टमं चन्द्रशिव-ओंकारबिन्दुभिः ॥

---

तन्मध्ये भावयेच्चक्रं मातृकामयमद्भुतम् ।
तत्राक्षरपदान्तस्थशक्तिभिः कुम्भपूरितैः ॥४५ ॥
सुधाधारैः प्रशान्ताग्निं क्षीरोदमिव सर्वतः ।
पूरितः भुवनाभोगं द्विसप्तभुवनात्मकम् ॥४६ ॥
षडध्वं च षडाधारं संसृज्य मतिमान् गुरुः ।
बीजाष्टकं जपेद् भूयो विलोमेनोपदेशतः ॥४७ ॥
पुर्य[ष्ट]कमिदं सृष्ट्वा शिवादानीय जीवकम् ।
हृदि नाभौ तथा मूले संस्थाप्य सुधिया प्लुतम् ॥४८ ॥
चिरं सिञ्चेत् सुधापूरैः शिष्यात्मानं सुखाय च ।
ततः समुत्थितं शिष्यं प्रणामं कारयेद् गुरुः ॥४९ ॥

---

१. 'बीजा .... यथा' नास्ति–घ.ङ.। २. शिवचन्द्राक्षमं–घ.। ३. 'चक्रं'–घ.ङ.। ४. फइकार–घ.ङ.। ५. 'तु' इत्यस्य स्थाने 'च'–घ.ङ.। ६. शिवेद्वैकार–घ.ङ.। ७. फएकार–घ.ङ.। ८. 'चन्द्रस्य .... बिन्दुभिः' इत्यस्य स्थाने 'चन्द्रे शिवसंख्याद्यभ्यो रेफईकारबिन्दुभिः'–क.। ९. 'तु' नास्ति–घ.ङ.। १०. शिवकौरिफएकार–घ.ङ.। ११. शिवैकारकण्ठफालाग्नि– घ.ङ.। १२. 'सप्तमं .... बिन्दुभिः' नास्ति–घ.ङ.।

आणवीया समाख्याता दीक्षा शाक्ती निगद्यते ।
आत्मशक्तिं च[1] मूलस्थां दिव्यपैतृकरोधनात्[2] ॥
उत्थाप्य शनकैर्विद्वान् वामनासाविनिर्गताम् ।
शिष्यदक्षिणया[3] नासा प्रवेश्याधारमण्डलम् ॥
तत्रस्थां क्षोभयेच्छक्तिमानाभि[4] शिष्यविग्रहे ।
तत्रस्थं त्रसरेण्वाभं मलिनं शिष्यजीवकम् ॥
आत्मशक्त्या स्वयं [5]दग्ध्वा घट्टयित्वा निरुध्य च ।
ततस्तत्त्वे नियुज्यैनं शिवतत्त्वं समुन्नयेत् ॥
पुनः स्वस्थानमानीय प्लावयेत् खेचराम्भसा ।
दीक्षा शाक्ती समाख्याता शाम्भवी[6] तु प्रचक्षते ॥

---

मुक्तोऽसीति समाभाष्य आचार्यश्च मुहुर्मुहुः ।
मूलन्यस्तकराभ्यां तु स्पृशेत् सर्वाङ्गकं गुरुः ॥५० ॥
मूलेन हस्तकमलैः शङ्खं वा पुष्पमेव वा ।
मूर्धान्तं सेचयेद् विद्वान् पूर्वमन्तेऽपि वा गुरुः ॥५१ ॥
शिष्यमूर्ध्नि न्यसेत् पादौ सर्वस्याप्यायनौ शुभौ ।
इत्याणवेन वेधेन वेधयेच्छिष्यमात्मनः ॥५२ ॥
अभिषिञ्चेद् यथान्यायं प्राङ्गणे मण्डले शुभे ।
चतुष्कमौक्तिकादीनां मध्ये स्वस्तिकलाञ्छि(ञ्छि)ते ॥५३ ॥
ऋत्वासनेऽर्चिते तत्र स्थापयित्वा शुभं गुरुः ।
मस्ते तस्य यथान्यायं क्रमं सम्पूज्य यत्नतः ॥५४ ॥
गुरुक्रमेण सहितं सर्वन्यायं विधाय च ।
सान्निध्यमस्मिन् भेदेऽपि मयि वाऽस्मिन्नपि त्वया ॥५५ ॥

---

१. समूल-घ. ङ. । २. रोचनात्-क. । ३. णनासाग्रा प्रवे-घ. ङ. । ४. ये शक्तिमालाभिः शिष्य-क. । ५. विध्वा-घ. ङ. । ६. वीति प्रभाष्यते-घ. ङ. ।

अत्र मण्डलकुण्डादिक्रियाकाण्डो न विद्यते ।
गुरोराज्ञाप्रवेशेन[1] केवलं निष्प्रपञ्चकम् ॥
विषमूर्च्छागतप्रायमानन्दे लीयते शिशुः ।
इयं सा शाम्भवी प्रोक्ता दीक्षा सर्वोत्तमोत्तमा ॥
इति वेधविधिं कृत्वा मुक्तोऽसीति वदेद् गुरुः ।
आनीय [2]प्राङ्गणे शिष्यं पट्टे लक्षणलक्षिते ॥
[3]मौक्तिकैरक्षतैर्वापि स्वस्तिकं तत्र [4]कल्पयेत् ।
तत्र संवेशयित्वा तु शिष्यं ऋत्वासनार्चिते ॥
कुम्भान् शक्त्या सहोत्थाप्य स्नापयेन्मूलविद्यया ।
पुनः शिष्यं समाहूय पूजामण्डलसन्निधौ ॥

---

इति सम्प्रार्थ्य देवेशीं प्रणिपत्य महामनाः ।
कुम्भान् शक्त्या सहोत्थाप्य स्नापयेन्मूलविद्यया ॥५६ ॥
अथ भूयः कुलाचार्यो योगिनीचक्रमर्चयेत् ।
अष्टाष्टकं वा द्वात्रिंशन्नवकं वाप्यलाभतः ॥५७ ॥
कुमारीबटुकैः सार्धं यथाहं(र्ह)प्रतिपत्तितः ।
पादप्रक्षालनाद्यैश्च दक्षिणान्तैर्यथाक्रमम् ॥५८ ॥
माल्यैर्गन्धैश्च पुष्पैश्च धूपदीपैश्च तर्पणैः ।
अन्यानपि सदाचारान् यथार्हप्रतिपत्तितः ॥५९ ॥
प्रसाद्य योगिनीचक्रं समयीति वदेद् गुरुः ।
साधकानां ततो दत्त्वा पुष्पशङ्खाभिषेचनान् ॥६० ॥
सक्रमं मूलमन्त्रं तु पारम्पर्यक्रमान्वितम् ।
शिष्यस्य वामकर्णे तु उपदिश्य क्रमाद् गुरुः ॥६१ ॥

---

१. प्रभावेण–घ. ङ. । २. प्राञ्जलि–घ. ङ. । ३. प्रमुक्तैरक्षतै–घ. ङ. । ४. कारयेत्–घ. ङ. ।

[1]तत्क्षणे प्रोच्चरेद् विद्यां त्रिवारं सक्रमं गुरुः ।
तस्य [2]मस्तकमध्ये तु सम्पूज्य श्रीक्रमं गुरुः ॥
पारम्पर्यक्रमं दत्त्वा पुत्रके[3]त्यभिधाय च ।
आचार्यत्वं ददे[त्] तस्मै नाम [4]चास्मै समर्पयेत् ॥
मध्ये प्राङ्नापूर्वाणं(र्णं) मनोहरपदाङ्कितम् ।
त(कृ)त्वा श्रीपूर्विकां संज्ञामन्ते[5] [6]चानन्दमण्डिताम्[7] ॥
पादुकापीठच्छत्रादि[8]योगसाम्राज्यमेव च ।
दत्त्वा समापयेद् दीक्षामि[9]ष्ट्वा श्रीयोगिनी[10]गणम् ॥
[[11]अथ तत्र सदाचार्यं शिष्यः सम्पूजयेन्मुदा ।
सौवर्णभूषणैर्दिव्यैः सरत्नैरङ्गुलीयकैः ॥

---

ततः पात्रवरं [दत्त्वा] परिपूर्य मुखं पुनः ।
शिष्यमन्तेऽथ वक्त्रे वा अञ्जल्या वाथ सेचयेत् ॥६२ ॥
मुखेनाञ्जलिना वापि . . . शिष्योऽपि तां [पिबेत्] ।
पुत्रकेत्यभिधायैनमाचार्य(र्या)ज्ञां वदेद् गुरुम्(रुः) ॥६३ ॥
सुगन्धेन समालिप्य मालामम्लानपङ्कजाम् ।
गले शिष्यस्य दत्त्वा तु शिरोमालां ततो ददेत् ॥६४ ॥
सिंहासनं ततो दत्त्वा पादुकोष्णीषकं ततः ।
श्वेतच्छत्रं ततो दद्याद् यदन्यदुपचारकम् ॥६५ ॥
नाम तस्मै ततो दद्याद् रमणीयं मनोहरम् ।
मध्ये प्राङ्नामपूर्वार्णं मनोहरपदाङ्कितम् ॥६६ ॥

---

१. प्रोच्चरेत् करणे विद्या–घ.ङ.। २. मध्ये क्रमं भूयः सम्पू–घ.ङ.। ३. के च विधानतः–घ.ङ.। ४. चास्मिन् प्रदापयेत्–घ.ङ.। ५. ज्ञानं ते–घ.ङ.। ६. आनन्द–क.। ७. तान्–घ.ङ.। ८. दिसयोगपट्टमेव–घ.ङ.। ९. मिष्टां श्री–क.। १०. गताम्–क.। ११. कोष्ठान्तर्गतः– पाठो नास्ति–क.।

साक्षतैर्गन्धकुसुमैः सरत्नैरङ्गुलीयकै ।
उपचारैर्महार्हैश्च नीराजनसमन्वितैः ॥
सन्तोष्य दक्षिणां दद्यात् सुवर्णं दशलक्षकम् ।
क्षोणीभागात्मनो रम्यानश्वरत्नगजेन्द्रगान् ॥
कामी(मि)नीयावसारम्भजितरम्भादिविभ्रमाः ।
सर्वस्वं दक्षिणां दद्यादात्मानं सपरिच्छदः(दम्) ॥

---

श्रीपूर्वमन्तरे भूय आनन्दनाथमण्डितम् ।
मातृकाचक्रमालिख्य सम्पूज्य तु यथाविधि ॥६७ ॥
पुष्पपातेन वै तत्र नाममस्मै निवेदयेत् ।
श्रीकण्ठादिभवं नाम पुरुषाणां निवेदयेत् ॥६८ ॥
मालिर्नाजं तथा स्त्रीणां यथान्यायमतन्द्रितः ।
आर्यस्त्वमिति सम्प्रोक्त्वा परानुग्रहकारकः ॥६९ ॥
इति गुर्वाज्ञया सद्यस्तीर्णसंसारसागरः ।
तद्गुरुं शक्तिसहितं स्वासने तु शुभे पुनः ॥७० ॥
उपवेश्य यथान्यायं यथार्हप्रतिपत्तिभिः ।
सम्पूज्य तद्गुरुं शिष्यः पुरतो मण्डलं पुनः ॥७१ ॥
नवारचतुरस्राख्यं कृत्वाभ्यर्च्य यथाविधि ।
आरात्रिकं ततः कृत्वा वस्त्रस्वर्णादिभूषितम् ॥७२ ॥
नमस्कृत्य यथान्यायं दक्षिणां विनिवेदयेत् ।
वित्तशाठ्यं विना सर्वं गुरवे विनिवेदयेत् ॥७३ ॥
शरीरमर्थं प्राणं च गुरवे विनिवेदितुः ।
तत्प्रसादपरिप्राप्त्यै मुहुर्युञ्जीत नान्यथा ॥७४ ॥

ह्स्रैं ह्स्क्लीं ह्सौः ह्स्रैं ह्स्क्लीं ह्स्रूं ह्स्व्लूं ह्स्रौः। वेधकाले त्वेवं सृष्टिकाले विलोमेन षडाधारललाटब्रह्मरन्ध्रेषु ।

इत्येव(वं) दीक्षासमयान् गुणान् प्राप्याशु मोदते ।
इह लोके परत्रापि सर्वत्र शुभमेधते ॥]

अथ दीक्षादिमहापर्वसु बाह्यचतुरस्राभ्यन्तराले[1] [2]प्रवेशगत्या पश्चिमादि-वायव्यादिदिग्विदिक्षु [3]ब्राह्म्या[द्य]ष्टकं पूजयेत् । [[4]प्रत्येकमष्टकव्याप्त्वा(प्त्या)-ऽष्टार्ष्टा(ष्ट)कयोगिनीगणचक्रं पूजयेद्यथा । आद्यै(दौ) तासां बीजोद्धारः प्रदर्श्यते, यथा—

क्षकारादिल(ळ)कारान्तमक्षराष्टकमुच्यते ।
एकैकं भेदयेद् वाद्यैः स्वरैरष्टभिरष्टभिः ॥

अष्टमो ह्यलिसे शाक्तः सप्तशेषाः सबिन्दुकाः ।
कथितानि चतुःषष्टिबीजानि **क्रमसागरे** ॥

यथाक्रमेण योज्यानि शक्तीनां नामपूर्वकम् ।
अथ शक्त्या यथान्यायं कथितां तु **कुलोदये** ॥

---

अथ शाक्तेन वेधेन वेधयेद्वा शिशुं गुरुः ।
[प्रकुर्या]दात्मनः शक्तिं विद्युद्वलयभास्वराम् ॥७५ ॥
रुद्रशक्तिस्वरूपां तु गच्छन्तीं मध्यवर्त्मना ।
भिन्दन्तीं वह्निसङ्घातमाभ्रूविम(व)रक्रमात् ॥७६ ॥
निर्गत्य वामया नाड्या शिष्यदक्षिणया पुनः ।
हित्वा बहिर्बिलं तस्य सूक्ष्मसूचिमुखश्रिया ॥७७ ॥
कर्णादिनाभिपर्यन्तं प्रविश्या(श्य) मध्यवर्त्मना ।
नाभिस्थं त्रसरेण्वाभमसृजन् शिष्यजीवकम् ॥७८ ॥
धिया तु शक्तिबाणेन घट्टयेत् तं यथास्थितम् ।
निरुध्य तस्य स्रोतांसि दाहयेत् तन्मलत्रयम् ॥७९ ॥

---

१.न्तरे प्रवेश–क.। २.'प्रवेशगत्या' नास्ति–घ.ङ.। ३.'बाह्या ....जयेत्' इत्यस्य स्थाने 'ब्राह्म्याष्टकशक्तिं परितः'–घ.ङ.। ४. 'प्रत्येक .... महापर्वदिनेषु च' (पृ. १५४-१५९) पाठो नास्ति–क.।

[1]अक्षोभ्या ऋक्षकर्णी च राक्षसी क्षपणी क्षया ।
पिङ्गाक्षी चाक्षया क्षपा त्वाद्यमष्टमां(कमी)रितम् ॥

---

तच्छक्त्यैक्यरसापन्नशक्त्या तत्त्वक्रमेण तु ।
उपर्युपरि संयोज्य शिष्यात्मानं विचक्षणः ॥८० ॥

---

**चतुष्षष्टियोगिनीनामान्यग्निपुराणे (१४६.१२-२१), प्रतिष्ठालक्षणसारसमुच्चये (६.३२७-३३५) च दृश्यन्ते। तान्यत्र प्रस्तूयन्ते—**

*अक्षोद्या(भ्या) ह्य(ऋ)क्षकर्णी च राक्षसी क्षपणाऽक्षया ।*
*पिङ्गाक्षी चाक्षया क्षेमा ब्रह्माण्यष्टकसंस्थिताः ॥*
*इला लीलावती नीला लङ्का लङ्केश्वरी तथा ।*
*लालसा विमला माला माहेश्वर्यष्टके स्थिताः ॥*
*हुताशना विशालाक्षी हूङ्कारी वडवामुखी ।*
*हाहारवा तथा क्रूरा क्रोधा बाला खरानना ॥*
*कौमार्या देहसम्भूताः पूजिताः सर्वसिद्धिदाः ।*
*सर्वज्ञा तरला तारा ऋग्वेदा च हयानना ॥*
*सारा सारस्वयंग्राहा शाश्वती वैष्णवीकुले ।*
*तालुजिह्वा च रक्ताक्षी विद्युज्जिह्वा करङ्किणी ॥*
*मेघनादा प्रचण्डोग्रा कालकर्णी कलिप्रिया !*
*वाराहीकुलसम्भूताः पूजनीया जयार्थिना ॥*
*चम्पा चम्पावती चैव प्रचम्पा ज्वलितानना ।*
*पिशाची पिचुवक्त्रा च लोलुपा ऐन्द्रीसम्भवाः ॥*
*पावनी याचनी चैव वामनी दमनी तथा ।*
*बिन्दुवेला बृहत्कुक्षी विद्युता विश्वरूपिणी ॥*
*चामुण्डाकुलसम्भूता मण्डले पूजिता जये ।*
*यमजिह्वा जयन्ती च दुर्जया च यमान्तिका ॥*

इला लीला तथा लया लोला लङ्का तथैव च।
लङ्केश्वरी लालसा च विमला चाष्टमी मता॥
द्वितीयमष्टकं प्रोक्तं तृतीयं कथयाम्यहम्।
हुताशनी विशालाक्षी हुङ्कारी वडवामुखी॥
महोदरा महीतुङ्गा क्रोधना लेलिहा तथा।
तृतीयमष्टकं प्रोक्तं चतुर्थं कथ्यतेऽधुना॥
सर्वज्ञा तरला तारा ऋग्वेदा च हयानना।
संहारिणी[च] साराख्या तथा कलाधराष्टमी॥

---

अथोत्तीर्णपदं नीत्वा निरालम्बसुधात्मके।
परशक्त्यां प्रवेश्यैनं चिदानन्दसुधामयम्॥८१॥
भावयेद् भावनायुक्तं सदसद्भाववर्जितम्।
अखण्डसुधया पूर्णं भावयन् पातयेत् शिशुम्॥८२॥
अथ शाक्तप्रकारेण वेधोऽयं संप्रकीर्तितः।
पुनः सृष्टिक्रमेणैनं तत्त्वक्रमणयोगतः॥८३॥
शक्त्यानीय निजस्थाने तं तथा स्थापयेद् गुरुः।
सहस्रांश(स्रारा)म्बुजोद्भूतसुधया प्लावयेच्चिरम्॥८४॥

---

*विडाली रेवती चैव जया च विजया तथा।*
*महालक्ष्मीकुले जाता अष्टाष्टकमुदाहृतम्॥*

**प्रतिष्ठालक्षणसारसमुच्चये—**

*योगिन्यष्टाष्टकं वक्ष्ये ऐन्द्र्यादीशान्तचक्रवृत्।*
*स्वाङ्गवर्णधराः सर्वा यथोक्तं ब्रह्मयामले॥*

*अक्षोभ्या ऋक्षकर्णी च राक्षसी क्षणपा क्षया।*
*पिङ्गाक्षी चाक्षया क्षपा इला लीला लया तथा॥*

चतुर्थमष्टकं प्रोक्तं पञ्चमं च ब्रवीम्यहम् ।

तालजङ्घा च रक्ताक्षी विद्युज्जिह्वा करङ्किणी ॥

मेघनादा प्रचण्डोग्रा कालकर्णी वरप्रदा ।

अष्टकं पञ्चमं प्रोक्तं षष्ठं तु कथयाम्यहम् ॥

चन्द्रा चन्द्रावती चैव प्रपञ्चा प्रलयान्तिका ।

पिचुवक्त्रा पिशाची च पिशिता[शी] लोलुपाष्टमी ॥

षष्ठकं त्वष्टकं प्रोक्तं सप्तमं कथयाम्यहम् ।

वमनी वामनी चैव तपनी तापनी तथा ॥

---

सर्वज्ञं परिभाव्यैनमात्मशक्तिं ततो गुरुः ।

आनीयाधारचक्रस्थं ब्रह्मरन्ध्रसुधाप्लुतम् ॥८५ ॥

कृत्वा स्थिरीभूय चिरं सिञ्चेच्छिष्यं यथा पुरा ।

अथवा शाम्भवो वेधः क्रियते केवलाज्ञया ॥८६ ॥

प्रत्यक्षे वा परोक्षे वा पादसंस्मृतियोगतः ।

रक्तपादप्रभाव्याप्तं शरीरं चिन्तयन्मुहुः ॥८७ ॥

मलत्रयं क्षणेनैव नाशयेच्छिष्यसंश्रयम् ।

पुनः शुक्लपदोत्थादि ..... ॥८८ ॥

---

*लोला लङ्काऽथ लङ्केशी लालसा विमला पुनः ।*

*हुताशा च विशालाक्षी हुङ्कारा वडवामुखी ॥*

*हाहारवा महाक्रूरा क्रोधना तु भयानना ।*

*सर्वज्ञा तरला तारा ऋग्वेदा तु हयानना ॥*

*साराख्या रससंग्राही सरवा तालजङ्घिका ।*

*रक्ताक्षी सुप्रसिद्धा तु विद्युज्जिह्वा करङ्किणी ॥*

विकृतानना बृहत्कुक्षी विकृता विश्वरूपिणी ।
सप्तमष्टम(मं त्वष्ट)कं प्रोक्तमष्टमं कथयाम्यहम् ॥

यमजिह्वा जयन्ती च दुर्जया च यमान्तिका ।
विडाली रेवती चैव प्रेतना विजया तथा ॥

अष्टमं कथितं ह्येतदष्टात्मकमिहोच्यते ।
गोपनीयं प्रयत्नेन समयस्थैः सुखाप्तये ॥

---

सुधात्मकाभिः सन्ध्यायन् प्रत्ययं प्रतिपादयेत् ।
पिण्डपातादिकेनात्र आनन्दे लीयते शिशुः ॥८९ ॥

एवं वेधविधिं कृत्वा ज्ञा . . . . ।
. . . . क्ताभिषेकाद्यं यथान्यायं समाचरेत् ॥९० ॥

इति दीक्षाप्रकारोऽत्र दर्शितोऽनुग्रहेण तु ।
स्वात्मानन्देन सच्छिष्यरक्षणाय महात्मना ॥९१ ॥

॥ इति श्रीविद्यानन्दनाथविरचितायां श्रीत्रिपुरसुन्दरीपद्धत्यां
ज्ञानदीपविमर्शिन्यां दीक्षापद्धतिरेकविंशतिः ॥
इति मध्यमपद्धतिः सम्पूर्णा ॥ शिवमस्तु ॥
[ ख. मातृका समाप्ता ]

---

*मेघनादा प्रचण्डोग्रा कालकर्णी वरप्रदा ।*
*चन्द्रा चन्द्रावली चैव प्रपञ्चा प्रलयान्तिका ॥*
*पिचुवक्त्रा पिशाची च पिशिताशा च लोलुपा ।*
*यमनी तपनी चैव वामनी विकृतानना ॥*
*वायुवेगा बृहत्कुक्षी विकृता विश्वरूपिका ।*
*यमजिह्वा जयन्ती च दुर्जया च यमान्तिका ॥*
*विडाली रेवती चैव प्रेतना विजयान्तिका ।*
*चतुष्षष्टिरियं देव्या मूर्तिभेदा निगद्यते ॥*

पूर्वोक्तबीजसंजुक्ता(युक्तं) कुलाचारक्रमेण तु ।
अभिषेकदिने सम्यग् महापर्वदिनेषु च ॥]

यथा—ह्रीं श्रीं क्षां अक्षोभ्याश्रीपादुकां पूजयामि । २ क्षीं ऋक्षकर्णीपादु. । २ क्षूं राक्षसी. । २ क्षीं (क्षीं) क्षपणी. । २ क्षीं (क्ष्लीं) छायाम्बा. । २ क्षैं पिङ्गलाक्षी. । २ क्षौं अक्षया. । ह्रीं श्रीं क्षः क्षपाम्बापादुकां पूजयामि । २ ळां इलायै(म्बा.) । २ ळीं लीला(यै ?)म्बापादुकां पूजयामि । २ ळूं लया(लावा-वृता ?)म्बापादु. । २ ल्ऋृं लोषा(ला)म्बापादु. । २ ल्लृं लङ्काम्बापादु. । २ ळैं लङ्केश्वरी-अम्बा-पादु. । २ ळौं लालसाम्बापादु. । २ ळः विमलाम्बापादु. । २ हां हुताशनाम्बापादुकां पूजयामि । २ हीं विशालाक्षी-अम्बा पादु. । २ हुं (हूं) हुङ्काराम्बापादु. । २ हृ्रृं वडवामुखी-अम्बापादु. । २ हलृं महोदरा(हाहा-रवा)म्बापादु. । २ हैं महीतुङ्गा(क्रूरा)म्बापादु. । २ हौं क्रोधनाम्बापादुकां. । २ हः लेलिहाना(भयानना)म्बा पादुकां. ।ह्रीं श्रीं सां सर्वज्ञाम्बापादुकां. । २ सीं तर-

---

**घ. ङ. पाठः**

[ऐं ह्रीं श्रीं क्षां अक्षोभ्याम्बाश्रीपादुकां पूजयामि इति क्रमेण ३ क्षीं ऋक्षकर्ण्यम्बा-श्रीपादुकां., ३ क्षूं राक्षस्यम्बाश्रीपादुकां., ३ क्षृं क्षपणाम्बाश्रीपादुकां., ३ क्षु (क्ष्लृं) क्षयाम्बा-श्रीपादुकां, ३ क्षैं पिङ्गाक्ष्यम्बाश्रीपादुकां, ३ क्षौं अक्षयाम्बाश्रीपादुकां., ३ क्षः क्षपाम्बाश्री-पादुकां पूजयामि, ३ आ क्षा यी(ई) ब्रह्माणीमङ्गलाम्बाश्रीपादुकां पूजयामि ।

३ ळां इलाम्बाश्री., २ ळीं. लीलाम्बाश्री., ३ ळूं लावाम्बाश्री., ३ ल् ऋृं लोलाम्बा श्री., २ ळलृं लङ्काम्बाश्री., ३ ळैं लङ्केश्वर्यम्बाश्री., ३ ळौं लालसाम्बाश्री., ३ ळः कलशाम्बाश्री., ३ ईं ळा यी (ईं) माहेश्वरीचर्चिकाम्बाश्रीपादुकां पूजयामि ।

३ हां हुताशन्यम्बाश्री., ३ हीं विशालाक्ष्यम्बाश्री., ३ हूं हुङ्कार्यम्बाश्री., ३ हृ्रृं वडवामुख्यम्बाश्री., ३ हलृ महोदराम्बाश्री., ३ हैं महीतुङ्ग्यम्बाश्री., ३ हौं क्रोधनाम्बाश्री., ३ हः लेलिहाम्बाश्रीपादुकां पूजयामि । ३ ऊं हा यी(ई) कोलापुरमहाक्षम्भे कौमारीयोगा-म्बाश्रीपादुकां पूजयामि ।

३ सां सर्वज्ञाम्बाश्री., ३ सीं तरलाम्बाश्री., ३ सूं ताराम्बाश्री., ३ सृं ऋग्वेदाम्बाश्री., ३ स्लृं हयाननाम्बश्री., ३ सैं संहारिण्यम्बाश्री., ३ सौं साराम्बाश्री., ३ सः कलाधराम्बाश्री-पादुकां पूजयामि । ३ ऋ सा यी (ई) वैष्णवीहरसिद्धाम्बाश्रीपादुकां पूजयामि ।

लाम्बापादुकां पूजयामि। २ सूं ताराम्बापादुकां पूजयामि। २ सृं ऋग्वे-दाम्बापादुकां। २ स्लृं हयाननाम्बापादुकां। २ सैं संहार्यम्बा-पादु.। २ सौं सर्व(सारा)म्बापादुकां। २ सः कलाधरा(सखा)म्बापादुकां पूजयामि। २ षां तालजङ्घाम्बापादुकां। २ षीं रक्ताक्षीअम्बापादुकां। २ षूं विद्युज्जिह्वाम्बापादुकां पूजयामि। २ षृं करङ्किणी-अम्बा.। २ षॢं मेघनादाम्बापादुकां. षैं प्रचण्डो-ग्राम्बापादु.। २ षौं ता(का)लकर्णो-अम्बापादुकां पूजयामि। २षः वर(द ?)-प्रदाम्बापादुकां। ह्रीं श्रीं शां चन्द्रा(शचि ? शि)पादुकां पूजयामि। २ शीं चन्द्रा-वती (चम्पावती)-अम्बापादुकां पूजयामि। २ शूं प्रपञ्चाम्बापादुकां पूजयामि। २ शृं प्रलयान्तकाम्बापादु। २ शॢं पिचुवक्त्राम्बापादुकां। २ शैं पिशाची-अम्बा- पादुकां पूजयामि। २ शौं पिशिताङ्गी (तासना)म्बापादुकां। २ शः लोलुपाम्बापादुकां पूजयामि। ह्रीं श्रीं वां पातनी-अम्बापादु.। २ वीं वमनी-अम्बापादुकां। २ वूं तपनी-अम्बापादु.। २ वृं वामनी-अम्बापादु.। २ व्लृं विकृतास(न)नाम्बापादु.। २ वैं बृहत्कुक्षी-अम्बापादुकां पूजयामि। २ वौं विकृता(अमिता)म्बापादुकां पूजयामि। २ वः विश्वरूपिणी-अम्बापादु.। ह्रीं श्रीं लां यमजिह्वाम्बापादुकां पूजयामि। २ लीं जयन्ती-अम्बापादुकां पूजयामि।

---

३ षां तालजङ्घाम्बाश्री., ३ षीं रक्ताम्बाश्री., ३ षूं विद्युज्जिह्वा[म्बा]श्री., ३ षृं करङ्किण्यम्बाश्री., ३ षॢं मेघपा(ना)दाम्बाश्री., ३ षैं प्रचण्डाम्बाश्री., ३ षौं कालकर्ण्यम्बाश्री., ३ षः वरप्रदाम्बाश्रीपादुकां पूजयामि। ३ लृ षा यी(ई) वाराहीभगाम्बाश्रीपादुकां पूजयामि।

३ शां चन्द्राम्बाश्री., ३ शीं चन्द्रावत्यम्बाश्री., ३ शूं प्रपञ्चाम्बाश्री., ३ शृं प्र[ल]यान्ति-काम्बाश्री., ३ शॢं पिचुवक्त्राम्बाश्री., ३ शैं पिशाच्यम्बाश्री., ३ शौं पिशिताम्बाश्री., ३ शः लोलुपाम्बाश्रीपादुकां पूजयामि। ३ ऐ शा यी(ई) इन्द्राणीकिलकिलाम्बाश्रीपादुकां पूजयामि।

३ वां वमन्यम्बाश्री., ३ वीं वामन्यम्बाश्री., ३ वूं तपन्यम्बाश्री., ३ वृं तापन्यम्बाश्री., ३ व्लृं विकृताननाम्बाश्री., ३ वैं बृहत्कुक्ष्यम्बाश्री., ३ वौं विकृताम्बाश्री., ३ वः विश्वरूपिण्यम्बाश्रीपादुकां पूजयामि। ३ औ वा यी(ई) चामुण्डाम्बाकालरात्रीश्रीपादुकां पूजयामि।

२ लूं दुर्जयाम्बापादुकां.। २ लॄं यमातृ(न्ति)का-अम्बापादु.। ह्रीं श्रीं लां यमजिह्वाम्बापादुकां पूजयामि। २लीं जयन्ती-अम्बापादुकां पूजयामि। २ ल्लृं विडाली-अम्बापादुकां.। २ लैं रेवत्यम्बापादुकां पूजयामि। २ लौं प्रेतनायकाम्बापादुकां.। २ लः विजयापादुकां पूजयामि। ह्रीं श्रीं आं क्षां ब्रह्माणीमङ्गलाम्बापादुकां पूजयामि। २ईं ळां माहेश्वरी- चर्चिकाम्बापादुकां पूजयामि। २ ऊं हां कौमारीयोगेशाम्बापादुकां.। २ ॠं सां वैष्णवीहरसिद्धाम्बापादुकां पूजयामि। २ लॄं षां वाराहीभट्टाम्बिकां पूजयामि। २ ऐं शां इन्द्राणीकिलिकिलाम्बापादुकां पूजयामि। २ औं वां चामुण्डाकालरात्री-अम्बापादुकां पूजयामि। २ अः लां महालक्ष्मीभीषणाम्बापादुकां पूजयामि। इति क्षेत्राष्टकं मूलाष्टकं च चतुष्षष्टा(ष्ट्य)भ्यन्तरे पूज्यम्। तदुक्तं **सङ्केतपद्धत्याम्**—

त्रैलोक्यमोहने चक्रे योगिन्यः प्रकटाः [१]स्थिताः।
तासां नामप्रभेदस्तु गदितो **रुद्रयामले**॥
प्रत्येकमष्टकव्याप्त्या चतुष्षष्ट्याख्यसंख्यया।
पूज्याभिषेकसमये महापर्वदिनेषु च।
अथवा नित्यमपि ताः पूज्याः [सर्वोपचारकैः][२]॥

---

३ लां यमजिह्वाम्बाश्री., ३ लीं जयन्त्यम्बाश्री., ३ लूं दुर्जयाम्बाश्री., ३ लॄं यमान्तिकाम्बाश्री., ३ ल्लॄं विडाल्यम्बाश्री., ३ लैं रेवत्यम्बाश्री., ३ लौं प्रेतनाम्बाश्री., ३ लः विजयाम्बाश्रीपादुकां पूजयामि। ३ अ ला यी(ई) महालक्ष्मीभीषणाम्बाश्रीपादुकां पूजयामि] ।[1]

---

१. स्मृता–घ. ङ.। २. इतः परम् 'इत्यस्मद्गुरुभिरभिहितम्। इत्थं चक्रमध्ये एताः पूज्याः। बहिरपि विभवा[नु]गुणमष्टाष्टकयोगिनीरामन्त्र्य सर्वोपचारैरर्चयेत्। इति दीक्षापद्धतिस्त्रयोविंशतिः'–घ. ङ.।

---

*1. अत्रत्यानि बीजाक्षराणि त्रिपुराभारतीस्तवटीकया (पृ. ३३) तुलनीयानि।*

## [गुरुपारम्पर्यम्]

[१]अथास्मद्गुरुभिरभिहितं [1]पारम्पर्यमभिधीयते। यथा [२]तदिदानीं चतुष्पीठभेदेन लिख्यते। [३]आदौ प्रकाशविमर्शसारनिर्विशेषबिन्दुलक्षणः परमानन्दानुभवरूपो गुरुः। स पुनर्निर्विशेषबिन्द्वात्मा स्वेच्छावशात् प्रकाशविमर्शशक्तिशिवात्मनात्मानं विभज्योड्याणपीठे कृते युगे [४]कामेश्वरकामेश्वरीसंज्ञया स्थितश्चर्यानाथरूपी [५]ह्यस्यास्त्रिपुरसुन्दर्या मन्त्रविद्यामुद्राख्यत्रिवृत्करणप्रकाशकत्वेन गुरुतारा(र्वा)ज्ञास्वरूपी [६]तुरीयविद्याभिमानी आज्ञासङ्केतप्रवर्तकः परमशिवः [७]स्वाभेदेन स्थितायै स्वशक्त्यै कामेश्वर्यै प्रथममुपदिदेश। तदुक्तं **सङ्केतपद्धत्याम्**—

त्र्यस्रा[८]न्तरोडुपीठस्था महात्रिपुरसुन्दरी।<br>
[९]शाक्तस्फारसमाविष्टो यो ह्येनामु[१०]च्चरेन्नरः॥<br>
सोऽचिराल्लभते सिद्धिं वाक्कामविषसंज्ञकाम्।<br>
छिन्ना रुद्धाश्च ये मन्त्राः कीलिता मूर्च्छिताश्च ये॥<br>
सिद्ध्यन्ति तेऽचिरात्तस्य शक्तिविस्फारबृंहिताः।<br>
मुद्रा विद्याश्च मन्त्राश्च [११]यत्र यन्त्राश्च संस्थिताः॥<br>
[१२]तमहं पीठराजेशमोङ्काराख्यं नमाम्यहम्।<br>
वा[१३]क्कामविषमोक्षाणामालयं सर्वसिद्धिदम्॥

१. 'अथा .... धीयते' इत्यस्य स्थाने 'अथ पारम्पर्यम'–घ. ङ.। २. 'तदि .... चतुः' नास्ति–घ.ङ.। ३. 'आदौ ....नात्मानं' इत्यस्य स्थाने 'आदौ प्रकाशविमर्शात्मनाऽऽत्मानं'–घ. ङ.। ४. कामेश्वरानन्दनाथकामेश्वरीपराम्बासंज्ञया–घ.ङ.। ५. अस्या–घ. ङ.। ६. तुर्यविद्या–घ. ङ.। ७. शिवस्याभेदेन–क.। ८. न्तरा तु पीठ–घ. ङ.। ९. शक्तिस्फारसमुद्दिष्टो–घ.ङ.। १०. च्चरेन्मनुम्–क.। ११. यन्त्रमन्त्रांश्च संस्थितम्–घ.ङ.। १२. तदहं–घ.ङ.। १३. क्कायविष–घ.ङ.।

*1. प्रकरणमेतन्नित्याषोडशिकार्णवार्थरत्नावली (पृ. २१८-२२३)-क्रममाधृत्य स्थापितः।*

श्रीपीठराजं दुष्प्रेक्ष्यं तमहं शरणं श्रये ।
अज्ञानतिमिरध्वंसादाज्ञास्फारप्रदर्शनात्[1] ॥
आज्ञापीठमिदं प्रोक्तमोड्डुपीठं[2] नमाम्यहम् ।

इत्यनेनोड्यानपीठस्थितं चर्या[नाथ]तच्छक्ति[3]रूपमन्त्रविद्या[4]प्रकाशकं[5] तुरीय-विद्यास्वरूपमाद्यं मिथुनमिति यावत् । अथ पुनस्तस्य चर्यानाथरूपस्य परमशिव-भट्टारकस्या[6]ज्ञापीठे [7]स्थित्वा कृताधिकारं कुर्वतो [8]विमर्शरूपिणी शक्तिः कामेश्वर्यम्बा । सा पुनः पूजकत्रिपीठभेदेन ओषमित्राख्यान्[9] शक्तिकाम-वाग्भवा[10]धिदैवतान् मन्त्रविद्यामुद्रागुरून् त्रेताद्वापरकलिष्वधिकारपुरुषान् चित्प्राण-विषयज्येष्ठमध्यमबालाख्यान् त्रिसिद्धान् सुपरीक्ष्य तेषु प्रकाशयामास मन्त्रविद्या-मुद्रागुरूनिति । एतत्त्रितयं[11] **सङ्केतपद्धत्यां** यथोक्तमवलोक्य शोधितं कुर्यात् । [12]तद्यथा—

त्र्यस्रस्योत्तरकोणस्था[13] भगेशी पूर्णपीठगा ।
कामादिनवसङ्केतयन्त्रमन्त्रविधौ स्थिता ॥
[14]नवसिद्धिप्रदा या सा मन्त्रपीठे कृतास्पदा ।
अणिमादिमहामोक्षपर्यन्तघटनो[15]द्यता ॥

द्वादशान्तादिताल्व[16]न्तं जगदाह्लादकं परम् ।
पुनः कन्दादिताल्वन्तं शक्त्यन्तं[17] तु समुच्चरेत् ॥

---

१.र्शनम्–घ.ङ.। २.मोद्रपीठं–क.। ३.'रूप' नास्ति–घ.ङ.। ४.इतः परम् 'मुद्रा'–घ.ङ.।५.कारास्तुरीयविद्या–क.।६.'आज्ञा' इत्यस्य स्थाने 'जा'–क.।७.स्थि अधिकारं–घ.ङ.।८.विषरूपिणी–घ.ङ.।९.ख्याशक्ति–घ.ङ.।१०.धिदेवता–घ.ङ.।११.एतत्त्रि-मय–घ.ङ.। १२.'तद्यथा' नास्ति–घ.ङ.।१३.स्थ–घ.ङ.।१४.'नव....स्पदा' नास्ति–घ.ङ.।१५.नोन्नता–घ.ङ.।१६.'ल्वन्तं ....ताल्वन्' नास्ति–घ.ङ.।१७.न्तश्च–घ.ङ.।

पूर्ण[1]पीठस्थिता बाला विघ्ननिर्नाशिनी परा ।
यैर्मनाक् स्मर्यते तेषाम[2]जरामरता सदा ॥

मननत्राणधर्मोऽसौ मन्त्रो यः परिकीर्तितः ।
तस्याधारो मन्त्रपीठः पूर्णाख्यो जयतादजः ॥

[3]इत्याद्यस्य ज्येष्ठस्याधिकारः ।

त्र्यस्रदक्षिणकोणस्था वज्रेशी जालपीठगा ।
नवविद्याख्यसङ्केतस्फारसिद्धिप्रदायिका ॥

करशुद्धौ [4]देहरक्षाङ्गासने च रथाङ्गके ।
मन्त्राधारे तथा साध्यावाहने तु सुपूजितः ॥

त्रिपुरा त्रिपुरेशी च सुन्दरी पुरवासिनी ।
[5]श्रीर्मालिनी च सिद्धाम्बा महात्रिपुरभैरवी ॥

विद्यासङ्के[6]तमेतत्तु गुरु[7]पङ्क्तित्वमागतम् ।
श्रीमद्दीपकसन्तानसन्तत्या दर्शितं नुमः ॥

गुदमेढ्रनाभिचक्रहृद्गलभ्रूविभेदितम् ।
[8]तरुणारुणसङ्काशं कामराजं [9]समुच्चरेत् ॥

इति षष्ठनाथ[स्य] मध्यमस्याधिकारः ।

त्र्यस्राग्रकोणगा या [10]सा कामेशी कामपीठगा ।
मुद्रादशकसङ्केतदशसिद्धिप्रदायिका ॥

---

१. पीठे स्थिता चाज्ञा विषनिर्नाशिनी–घ. ङ.। २. 'मजरा' नास्ति–घङ.। ३. इत्योड्डाख्य–घ. ङ.। ४. देहराङ्गासने चैव तथागते–घ. ङ.। ५. श्रीभैरवी च–घङ.। ६. तकं तत्तु–घ. ङ.। ७. पर्वत्व–घ. ङ.। ८. अरुणा–क.। ९. मुद्धरेत्–घ. ङ.। १०. 'सा' इत्यस्य स्थाने 'श्री'–क.।

एका चैव महामुद्रा योनिमुद्रात्वमागता ।
तया विभक्तमात्मानं संक्षोभादिप्रभेदतः[1] ॥

शक्तिगर्भात्प्रो[2]च्चलन्तं हृद्ग्रन्थिप्रविभेदकम् ।
[3]देदीप्यमानं जिह्वाग्रे वाग्भवं तु समुच्चरेत् ॥
कामपीठे स्थिता चाज्ञा कामतत्त्वविबोधिका ।
स्मरणाद्देशिकेन्द्राणां वाग्विलासप्रदायिका ॥
द्रावणात् पाशजालस्य तत्परस्य तु मोदनात् ।
मुद्रापीठमिति प्रोक्तं कामरूपं नमाम्यहम् ॥

[4]एतद्बालमित्रस्याधिकारः । [5]त्रिसिद्धा ओलित्रयाभिमानिन इति । [6]तदुक्तं **सङ्केतपद्धत्याम्**—

कन्दाग्रकोणात्प्रोच्चैर्या स्फुरन्ती सततोदिता ।
कामेशीं[7]सर्वगां नित्यां गुरुरूपां नमामि ताम् ॥
ज्येष्ठमध्यमबालाख्यान् चित्प्राणविषयात्मकान् ।
ओषमित्रीशसंज्ञेयान् नौम्यहं सिद्धपुङ्गवान् ॥ [8]इति ।

अत्र ओड्डादिसि[9]द्धानां नामाद्यक्षरग्रहणं कृतम् । यथा [10]ओ इत्यनेन ओड्डस्य ग्रहणम् । ष इत्यनेन षष्ठस्य[11] । मित्रीश इति[12] सम्पूर्णस्य ग्रहणम् । [13]ऋकारेण ऋषिरिति गृहीतम् । षकारेण षष्ठ इति । षष्ठमित्रयोर्लौकिकवै[14]दिकेषु एकप्रकारेण

---

१. भेदितः–क.। २. 'च्च' नास्ति–क.। ३. 'देदीप्य ....विबोधिका' नास्ति–घ.ङ.। ४. अयं बाल–घ.ङ.। ५. इत्येते सिद्धा ओलित्रयाधिकारिणः–घ.ङ.। ६. एतदुक्तं–घ.ङ.। ७. सहगा–घ.ङ.। ८. 'इति' नास्ति–घ.ङ.। ९. सिद्धिदौ नामा–क.। १०. ऋषिरि–घ.ङ.। ११. इतः परम् 'ग्रहणम्'–घ.ङ.। १२. इत्यनेन सम्पूर्णग्रहणम्–घ.ङ.। १३. 'ऋकारेण' नास्ति–क.। १४. लौकिकवैदिकेषु–घ.ङ.।

नामग्रहणं कृतम् । श्रीमदोड्डुस्य कौले ओडु इत्येव प्रसिद्धिः । [१]लौकिके तु ऋषिरिति श्रीमत्क्रोधमुनिरिति भावः, श्रीमद्दुर्वासस एवाभिधानम् । तदिदं [२]त्रितयं [३]कादिभेदे ओलित्रयनिरूपणे ओलिगायत्र्यां स्पष्टं [४]ज्ञायते । [५]तद्यथा—

ओडुनाथाय विद्महे श्री[६] दुर्वाससे धीमहि । तन्नः [७]कौलिः प्रचोदयात् ॥

षष्ठनाथाय विद्महे श्रीकुमाराय धीमहि । तन्नो लक्ष्मीः प्रचोदयात् ॥

मित्रनाथाय विद्महे [८]श्रीकण्ठाय धीमहि । तन्नः [९]कुब्जिः प्रचोदयात् ॥

श्रीदु[१०]र्वासःसुब्रह्मण्यमहादेवा लौकिके । तेषां पूजानाम गुरुमुखादेवावगन्तव्यम्, न पुनः पुस्तके [११]लेख्यम् । एते व्यापनीसमनोन्मन्यपरपर्यायाः शृङ्गाटत्रिरेकाभिमानिनस्तत्र सन्निहिताः । चतुर्थमिथुनरूपं कामेश्वरकामेश्वरीरूपं [१२]प्रकाशविमर्शमयं शृङ्गाटमध्यस्थबिन्दुरूपं बीजोच्छूनविभक्तबिन्दुविभागाकारमाश्रित्य स्थितम्, श्रीचर्यानाथतच्छक्तिमिथुनमिति भावः । एवं शृङ्गाटकस्य त्रिरेखामयत्रिबीजमध्यस्थतुरीयविद्यास्वरूपमिति । पञ्चकारणरूपपरमकामात्मके गुप्ताद्य- स्वरूपे सर्वमेतद्व्यवस्थितमिति भावः ।

एतत्पञ्चकं दिव्यौघः । एतेषां गुप्तनामग्रहणं[१३] कपदिमसैराद्यग्रहणाज्ज्ञातव्यम् । ततः परं कलियुगगुरूणां[१४] मित्रीशेन मिथुनमनुगृहीतम्, त[१५]ल्लोपामुद्रागस्त्यात्मकम् । ततः पूजानाम प्रप्राभ्यामाद्यग्रहणम् । ताभ्यामनुगृहीतः कङ्कालतापसः, तेन [१६]धर्माचार्यः, धर्माचार्येण [१७]मुक्तकेशिनीनाम योगिनी, तया श्रीदीपका-

---

१. 'लौकिके तु' इत्यस्य स्थाने 'कौलिके'–घ.ङ.। २. 'त्रितयं' नास्ति–घ.ङ.। ३. कालिभेदो ओलि–क.। ४. इतः पूर्वम् 'वि'–घ.ङ.। ५. 'तद्यथा' नास्ति–घ.ङ.। ६. इतः परम् 'मते'–क.। ७. कालि–घ.ङ.। ८. श्रीदुर्वासाय–घ.ङ.। ९. कालि–घ.ङ.। १०. 'दुर्वासः' इत्यस्य स्थाने 'दुर्वाः'–घ.ङ.। ११. लिख्यते–घ.ङ.। १२. 'प्रकाश .... दिव्यौघः' नास्ति–घ.ङ.। १३. 'ग्रहणमेकदिन ....राद्य'–क., 'हणं यथा प्रकादिमस आद्य'–अर्थ.। १४. गुरूणां मित्रेण मिथुन–घ.ङ.। १५. 'तल्लोपा ....नुगृहीतः' नास्ति–घ.ङ.। १६. 'धर्माचार्यः' नास्ति–घ.ङ.। १७. 'मुक्तः केशीनाम' इति पाठान्तरम्–क.।

चार्यः। एतत्षट्कमस्माकं सिद्धौघः। [१]प्रप्रा[२]दिविक्रमैराद्यग्रहणं गुप्तनाम। तदनु जिष्णुदेव-मातृगुप्तदेव-तेजोदेव-मनोजदेव[३]-[कल्याणदेव]-श्रीरत्नदेव-[४]श्रीवासुदेव[५]सप्तकं मानवौघः। विविशकमपस्वैराद्यग्रहणं गुप्तनाम [६]ज्ञातव्यम्। इत्थं सर्वेषां पूजानाम गुरुमुखाज्ज्ञातव्यम्।

**॥ इति श्रीविद्यानन्दनाथविरचितायां [७]श्रीत्रिपुरसुन्दरीपद्धत्यां ज्ञानदी[८]पविमर्शिन्यां दीक्षापद्धतिर्द्वाविंशतिः ॥** [1]

■

१.'प्रप्रा' नास्ति–घ.ङ.। २.क्रमयोराद्य–घ.ङ.। ३.'श्रीरामदेव'–घ.ङ.। ४.'श्री' इत्यस्य स्थाने 'देव'–घ.ङ.। ५.देवाख्याः सप्तकं–घ.ङ.। ६.'ज्ञातव्यम्' इत्यस्य स्थाने 'ग्रहणम्'–घ.ङ.। ७.'श्री ....द्धत्यां' नास्ति–घ.ङ.। ८.दीपप्रदर्शिन्यां पारम्पर्यपद्धतिश्चतुर्विंशतिः–। घ.ङ.।

*1. इतः परं घ. ङ. पुस्तकयोरेव द्वीपाम्नायपद्धतिरधिका दृश्यते। सा च सप्तमे परिशिष्टे स्थापिता।*

[1] **श्रीविद्याधराय नमः । श्रीयोगानन्दमुनये नमः ।**

करुणी(णां) परमेशस्य तरुणीमरुणामुमाम् ।
हकारार्धकलां गौरीं वन्दे त्रिपुरसुन्दरीम् ॥
परमानन्दनामानमकुलानन्दनिर्भराम् ।
वन्देऽहं पर(म ?)या भक्त्या करुणामृतवर्षिणीम् ॥
प्रतिभा(भां) शाम्भवीं वन्दे वाग्मयीं चिन्मयीं तथा ।
मया गुरुमुखाम्नायमासाद्य परभक्तितः ॥
रचिता पद्धतिः सम्यक् साधुबोधाय सादरम् ।
**अमरानन्द**नाम्नेयं **विद्यानन्देन** धीमता ॥
रचिता वाङ्मयी माला गृहाण हरवल्लभे ।
क्षन्तव्योऽप्यपराधो मे ज्ञानाज्ञानकृतस्त्वया ॥
कारुण्यरसपूर्णैस्तु लोचनैर्मां विलोकय ।
सन्तो नः क्षन्तुमर्हन्तु त्वसन्तः सन्तु कामतः ॥
त्वद्भक्तिरसपूर्यैर्या रचिता पद्धतिर्मया ।
तत्पादपद्मयुगलस्यन्दिने मधुसेविनः ।
प्रसीद परमेशानि कारुण्यान्मम भैरवी ॥

■

*1. केवलं क. पुस्तके ५६क.-५६ख. पत्रयोर्वर्तमाना एते श्लोका ग्रन्थसमाप्तिसूचकाः सन्तीत्यत्र स्थाप्यन्ते ।*

# प्रथमं परिशिष्टम्[1]

[४३ख-४४क. पत्रयोः स्थिता इमे श्लोकाः कामविधानपद्धतिदीक्षापद्धत्योरन्तरा दृश्यन्ते ।]

कुण्डं वा मण्डपं वापि शिल्पं विद्धं न कारयेत् ।
शिल्पदोषाः समायान्ति शिल्पहीनाः फलप्रदाः ॥१ ॥
रूपैस्तु म्रियते राज्ञी केशा दुर्भिक्षकारकाः ।
पाषाणैर्विकलं राज्यमङ्गारा व्याधिकारकाः ॥२ ॥
काष्ठैर्यरवं शोकं तस्मादेतानि वर्जयेत् ।
शल्यैर्विनाचफलं वाञ्छितार्थफलप्रदम् ॥३ ॥
कुहनं स्पन्दनं चैव वाजीकरणलेपनम् ।
सूत्रपातं ततः कुर्याद् दिग्विदिक्षु समन्ततः ॥४ ॥
कर्चरान्तं जलान्तं वा शिल्पदोषजिघांसया ।
खानयेदज्ञात्वा विधिना शल्यमुद्धरेत् ॥५ ॥
वकतपहोममायाप्रत्युक्तः वाणी जायते ।
लग्ने ध्वजादिपतितः स्वस्थाने शल्यमाख्याति ॥६ ॥
कर्तुश्चाङ्गविकारेण जिनीयन्ते प्रमाणतः ।
पश्चादि(दी)नां प्रवेशे कीर्तने वीरुतैर्दिशः ॥७ ॥
दिङ्मात्रमिदमाख्यातं विस्तरोऽन्यत्र लक्ष्यताम् ।
अञ्जसा स्तोकखातेषु शल्योद्धारे प्रयोजनम् ॥८ ॥
प्रेक्ष्याश्मभिः करापूरैरष्टाङ्गुलिमृदं तरेत् ।
पादोनं खातमापूर्य यजेर्मुहुराहतैः ॥९ ॥

---

1. *क. पुस्तके ४३-५६ पत्रेषु परिदृश्यमानाः परस्परमसंबद्धा अंशा एते नान्यासु मातृकासु लभ्यन्ते, अतोऽत्र प्रथमपरिशिष्टत्वेन स्थाप्यन्ते । अत्र केषाञ्चन तादृशानां पत्राणां छाया-चित्राणि दीयन्ते ।*

[५४ख-५६ख.पर्यन्तं स्थिताः श्लोकाः ।]

[अहौ]तौ वर्णचक्रस्य स्वप्रकाशविमर्शकौ ।
शिवशक्ति(कि ?)मयौ वन्दे परस्परकिरणौ परौ ॥
आ(अ)कुलात् पञ्चाशद्धा [या] प्रसृता शक्तिरूपिणी ।
चन्द्रामृतमयीं वन्दे तामहं सृष्टिमार्गगाम् ॥
जन्मस्थानात् समुद्यन्तां चतुर्वह्निस्वरूपिणीम् ।
ग्रसन्तीं तत्त्ववर्णाद्यं वन्दे संहारमध्यगाम् ॥
सृष्टिसंहारसंयोगात् सामरस्यपदं गताम् ।
तां वन्दे परमेशानीमुन्मन्यन्ते व्यवस्थिताम् ॥
बिन्दुद्वयपुटान्तस्थां महावह्निस्वरूपिणीम् ।
हकारार्धकलारेखां महाबीजक(जाङ्कु)रां नुमः ॥
महाकामकलाशक्तिमुखस्तनवराङ्गकाम् ।
वन्दे तां परमां शक्तिं महात्रिपुरसुन्दरीम् ॥
वर्णमण्डलमन्त्राख्यां धामसंवित्स्वरूपिणीम् ।
प्रसृता(तां) पञ्चधा नित्यां कालग्रासकलालयाम् ॥
वामादिशक्तिभेदेन परलिङ्गस्य पिण्डिकाम् ।
महाशृङ्गाटपीठान्तामनच्कान्तर्गतां भजे ॥
अकथादित्रिपङ्क्तिस्थां हक्षाख्यकन्दमध्यगाम् ।
महावाग्भवरूपां तां वन्दे कालापहारिणीम् ॥
काममन्मथकन्दर्पमकरध्वजमोहनौ(नैः) ।
यन्त्रराजस्वरूपेण स्थितां [तां] त्रिपुरां भजे ॥
अवर्णबीजमध्यस्थां महाकामकलाङ्कुराम् ।
शृङ्गाटपीठमध्यस्थवाग्भवस्थां सदा भजे ॥
शान्तिकं शरदि ज्ञेयं हेमन्ते पौष्टिकं तथा ।
वसन्ते ह्याकर्षणं तु ग्रीष्मे विद्वेषणं स्मृतम् ॥

प्रावृष्युच्चाटनं कर्म मारणं शिशिरे ध्रुवम् ।
एभिः कालैस्त्रयः(श्च यः) कर्म कुरुते साधकः सदा ॥

अर्धरात्रे शरत्कालं हेमन्तं सुप्रभातके ।
पूर्वाह्णे तु वसन्तं च मध्याह्ने ग्रीष्म उच्यते ॥

प्रावृषमपराह्णे तु प्रदोषे शिशिरं स्मृतम् ।

अपरो भेदः —

उषाकाले तु हेमन्तः प्रभाते शिशिरो भवेत् ।
प्रहरार्धे वसन्तः स्याद् ग्रीष्मं मध्यन्दिनान्तरे ॥

प्रहरे चतुर्थे वर्षं तु शरदोऽस्तङ्गतेन तु ।
एते षड्ऋतवः कर्म ज्ञात्वा सिद्धिर्भवेदिति ॥

नाम्नस्ता[व]दन्ते मन्त्रो भवति पल्लवः ।

मन्त्रस्यान्तं यदा नाम स भवेद्योगः । नाम्न आदौ मध्ये चान्ते मन्त्रः स च निरोधः । नाम्न आदावन्ते च मन्त्रो भवति सम्पुटः । अन्तरान्तरे मन्त्रार्णान्वयोः ।

मोहनाकर्षणं चैव क्षोभणोन्मादनं तथा ।
कनिष्ठामध्यमाङ्गुष्ठसंयोगेन तु लीलया ॥

विधिदृष्टेन होमेन तथा द्रव्यानुरूपतः ।
सर्वमेतत् प्रसिद्ध्येत मुद्रामन्त्रप्रयोगतः ॥

सद्योवाममघोरं च पुरुषेशानमेव च ।
अङ्गुष्ठादिकनिष्ठान्तं द्रष्टव्यं तत्त्वपञ्चकम् ॥

मुप्यक्रैवोदयं ज्ञात्वा कर्म कुर्याद्यथाविधि ।
नाजप्तः सन्ध्य(सिद्ध्य)ते मन्त्रो नाहुतश्च फलप्रदः ॥

नायष्टो यच्छते कामान् तस्मात् त्रितयमाचरेत् ।
पूजया लभते पूजां जपात् सिद्धिर्न संशयः ।
विभूतिश्चाग्निकार्येण सौभाग्यं सर्वसिद्धिदम् ॥

इतरवश्यादिप्रयोगोऽस्माभिः कृतायाम**र्थरत्नावल्यां** सर्वं स्पष्टमेतत् ॥

**॥ इति काम्यपद्धतिरेकविंशतिः ॥**

■

[५० क-ख. पत्रयोः स्थितः पाठः।]

ह्रीं श्रीं लां लीलाम्बापादुकां पूजयामि। लूं लुं लावावृताम्बा पादु.। लू लोलाम्बापादु.। लृं लंकाम्बा[पा]दु.। लूं लङ्केश्वरी-अम्बापादु.। लैं लालसाम्बा पादु.। लौं विमलाम्बापादुका.। लः मालाम्बापादुकां पूजयामि। ह्रीं श्रीं हां हुताशनाम्बापादुकां पूजयामि। ह्रीं विशालाक्षी-अम्बापादुका.। हुं हुङ्काराम्बापादुकां.। हं वडवामुखी- अम्बापादुकां। हुं हाहारवाम्बापादुकां.। ह्रैं क्रूराम्बापादुकां.। ह्रौं क्रोधनाथाम्बापादुकां.। हः भयानकाम्बापादुकां.। ह्रीं श्रीं सां सर्वज्ञाम्बापादुकां.। सां तेलाम्बापादुकां पूजयामि। सूं ताराम्बापादुकां पूजयामि। स्रूं ऋग्वेदाम्बापादुकां.। स्रूं दशाननाम्बापादुकां.। सैं साराम्बापादुकां.। सौं सवाम्बापादुका पूजयामि।

[५० ख-५१ ख. पत्रेषु स्थितः पाठः।]

सः संवराम्बापादुकां पूजयामि। ह्रीं श्रीं तालजङ्घाम्बापादुकां.। श्रां रक्ताक्षी-अम्बापादुकां.। षूं विद्युज्जिह्वाम्बापादुकां पूजयामि। षूं करङ्किणी-अम्बा.। ष्लूं मेघनादाम्बापादुकां.। षैं चण्डाग्राम्बापादु.। षों कालकर्णी-अम्बापादुकां. पूजयामि। षः वरप्रदाम्बा पादुकां.। ह्रीं श्रीं शचिपादुकां पूजयामि। श्रीचम्पावती-अम्बापादुकां पूजयामि। शूं प्रच(प)ञ्चाम्बापादुकां पूजयामि। श्लं प्रलयान्तकाम्बापादु.। श्लुं पिचुवक्त्राम्बापादुकां.। शैं पिशाची-अम्बापादुकां पूजयामि। शौं पिशितासनाम्बापादुकां.। शः लोलुपाम्बापादुकां पूजयामि। ह्रीं श्रीं वां वामनाम्बापादुकां.। षीवमताम्बापादुकां पूजयामि। ... कृ वामयाम्बापादुकां.। प्लु वा पुं व गवापादुकां। वै बृहत्कुक्षी-अम्बापादुकां पूजयामि। वौ अमिताम्बापादुकां पूजयामि। वः विश्वरूपिणी-अम्बापादुकां.। ह्रीं श्रीं यां यमजिह्वाम्बापादुकां पूजयामि। यीं यं यन्ती-अम्बापादुकां पूजयामि। यं दुर्जयाम्बापादुकां.। यूं यमान्तकाम्बापादुकां.। प्लूं कामन्तकाम्बापादुकां पूजयामि। यौं विज्ञार्यम्बापादुकां। वौं रेववीक्लम्बापादुकां पूजयामि। यः प्रेतनायकाम्बापादुकां.। अं आ ब्रह्माणीमङ्गलाम्बापादु.। ईं लां माहेश्वरीचर्चिकाम्बापादुकां.। प्लुं हां कौमारीयोगेशाम्बापादुकां.। ऋं षा वैष्णवी हरसिद्धाम्बापादुकां पूजयामि। लूं षां वाराहीभट्टाम्बिकां पूजयामि। ऐं शां किलिम्बापादुकां पूजयामि। ऋं वां चामुण्डाकालरात्री-अम्बापादुकां पूजयामि। अ यः महालक्ष्मीभीषणाम्बापादुकां पूजयामि।

# द्वितीयं परिशिष्टम्[1]

## अथ म[१]ण्डपवर्णनम्

उद्यच्चन्द्रोदयात् क्षुभ्यद्रक्तपीयूषवारिधौ ।
मध्ये हेममयीं भूमिं स्मरेन्माणिक्यमण्डिताम् ॥

तन्मध्ये नन्दनोद्यानं मदनोन्मादनं महत् ।
नित्याभ्युदितपूर्णेन्दुज्योत्स्नाजालेन[२] दीपितम् ॥

सदा सह वसन्तेन कामदेवेन रक्षितम् ।
कदम्बचूतपुन्नागनागकेसरचम्पकैः ॥

बकुलैः पारिजातैश्च सर्वत्र कुसुमोद्भवैः ।
झाङ्कारमुखरैर्भृङ्गैर्जय(प)द्भिः कोकिलैर्युतैः ॥

नानावर्णै रथाङ्गैश्च द्विजसंघैर्निषेवितम् ।
शिखिकोकिलहंसाद्यैर्लीलापक्षिभिरावृतम् ॥

नानापुष्पलताकीर्णैः शोभितं वृक्षमण्डपैः ।
पर्यङ्कदीर्घिकाशोभैः कमलोत्पलसम्भवैः ॥

रजोभिर्धूसरैः सम्यक् सेवितं मलयानिलैः ।
ध्यात्वैवं नन्दनोद्यानं तदन्तः[३] प्राङ्गणं स्मरेत् ॥

---

१. ण्डललक्षण–घ. ङ. । २. जालवितानितः (तम्)–घ. ङ. । ३. न्तेशं ग–ग. ।

---

*1. सूर्यपूजापद्धत्यनन्तरं मण्डपवर्णनपद्धतिरेषा न दृश्यते–क. ख., अतोऽत्र परिशिष्टरूपेण स्थाप्यते । यतो हि ग. घ. ङ. पुस्तकेषु विद्यते प्रकरणमेतत् ।*

शुद्धकाञ्चनसम्पूर्णं[१] वालुकाभिरलङ्कृतम् ।
प्राङ्गणं चिन्तयित्[२]वेत्थं [३]सुरसङ्घैर्निषेवितम् ॥
तन्मध्ये मण्डपं ध्यायेद् व्याप्तब्रह्माण्डमण्डलम्[४] ।
तरुणादित्यसङ्काशं चतुरस्रं सुशोभनम् ॥
रक्ततेजःप्रभापुञ्जपिञ्जरीकृतदिङ्मुखम् ।
मध्यस्तम्भविनिर्मुक्तं कोणस्तम्भसमन्वितम् ॥
महामाणिक्यवैडूर्यर[५]त्नकाञ्चनभूषितम् ।
मुक्तादामविभूषाढ्यं रत्नसोपानमण्डितम् ॥
मन्दवायुसमाक्रान्तं गन्धधू[६]पाङ्गरञ्जितम् ।
रत्नचामरघण्टादि[७]वितानैरुपशोभितम् ॥
जातिचम्पकपुन्नागकेतकीमल्लिकादिभिः ।
गन्धोत्पलसिताम्भोजमाधवीभिः[८] सुशोभितम् ॥
[९]रत्नकाञ्चनवैडूर्यमुक्तानिर्मितपुस्तकैः[१०] ।
[११]बद्धाभिश्चित्रमालाभिः सुवृत्ताभिरलङ्कृतम् ॥
रत्न[१२]पुत्तलिकाकोटिभू[१३]षितं परिघोपरि[१४] ।
नाना[१५]वर्णादिभिर्दिव्यैश्चित्रितं विश्वकर्मणा ॥
तन्मध्ये विपुलां ध्यायेद्वेदिकां शतयोजनाम् ।
सहस्रादित्यसङ्काशां मेघमाणिक्यनिर्मिताम् ॥

---

१. संचूर्णं–ग.। २. न्तयेदेनं–घ.ङ.। ३. सिद्धिनिषे–घ.ङ.। ४. पम्–घ,पः–ङ.।
५. रक्त–घ.ङ.। ६. पतरङ्गितम्–घ.ङ.। ७. विमानै–ग.। ८. तिरवैरिभिः–घ.ङ.।
९. रक्त–ग.। १०. ष्पकैः–घ ङ.। ११. बन्धा–ग.। १२. पुट्ट–घ.ङ.। १३. निर्मितं–घ.ङ.।
१४. तोपरि–घ.ङ.। १५. रत्ना–घ.ङ.।

चतुर्द्वारसमोपेतां माणिक्यद्वारतोरणाम् ।

[१]प्रदीपैः पूर्णकुम्भैश्च सर्वतः समलङ्कृताम् ॥

हेमोभिः पालिकाभिश्च साङ्कुराभिरलङ्कृताम् ।

ध्यात्वैवं मण्डपं दिव्यं द्वारपालान् समर्चयेत् ॥

**॥ इति[२] श्रीविद्यानन्दनाथविरचितायां ज्ञानदीपविमर्शिन्यां त्रिपुरसुन्दरीपद्धत्यां मण्डपवर्णनपद्धतिः ॥**

■

---

१. पङ्क्तिरियं नास्ति—घ.ङ.। २. "इति श्री .... वर्णनपद्धतिः" नास्ति—घ.ङ.।

# तृतीयं परिशिष्टम्

## मन्त्रोद्धारपद्धतिः

[1]मूलाङ्गभूता[१] या विद्या[:] पृथगन्यागमोदिता[:] ।
तासामुद्धारमात्रोऽत्र दृश्यते [२]वर्णगह्वरे ॥

वर्णन्याससहितो वर्णगह्वरो यथा—

सुसमे भूप्रदेशे तु निम्नोन्नतविवर्जिते ।
पुष्पप्रकरशोभाढ्ये दिव्यधूपाधिवासिते ॥
ताम्बूलापूर्णगण्डूषो रक्त[३]मालानुलेपनः ।
प्रणम्य गुरुपादाब्जद्वन्द्वमानन्द[४]सान्द्रधीः ॥
वारुणेन्द्रायतास्त(न्य)ात्रषट्कर्मादौ [५]निवेशयेत् ।
सूत्राणि याम्य[६]सौम्यान्तं पुनरेकादशं न्यसेत् ॥
वारुणेन्द्रायताः पञ्च सम्भवन्त्यत्र पङ्क्तयः ।
मध्यपङ्क्त्यैव यत्सूत्रं मध्यं तस्य विलोपयेत् ॥
[७]पदान्येकोनपञ्चाशदेवं सिद्ध्यन्ति यत्नतः ।
अथास्मिन् वर्णविन्यासो दर्श्यते वर्णगह्वरे ॥
अकारादीन् [८]समीरादिकोष्ठादारभ्य विन्यसेत् ।
ईशानान्तं द्वितीयस्यां पङ्क्तौ भूयो [९]दश न्यसेत् ॥

---

१.मूलाङ्गविद्या या भूता–ग.। २.कर्ण–घ.ङ.। ३.मालया–ग.। ४.मानसः–घ.ङ.। ५.'निवेशयेत्' नास्ति–ग.। ६.सोम्यानि–घ.ङ.। ७.'पदान्ये ....वर्णगह्वरे' नास्ति–घ.ङ.। ८.समेरा–घ.ङ.। ९.दशं–घ.ङ.।

---

*1. 'एवं मूलविद्योद्धारः' (पृ. ४०) इत्यतः परं तृतीयेऽत्र परिशिष्टे स्थापितः पाठो न विद्यते–क. ख., ग. घ. ङ. पुस्तकेषूपलभ्यत इति परिशिष्टत्वेन स्थाप्यते ।*

आदिजान्तान् तृतीयस्यां मध्यकोष्ठावधिं न्यसेत् ।
हकारादीन् विलोमेन [1]श[ा]न्तानग्न्यन्तमालिखेत् ॥
मरुत्कोष्ठे समारभ्य वर्णन्यासः समीरितः ।
मरुत्कोष्ठगते गृह्य गुजमध्ये नियोजयेत् ॥
एतद्वाग्भवमाख्यातं कामराजमतः परम् ।
मरुदग्रगतं गृह्य अःअंमध्ये नियोजयेत् ॥
कफमध्यगतं गृह्य ईजमध्ये नियोजयेत् ।
उसमध्यसमायुक्तं शक्तिबीजमुदाहृतम् ॥
इयं सा त्रिपुरा नित्या करशुद्धिकरी मता ।

अस्याः करशुद्धिविद्यायाः प्रथमद्वितीयबीजयोर्वाग्भवकामराजसंज्ञा **उदयाकरेणोक्ता**[2]—

सा च भेदद्वयेनास्ति तदुक्तं **रुद्रयामले** ॥
त्रिकोणमध्ये यत्सूर्यं शृङ्गाटाकृतिसंस्थितम् ।
तत्रारूढमचैतन्यं वाग्भवं तदिदं प्रिये ॥
तदूर्ध्वं [3]जननस्थानात् संस्थिता शक्तिरुत्तमा ।
ध्वनिरूपा तु सा देवी [4]द्विभुजा परिवेष्टिता ।
कामराजमिदं भद्रे गोपनीयं प्रयत्नतः ॥

तथा **सुवर्णत्रिशङ्का(त्रिंशिका)**यामप्याद्यवर्णस्यैव[5] वाग्भवत्वमुक्तम् । [6]यथा—

अबिन्दुमविसर्गं च अकारं जपतो महान् ।
[7]उदेति देवि सहसा ज्ञानौघः पारमेश्वरः ॥

---

१. ज्ञान्ता– ङ. । २. इतः परं 'यथा'– घ. ङ. । ३. जन्मनःस्थान– घ. ङ. । ४. द्विकुब्जा– घ. ङ. । ५. 'एव' नास्ति– ग. । ६. 'यथा' नास्ति– घ. ङ. । ७. उदयति– ग. ।

[१]गीतायामपि— "अक्षराणामकारोऽस्मि" (१०.३३) इति।

अछमध्यगतं गृह्य अक्रूरेण समागतम्।
वाग्भवं[२] बीजमाख्यातमुद्धरेत् कामराजकम्॥

[३]रुसमध्यगतं गृह्य [४]ङदमध्ये[५] नियोजयेत्।
[६]ओकारवामसंयुक्तमहमध्येन भेदिता(तम्)॥

खवमध्यं समादाय ईजमध्येन योजयेत्।
[७]उकारदक्षसंयुक्तं शक्तिबीजमुदाहृतम्॥

अङ्गन्यासप्रयुक्तेयं नित्या च त्रिपुरेश्वरी।
[८]एओमध्यगतं गृह्य अक्रूरेण विभेदितम्॥

वाग्भवं तु समाख्यातं वागैश्वर्यप्रदायकम्।
[९]अखमध्यगतं[१०] गृह्य [११]ङदमध्ये निवेशितम्॥

[१२]ॐकारकामसंयुक्तं सक्रूरं कामराजकम्।
जसमध्यं समादाय [१३]हषमध्यासने स्थितम्॥

अनुग्रहेशसंयुक्तं महासेनेन भेदितम्।
शाक्तं बीजमिदं प्रोक्तं सर्गात्पूर्वं [१४]सबिन्दुकम्॥

आत्मरक्षाकरी [१५]सेयं नित्या त्रिपुरसुन्दरी।
मध्यकोष्ठगतं गृह्य छदमध्ये निवेशितम्॥

---

१. 'गीताया ...इति' नास्ति–ग.। २. ग्भव–ग.। ३. ऊस–घ.ङ.। ४. उद–घ.ङ.। ५. ध्यमदेश–घ.ङ.। ६. 'ओकार....योजयेत्' नास्ति–ग.। ७. ऊकारादक्ष–घ.ङ.। ८. एतु–ग.। ९. अख्य–ग.। १०. गत–घ.ङ.। ११. 'ङद' नास्ति–घ., दद्व–ङ.। १२. औकार–घ.ङ.। १३. हव–घ.ङ.। १४. मबिन्दुकम्–घ.ङ.। १५. चेयं–घ.ङ.।

त्रिमूर्तिक्रूरसंयुक्तं बीजं वाग्भवमादिशेत् ।

[१]सरिमध्यगतं गृह्य दकारोत्तरयोजितम् ॥

ईकाराग्रसमायुक्तं बिन्दुना मूर्ध्नि भूषितम् ।

कामराजमिदं [२]ख्यातं शक्तिबीजं समु[३]द्धरेत् ॥

कोष्ठमध्यगतं गृह्य तदग्रे विनिवेशितम् ।

[४]ॐकारबिन्दुसंयुक्तं विसर्गेण समायुतम् ॥

देवात्मासनसंयुक्ता नित्या त्रिपुरवासिनी ।

मध्यकोष्ठगतं गृह्य त्रिस्थानविनिवेशितम् ॥

[५]आद्यं भूतांशसंयुक्तं बिन्दुना मूर्ध्नि [६]भूषितम् ।

वाग्भवं बीजमाख्यातं कामराजमतः परम् ॥

[७]ङदमध्यासनासीनं [८]रिसमध्यं तु मध्यमे ।

[९]इ-उमध्येन संयुक्तं बिन्दुना मूर्ध्नि भूषितम् ॥

अन्त्यं [१०]भृग्वासनासीनं मध्यकोष्ठकमस्तके[११] ।

[१२]शापानुग्रहसंयुक्तं महासेनेन भेदितम् ॥

शक्तिबीजं समाख्यातं बिन्दुना पूर्ववद् युतम् ।

[१३]तृतीयेति पुनः प्राप्ते हलोपः क्रियते बुधैः ॥

त्रिपुराश्रीरियं ख्याता नित्या चक्रासने[१४] स्थिता ।

मध्यकोष्ठगतं गृह्य [१५]हषमध्ये [१६]निवेशयेत् ॥

---

१. ऋस–घ.ङ.। २. प्रोक्तं–घ.ङ.। ३. मुद्धवेत्–घ.ङ.। ४. औकार–घ.ङ.। ५. आर्यभोतीश–घ.ङ.। ६. संयुतम्–घ.ङ.। ७. दद्व–घ.ङ.। ८. ऋस–घ.ङ.। ९. नियोज्य मूर्ति–घ.ङ.। १०. तृग्रामना–घ.। ११. स्तगे–घ.ङ.। १२. स्थाप्यानु–घ.ङ.। १३. 'तृतीय ....प्राप्ते' नास्ति–ग.। १४. सन–घ.ङ.। १५. कह–घ.। १६. समन्यसेत्–घ.ङ.।

[1]भूतीशबिन्दुसंयुक्तं वाग्भवं वा विलासजम् ।
मध्यकोष्ठगतं गृह्य कफमध्यासने न्यसेत् ॥
[2]तद्द्वयं झसमध्यस्थं पिनाकीशसमन्वितम् ।
[3]मूर्ध्नि ईकारसंयुक्तं नादबिन्दुसमन्वितम् ॥
कामराजं समाख्यातं शक्तिबीजमतः परम् ।
मकमध्यगतं गृह्य खगमध्ये निवेशयेत् ॥
[4]वीप्सयेत्तद्द्वयं भूयः क्रूरानुग्रहसंयुतम् ।
महासेनसमायुक्तं वीप्सावर्जं समुद्धरेत् ॥
सर्वमन्त्रासनगता नित्या त्रिपुरमालिनी ।
[5]अकमध्यगतं गृह्य [6]वथमध्यासने न्यसेत् ॥
त्रिमूर्तिक्रूरसंयुक्तं वाग्भवं कवितारकम् ।
[7]रुसमध्यगतं गृह्य पिनाकीशनिवेशितम् ॥
त्रिमूर्तिक्रूरसंयुक्तं कामराजम्[8]उदाहृतम् ।
[9]घधमध्यगतं गृह्य पिनाकीशनिवेशितम् ॥
झिण्टीशक्रूरसंयुक्तं शक्तिबीजमुदाहृतम् ।
इत्येषा त्रिपुरासिद्धा साध्यसिद्धासनस्थिता ॥
मध्यकोष्ठकं[10]मादाय कं[11]फमध्ये निवेशितम् ।
लयमध्यासने स्थाप्य [12]भौतीशाक्रूरसंयुतम् ॥

---

१. 'भूतीश ....न्यसेत्' नास्ति–घ.ङ.। २. त ....वं मस–घ., तद्वयं ऋस–ङ.। ३. मूर्द्धन्यनुग्रहेशानबिन्दुनादेसमायुतम्–घ.ङ.। ४. 'हकारसकारौ' इति–गटि.। ५. औफ–घ.ङ.। ६. चथ–घ.ङ.। ७. ऋ–ग.। ८. समुद्धृतम्–घ.ङ.। ९. घष–घ.ङ.। १०. ष्ठग–घ.ङ.। ११. कह–घ.ङ.। १२. भोगश–घ.ङ.।

वाग्भवं तु समाख्यातं वागैश्वर्यप्रदायकम् ।
जसमध्यगतं गृह्य हषमध्ये निवेशयेत् ॥
तदधो [१]रुसमध्यस्थं कृत्वा भूयः समु[२]च्चरेत् ।
[३]उदमध्यसमासीनं लयमध्यासने स्थितम् ॥
त्रिमूर्तिक्रूरसंयुक्तं कामराजमुदाहृतम् ।
लयमध्य[४]गतस्थाने हकाराग्रं समुद्धरेत् ॥
पुनर्मध्यगतं वर्णं तस्य मूर्ध्नि नि[५]वेशयेत् ।
[६]तदूर्ध्वं हषमध्यं च तदूर्ध्वं भषमध्यगम् ॥
मूर्धन्यनुग्रहो बिन्दुमहासेनसमन्वितम् ।
वीप्सावर्जं समुद्धारः शक्तिबीजस्य दर्शितः ॥
एतच्छक्तिबीजाख्यं क्ष्वेडहृद् मोक्षदायकम् ।
आवाहने नियुक्तैषा नित्या च त्रिपुराम्बिका ॥
[७]असमध्यगतं गृह्य [८]अःमध्ये [९]गं निवेशयेत् ।
अः [१०]रां मध्यं समादाय तदधः स्थापयेद् बुधः ॥
पिनाकिनमधोदेशे तदधो लकुलीश्वरम् ।
तदधः षहमध्यस्थं तदधो [११]रिसमध्यगम् ॥
अंभ[१२] मध्यगतं पश्चात् तदधो [१३]ङदमध्यगम् ।
तदधः [१४]कफमध्यस्थं तदधो [१५]रिसमध्यगम् ॥

---

१.ऋ–घ.ङ.। २.मुद्धरेत्–घ.ङ.। ३.ङद–घ.। ४.शिरः–घ.ङ.। ५.नियोज–घ.ङ.।६.'तदूर्ध....ध्यगम्' नास्ति–ग.।७.अंह–घ.।८.वख–घ.ङ.।९.'गं' नास्ति–ग.। १०.ख–घ. ङ.। ११.ऋ–घ.ङ.। १२.स–घ.ङ.। १३.छ–घ.ङ.। १४.षह–घ.ङ.।१५.ऋ–घ.ङ.।

तदधो डार्णदक्षस्थं मध्यकोष्ठगतं न्यसेत् ।
[1]तदधो लयमध्यस्थं त्रिमूर्तिश्चन्द्रसंयुतम् ॥
नित्या चैषा समाख्याता साक्षात् त्रिपुरभैरवी ।
श्री**वामकेश्वरे** चक्रे(तन्त्रे) नवभागेषु संस्थिता[:] ॥
नवनित्या[:] समाख्याताः सर्वतन्त्रेषु[2] गोपिता[:] ॥
त्रिपञ्चतिथिनित्यानामुद्धारः संप्रदृश्य(दर्श्य)ते ॥
सर्वसिद्ध्याप्तये पुंसामुन्मध्या(थ्या)गमसागरम् ।
[3]इङमध्यगतं गृह्य कुर्याद् बिन्दुसमन्वितम् ॥
अःखमध्यगतं गृह्य [4]ङदमध्यासने न्यसेत् ।
त्रिमूर्तिबिन्दुसंयुक्तं कूटमेतत् समुद्धरेत् ॥
[5]जलमध्यं समादाय तदग्रासनसंयुतम् ।
इहमध्येन संयुक्तं बिन्दुसेनसमन्वितम् ॥
अनन्तान्ते त्रिमूर्तीशं तदन्तेऽर्घीशमुद्धरेत् ।
[6]वर्णत्रयमिदं भूयः क्रूरेण च विभेदयेत् ॥
[7]कपालीशो भुजङ्गीशः पिनाकी खड्गी बकस्तथा ।
[8]खड्गीशोऽपि तदन्ते स्याद् भृग्वीशस्तदनन्तरम् ॥
[9]अनन्तबिन्दुसंयुक्तं वर्णा ह्येते पृथक् पृथक् ।
[10]झषमध्यगतं गृह्य मरुत्पूर्वेण भेदयेत् ॥

---

१. "तदधो ....न्द्रसंयुतम्" इत्यस्य स्थाने "तदधश्छदमध्यस्थं कृत्वा भूयः समुद्धरेत् । मस्तके तस्य कूटस्य बिन्दुं त्रिमूर्तिकं न्यसेत्" इति पाठः–घ.ङ.। २. मन्त्रेषु–घ.ङ.। ३. इड–घ., इङ्घ–ङ.। ४. दद–ङ.। ५. जसमध्ये–घ.ङ.। ६. 'वर्णत्रय .... भेदयेत्' नास्ति–ग.। ७. वालीशान्ते भुजङ्गः स्यात्–घ.ङ.। ८. 'खड्गी ....न्तरम्' नास्ति–ग.। ९. इतः पूर्वं 'अनं' पाठः–घ.ङ.। १०. ऊष–घ.ङ.।

हतमध्यं समादाय झिण्टीशेन [१]नियोजयेत् ।
नगमध्यगतं गृह्य [२]घधमध्यासने न्यसेत् ॥
पुनश्च लयमध्यस्थं सूक्ष्ममस्तकमुद्धरेत् ।
केवलं सूक्ष्ममुद्धृत्य औरमध्यं द्विरुच्चरेत् ॥
अनन्तेन समाक्रान्तं क्रोधीशस्तदनन्तरम् ।
अनन्तमस्तकाक्रान्तं भयमध्यगतं ततः ॥
केवलं ठसमध्यस्थं [३]ङदमध्यगतं पुनः ।
सगमध्यं समादाय लयमध्ये नियोजयेत् ॥
[४]रक्षाकोष्ठगतं गृह्य झिण्टीशेन विभूषयेत् ।
[५]कफमध्यगतं गृह्य तदन्ते शाग्रमुद्धरेत् ॥
लाग्रासनसमायुक्तं कृत्वा भूयः समुद्धरेत् ।
हाग्रं केवलमुद्धृत्य पुनश्च नयमध्यगम् ॥
[६]शाग्रासनसमायुक्तं भूयः केवलमेव तत् ।
पुनश्च नगमध्यस्थं अक्रूरेण विभेदयेत् ॥
तदन्ते केवलः क्रोधी लयमध्यससूक्ष्मगः ।
छहमध्यं समादाय केवलं लृशमध्यगम् ॥
[७]यकारदक्षवर्णार्धं मस्तके तस्य कारयेत् ।
[८]रुहमध्यं समादाय फगमध्ये नियोजयेत् ॥
सद्योजातसमाक्रान्तं कृत्वा भूयः समुद्धरेंत् ।
केवलं जडमध्यस्थं [९]तठमध्यं तथा पुनः ॥

---

१.विभेदयेत्–घ.ङ.। २.घद्य–घ.ङ.। ३.दढ–घ.,दद्द–ङ.। ४.रक्षः–ग.। ५.खव–घ.ङ.। ६.साग्रा–घ.ङ.। ७.रकार–घ.ङ.। ८.ऋसमध्यं–घ.ङ.। ९.तढ–घ., तद–ङ.।

केवलं [1]रुसमध्यस्थं लाग्रं झिण्टीशसंयुतम् ।
लकुलीशं त्रिधा कृत्वा अर्घीशाक्रूरसंयुतम् ॥
पृथग्बीजत्रयमिदं पुनः स्यादछमध्यगम् ।
अक्रूरेण समाक्रान्तं कृत्वा चान्यं समुद्धरेत् ॥
अत्रि द्विस्थानगं कृत्वा लयमध्यासने स्थितम् ।
अनन्ताक्रूरसंयुक्तं प्रथमं परिकल्पयेत् ॥
[2]त्रिमूर्तिबिन्दुसंयुक्तं द्वितीयं परिकल्पयेत् ।
[3]तस्य द्वितीयमेवं स्यात्तदन्ते बीजराजकम् ॥
[4]डहमध्यं समादाय [5]दकारोत्तरसंस्थितम् ।
अर्घीशक्रूरसंयुक्तं बीजमेतत् समुद्धरेत् ॥
महासेनसमायुक्तो भृग्वीशस्तदनन्तरम् ।
आद्यबीजत्रयं पश्चाद्विलोमेन समुद्धरेत् ॥
एषा कामेश्वरी नित्या प्रतिपत्तिथिनायिका ।
पञ्चाशदक्षरी विद्या सर्वकामफलप्रदा ॥
द्वितीयतिथिनित्यायाः समुद्धारोऽधुनोच्यते ।
यथोक्तं **सिद्धनाथेन नवशत्यां** पदक्रमात् ॥
कौलं प्रणवमुद्धृत्य ततो भगभुगेपदम् ।
भगिनीतिपदं पश्चाद् भगोदरि ततः परम् ॥
[6]उद्धरेदक्षराण्यष्टौ भगमाले भगावहे ।
भगगुह्यपदं पश्चाद् भगयोनि ततः परम् ॥

---

१.राःख–घङ.। २.'त्रिमूर्ति....ल्पयेत्' नास्ति–ग.। ३.अस्या–घ.ङ.।४.ढसमध्य–घ.ङ.। ५.वका–घ.ङ.। ६.'उद्धरे ....परम्' नास्ति–ग.।

षडक्षरं ततः पश्चात् पदं भगनिपातनि ।
सर्वशब्दं समुद्धृत्य ततो भगवशङ्करि ॥
भगरूपपदं पश्चान्नित्यक्लिन्ने पदं ततः ।
भगस्वरूपे सर्वाणि भगानीति दशाक्षरम् ॥
मे ह्यानयेति वरदे रेतेपदमनन्तरम् ।
सुरेते च भगक्लिन्ने ततः क्लिन्नद्रवे पदम् ॥
क्लेदयेति समालिख्य द्रावयेति पदं लिखेत् ।
अमोघे पदमुद्धृत्य भगविच्चे विसर्गयुक् ॥
सविसर्गं क्षुभपदं क्षोभयेति पदं ततः ।
सर्वसत्त्वान् पदं दद्याद् भगेश्वरि ततः परम् ॥
आद्यं [1]प्रणवमुद्धृत्य [2]फान्तं रान्तोपरिस्थितम् ।
पञ्चमाग्रं स्वरभिन्नं कूटं बिन्दुविभूषितम् ॥
कुर्याज्जम्भे [च] मोहे च [3]वंभे क्लिन्ने चतुष्टयम् ।
कूटेनान्तरितं कृत्वा कूटान्ते [4]तं समुद्धरेत् ॥
क्लिन्ने पदं समुद्धृत्य सर्वाणि च भगानि च ।
आलिखेन्मेपदं पूर्वं तदन्ते वशमानय ॥
स्त्रीबीजं मान्मथं बीजं मायाबीजं तदन्तकम् ।
शतमेकं चतुस्त्रिंशद्वर्णानामिदमुद्धृतम् ॥
[5]काममध्यगतं गृह्य छदमध्यासने[6]स्थितम् ।
त्रिमूर्तिबीजसंयुक्तं प्रथमं परिकीर्तितम् ॥

---

१. हृदय–घ.ङ.। २. हान्तं–घ.ङ.। ३. 'वंभे ....ष्टयम्' नास्ति–ग.घ.। ४. भे–घ.ङ.। ५. मक–ग.। ६. नान्वितम्–घ.ङ.।

[1]वटमध्यगतं गृह्य कुर्यात् सूक्ष्मसमन्वितम् ।
[2]थणमध्यं समादाय तद्वामेन नियोजयेत् ॥

[3]रिहमध्यं समादाय रेफपृष्ठासनस्थितम् ।
सूक्ष्मेण मस्तकाक्रान्तं बिन्दुनोपरि भूषितम् ॥

[4]पाग्रं झिण्टीशसंयुक्तं केवलं [5]यभमध्यगम् ।
नैर्ऋत्यकोणगं गृह्य तमेव पुनरुद्धरेत् ॥

[6]चथमध्यासनस्थं तु कृत्वा भूयः समुद्धरेत् ।
झिण्टीशेन समायुक्तं [7]धवमध्यं समुद्धरेत् ॥

फकमध्यं समादाय शाग्रानन्तविभूषितम् ।
लकुलीशमनन्तान्तमन्तिमं परिकीर्तितम् ॥

नित्यक्लिन्नेयमुदिता तृतीया तिथिनायिका ।
एकादशाक्षरी विद्या सर्वसम्मोहि[8]नी स्थिता ॥

सद्योजातं समुद्धृत्य बिन्दुना मूर्ध्नि भूषितम् ।
अःखमध्यगतं गृह्य लाग्रासनसमन्वितम् ॥

ॐकारमस्तकाक्रान्तं द्वितीयं परिकीर्तितम् ।
जडमध्यं समादाय लयमध्यासनान्वितम् ॥

सद्योजातसमाक्रान्तं बिन्दुना मूर्ध्नि भूषितम् ।
[9]ऋसमध्यं समादाय चथमध्यासनस्थितम् ॥

---

१. पध–घ.ङ.। २. यश–घ.ङ.। ३. ऋह–घ.ङ.। ४. पात्रं–घ.ङ.। ५. भय–घ.ङ.।
६. षल–घ.ङ.। ७. धग–घ., घग–ङ.। ८. ह–ङ.। ९. रिस–ग.।

बिन्द्वनुग्रहसंयुक्तं चतुर्थं [१]परिकीर्तितम् ।
[२]आग्नेयकोष्ठकं गृह्य ङतमध्यासनस्थितम् ॥
बिन्द्वनुग्रहसंयुक्तं पञ्चमं परिकीर्तितम् ।
चजमध्यं समादाय लाग्रासनसमन्वितम् ॥
भुवनक्रूरसंयुक्तं पञ्चकं परिकीर्तितम् ।
छहमध्यं समादाय भुजङ्गासन[३]संस्थितम् ॥
सद्योजाताग्रसंयुक्तं बिन्दुना मूर्ध्नि भूषितम् ।
[४]षष्ठमं कथितं बीजं तदन्ते वह्निवल्लभा ॥
भेरुण्डा कथिता नित्या चतुर्थी [५]चाष्टवर्णका ।
सद्योजातं समुद्धृत्य अक्रूरेण [६]समन्वितम् ॥
मध्यकोष्ठकमादाय लाग्रासनसमन्वितम् ।
[७]चतुर्थस्वरसंयुक्तं [८]बिन्दुनादविभूषितम् ॥
बीजमेतत् समुद्धृत्य केवलं [९]साग्रमुद्धरेत् ।
जसमध्यं समादाय [१०]पात्रसूक्ष्मविभूषितम् ॥
घधमध्यमनन्ताक्तं खघमध्यं ससूक्ष्मकम् ।
[११]षझमध्यं समादाय राग्रभूतीशसंयुतम् ॥

---

१. कूटमुत्तमम्–घ.ङ.। २. 'आग्नेय ....कीर्तितम्' नास्ति–ग.। ३. संहितम्–ग.। ४. सप्तमं–घ. ङ.। ५. न[व]वर्णका–घ.ङ.। ६. समाहतम्–घ. ङ.। ७. ओंकारवामसंयुक्तं–घ. ङ.। ८. तदन्ते परिभूषितम्–घ. ङ.। ९. शाग्र–घ. ङ.। १०. याग्र–घ. ङ.। ११. "षझमध्यं . . . . विभेदयेत्". इत्यस्य स्थाने "शञमध्यममादाय रसमध्यासने स्थितम् । झिण्टीशमस्तकाक्रान्तं केवलं ञशमध्यगम् ॥ यभमध्यं समादाय महासेनेन भूषितम् । तदन्ते वह्निभार्या च रुद्राणी वह्निवासिनी ॥ सद्योजातं समादाय क्रूरमस्तकभूषितम् । सठमध्यगतं गृह्य अङमध्येन भेदितम् ॥" इति पाठः–घ. ङ.।

नमसा युतेन मुदिता पञ्चमी रन्ध्रवर्णका ।
ए ओ मध्यगतं गृह्य बिन्दुना मूर्ध्नि भूषितम् ॥

ठसमध्यं समादाय झिण्टीशेन विभेदयेत् ।
क्रूरेण मस्तकाक्रान्तं बीजमाज्ञाकरं परम् ॥

[१]फकारवामसंगृह्य महासेनेन भेदयेत् ।
तृतीयं वर्णमाख्यातं सञ्जीवनमिदं परम् ॥

नित्यक्लिन्नाख्यनित्याया द्वितीयादिदशाक्षरात्[२] ।
क्रमेण चाख्यो नित्याया महाविद्येश्वरी मता ॥

त्रयोदशाक्षरी सेयं षष्ठी नित्योदिता परा ।
[३]ॐफमध्यगतं गृह्य छदमध्ये निवेशितम् ॥

त्रिमूर्तिबिन्दुसंयुक्तं बीजं त्रैलोक्यवश्यदम् ।
[४]शिवदूती च विज्ञेया सचतुर्थी नमोऽन्तिका ॥

सप्ताक्षरेण मुदिता सप्तमी तिथिनायिका ।
भौतीशाग्रं बिन्दुसंयुक्तं प्रथमं परिकीर्तितम् ॥

[५]मकमध्यं [६]यवामस्थं त्रिमूर्तीन्दुसमायुतम् ।
द्वितीयं कथितं वर्णं विषोपविषनाशनम् ॥

हाग्रं सेनसमायुक्तं तृतीयं वर्णनायकम् ।
[७]खड्गमध्यं समालिख्य केवलं वरवर्णिनि ॥

---

१.हकार–घ.ङ.। २.रान्–घ.ङ.। ३. ओह–घ.,औह–ङ.। ४.शिवदूतीति विद्येयं स–घ.ङ.। ५.सजमध्यं–घ.ङ.। ६.लयमावश्यं त्रि–ग.। ७.झषमध्यं–घ.ङ.।

सद्योजातेन संयुक्तं [1]णकारोत्तरमुद्धरेत् ।
[2]ऊर्णवामं समादाय सूक्ष्मीशेन नियोजयेत् ॥

[3]णथमध्यं समादाय [4]व्यजमध्यासनस्थितम् ।
झिण्टीशेन समायुक्तं कथितं वर्णनायकम् ॥

शिखीशवाममादाय शाग्रासनसमन्वितम् ।
अनन्तमस्तकाक्रान्तं वर्णमेतदनन्तरम् ॥

[5]ओकमध्यं समादाय अनन्तेन तु भूषयेत् ।
रन्ध्रवर्णेयमुदिता त्वरिता त्वष्टमी मता ॥

कूर्मेशवाममुद्धृत्य बिन्दुयुक्तं तु कारयेत् ।
प्रथमं बीजमाख्यातं वाग्विलासप्रदायकम् ॥

भृग्वीशवामगं गृह्य [6]अत्रिवामासनस्थितम् ।
त्रिमूर्तिक्रूरसंयुक्तं [7]बीजक्ष्वेडापहारकम् ॥

[8]भृग्वीशोऽनुग्रहयुतो महासेनेन भूषितः[9] ।
नवमी तिथिनाथेयं [10]त्रिवर्णा कुलसुन्दरी ॥

[11]लयमध्यासनस्थात्री[12]युतं कृत्वा क्रमेण तु ।
श्रीकण्ठाग्रेण संयुक्तं प्रथमं क्रूरसंयुतम् ॥

---

१. शकारो–घङ.। २. 'ऊर्ण ....जयेत्' इत्यस्य स्थाने 'पदमध्यं समादाय त्रिमूर्तीशेन योजयेत् । सूक्ष्मीशेन समायुक्तं'–घ.ङ.। ३. थणमध्यं–घ.ङ.। ४. रमध्ये निवेशितं–घ.ङ.। ५. ओफमध्यं–घ.ङ.। ६. आदिवामा–घ.ङ.। ७. बीजं त्रैलोक्यमोहनम्–घ.ङ.। ८. श्वेताशपृष्ठमादाय महा–घ.ङ.। ९. इतः परम्– 'अनुग्रहेशसंयुक्तं खेदापहारकम्'–घ.ङ.। १०. नवार्णा–घ.ङ.। ११. लषमध्यासमश्चा–घ.। १२. त्री द्विधा कृत्वा–घ.ङ.।

त्रिमूर्ति[1]चन्द्रसंयुक्तं द्वितीयं [2]परिकीर्तितम् ।
[[3]ऊसमध्यगतं गृह्य अत्रिवामासनस्थितम् ॥
त्रिमूर्तिबिन्दुसंयुक्तं तृतीयं परिकीर्तितम् ।
हठमध्यं समादाय भुजङ्गासनसंस्थितम् ॥
अर्घीशाक्रूरसंयुक्तं चतुर्थं परिकीर्तितम् ।]
महासेनेन संयुक्तं हषमध्यं [4]च यत्नतः ॥
नित्या नित्येयमुदिता पञ्चार्णा दशमी मता ।
लकुलीशं भुजङ्गस्थं मूर्तिबिन्दुसमायुतम् ॥
[5]बीजमाद्यं समाख्यातं त्रैलोक्याकर्षणक्षमम् ।
सठमध्यं समादाय वालिपृष्ठसमाश्रितम् ॥
[6]झिण्टीशबिन्दुसंयुक्तं द्वितीयं बीजमुद्धृतम् ।
शिखीशोत्तरमादाय पिनाकीशाग्रसंयुतम् ॥
अमराक्रूरसंयुक्तं बीजं त्रैलोक्यमोहनम् ।
[7]चन्द्रवामं समादाय लयमध्यासने स्थितम् ॥
सद्योबिन्दुसमायुक्तं बीजमाकर्षणं परम् ।
अनन्ताक्रूरसंयुक्तं कृत्वा भूयः समुद्धरेत् ॥
भृग्वीशवाममादाय अत्रिवामासनस्थितम् ।
त्रिमूर्तिबिन्दुसंयुक्तं बीजं मेलापकं परम् ॥
अथमध्यगतं गृह्य अक्रूरेण समन्वितम् ।
बीजमेतत् समाख्यातं सप्तमं सर्वकामदम् ॥

---

१. 'चन्द्र' नास्ति–ग.। २. कल्पयेत्पुनः–घ.ङ.। ३. ऊष–ङ.। ४. तदन्त च–घ.ङ.। ५. 'बीज .... श्रितम्' नास्ति–घ. ङ.। ६. बीजझिण्टीशसंयुक्तं–घ. ङ.। ७. चण्डपृष्ठं समादाय–घ.ङ.।

ठहमध्यं समादाय अत्रिवामासनस्थितम् ।
[१]अर्घीशाक्रूरसंयुक्तमष्टमं परिकीर्तितम् ॥
सूक्ष्मयुक्तं मीनपृष्ठं नवमं परिकीर्तितम् ।
[२]थणमध्यं समादाय भुजङ्गग्रासनस्थितम् ॥
उमाकान्तस्य वामं स्यात् तदेकादशमक्षरम् ।
केवलस्त्रिद्वादशमो वर्णराजः प्रकीर्तितः ॥
भुजङ्गासनसंस्थस्त्रिर्भूयस्त्रयोदशम ईरितः ।
झिण्टीशेन समायुक्तो मीनवामं[३] तदन्ततः ॥
अमराक्रूरसंयुक्तो भकारोत्तरगस्ततः ।
आदिबीजद्वयं पश्चाद् विलोमेन समुद्धरेत् ॥
नित्या नीलपताकेयं बीजरूपा समुद्धृता ।
सप्तोत्तरदशार्णे[४]यमेकादशतिथीश्वरी ॥
सद्योजातो [५]बिन्दुयुक्तो नमोऽन्तः परिकीर्तितः ।
[६]मेषेशः केवलो ज्ञेयस्तदन्ते नु व्यवस्थितः ॥
महाकालः सेनयुक्तस्तृतीयः परिकीर्तितः ।
ऋतुरामोऽनन्तयुक्तस्तदन्ते वर्णनायकः ॥
व्योमो झिण्टीशसंयुक्तस्तदन्ते परिकीर्तितः ।
शाग्रासनसमायुक्तो बकेशस्तदनन्तरम् ॥
ङतमध्यः सूक्ष्मयुक्तस्तदन्ते संव्यवस्थितः ।
क्रोधीशोऽनन्तसंयुक्तो महाकालस्तदन्तकः ॥

---

१. अर्चीशक्रूर– ग.। २. थसमध्यं– घ.। ३. वामस्तदन्तरः– घ.ङ.। ४. शार्णोय– ग.। ५. बिन्दुसंयुक्तः प्रथमं परि– ग.। ६. 'मे ... संव्यवस्थितः' नास्ति– घ.ङ.।

लोहितेशः केवलः [१]स्यादाषाढी च तदन्ततः ।
अनन्तेन समायुक्तः सर्वकामफलप्रदः ॥

महासेनाग्रगो[२] वर्णो झिण्टीशेन समन्वितः ।
[३]क्रोधीशोऽनन्तसंयुक्तस्तदन्ते संव्यवस्थितः ॥

महाकालस्तथा भूयो बिन्द्वनन्[४]तेशसंयुतः ।
क्रोधीशोऽमरसंयुक्तस्तदन्ते [५]च समुद्धृतः ॥

झिण्टीशेन समायुक्तो मेषवामस्तदन्ततः ।
महाकालाग्रगो वर्णः केवलः स्यादनन्तरम् ॥

[६]पञ्चान्तकः केवलं स्यात् तदन्ते शाग्रमेव च ।
थणमध्यं सूक्ष्मयुक्तं तदन्ते संव्यवस्थितः ॥

ऊर्णवामो मूर्तियुक्तः पिनाकीशस्तदन्ततः ।
लोहितेशः केवलः स्यादकाराग्रस्तदनन्तरम् ॥

अनन्तेन समायुक्तस्त्वनन्तफलदायकः ।
उड्डीशेन समायुक्तः क्रोधीशस्तदनन्तरम् ॥

द्विमण्डः केवलः पश्चात् पं ता तस्य तथा पुनः ।
षट्वीशः केवलः पश्चाद् आषाढी सूक्ष्मसंयुतः ॥

लाग्रासनसमायुक्त आषाढी भौमिकान्वितः ।
सद्योजातेन संयुक्तः पिनाकीशस्तदन्ततः ॥

---

१. स्यादाधारीशस्तदन्ततः–घ.ङ.। २. ग्रतो वर्णो–ग.। ३. 'क्रोधी ....स्थितः' इत्यस्य स्थाने 'क्रमेश्वरीपदं गृह्य क्रोधीशस्तदनन्तगः'–घ.ङ.। ४. न्तेन संयुतः–ग.। ५. तु–घ.ङ.। ६. 'पञ्चा ....समुद्धरेत्' इत्यस्य स्थाने 'पञ्चान्तगस्ततः शाग्रस्थाग्रसूक्ष्मसमन्वितः। नीलपताकेति पदं संलिखेत्तदनन्तरम् ॥ त्रैलोक्यमोहनिपदमुद्धरेत्तदनन्तरम्। परमेति पदं गृह्य पश्चात्तोमरसंयुतम् ॥'–घ.ङ.।

क्रोधीशो वालियुक्तः स्यात्तदन्ते विनिवेशयेत् ।
अनन्तेशसमायुक्तः कूर्मेशः स्यात्ततः परम् ॥

सषिसूक्ष्मसमायुक्त उमाकान्तोऽपि तादृशः ।
मेषे ते केवलस्यायो यः सद्यःसमायुतः ॥

हाग्रस्त्वाषाढिना युक्तस्त्वमरेशसमन्वितः ।
याग्रं झिण्टीशसंयुक्तं तदन्ते च समुद्धरेत् ॥

वालीशासनगो मध्यो झिण्टीशेन समन्वितः ।
क्रूरामरसमायुक्तो मध्यगं [१]स्यादतः परम् ॥

तमेव वीप्सयेद् भूयो [२]जाग्रं केवलमन्ततः ।
थपृष्ठो केवलं[३] ते स्यात् मेषो झिण्टीशसंयुतः ॥

[४]णकारवाममादाय तदन्ते त्रिः समुद्धरेत् ।
तदन्ते केवलं मेषं मेषान्ते त्रिः समुद्धरेत् ॥

झिण्टीशेन समायुक्तं तदन्ते मध्यगं पुनः ।
झिण्टीशं मस्तके तस्य दत्त्वा [५]शन्यं समुद्धरेत् ॥

दण्ड्यग्रं समुपादाय लाग्रभूतीशसंयुतम् ।
भुजङ्गपुच्छमादाय सद्योजातेन योजयेत् ॥

क्रोधीशं बलिसंस्थं तु [६]भयमध्यमनन्तयुक् ।
खड्गं झिण्टीशसंयुक्तं नगमध्यं तु केवलम् ॥

---

१. स्यादनन्तरः– घ. ङ. । २. थाग्रकेवलमं तदा– घ. ङ. । ३. केवलान्ते– घ. ङ. ।
४. शकार– घ. । ५. रान्यं– घ. ङ. । ६. वभमध्य– घ. ङ. ।

केवलं [1]चणमध्यं तु दत्त्वा भूयः समुद्धरेत् ।
मकमध्यं समादाय क्रूरामरविभूषितम् ॥
शिखीशं समुपादाय [2]सोमेशार्धेन योजयेत् ।
शिखीशवाममादाय खड्गीशासनसंस्थितम् ॥
अनन्तेन समाक्रान्तं कृत्वा मध्यमगं तथा ।
नित्या नीलपताका[3]ख्या शतवर्णा षडुत्तरा ॥
माग्रयाग्रभुजङ्गाख्यतदग्रार्णान् समुद्धरेत् ।
अर्घीशानुग्रहेशानौ बिन्दुयुक्तौ तु[4] मस्तयोः ॥
नित्येयं विजयाख्या स्यात् षडर्णा द्वादशी मता ।
षड्भिरेकाक्षरी प्रोक्ता द्वादशी तिथिनायिका ॥
[5]कफमध्यं समादाय शाग्रयुक्तं तु कारयेत् ।
सद्योजातसमाक्रान्तं बिन्दुना मूर्ध्नि भूषितम् ॥
त्रयोदशी समाख्याता नित्येयं सर्वमङ्गला ।
एषा नित्या समाख्याता त्रयोदशी तिथीश्वरी[6]॥
अजमध्यगतं गृह्य क्रूरयुक्तं समुद्धरेत् ।
शजमध्यं [7]तदन्तं स्यात्तदन्ते [8]थाग्रमुद्धरेत् ॥
सद्योजातसमाक्रान्तं कृत्वा भूयः समुद्धरेत् ।
जडमध्यं केवलं स्यात् पञ्चान्तेशाग्रमेव च ॥
आषाढी सूक्ष्मसंयुक्तस्तदन्ते छहमध्यगः ।
खड्गीशानन्तसंयुक्तं कृत्वा चान्यं समुद्धरेत् ॥

---

१.शचमध्यं–घ.ङ.।२.सौ–घ.ङ.।३.कान्या शतार्णार्धा षडुत्तरम्–ग.।४.मुक(ख)स्तथा–ग.।५.खवमध्यं–घ.ङ.।६.तिथिनायिका–ग.।७.केवलं–घ.ङ.।८.याग्र–घ.ङ.।

ङदमध्यं समादाय अनन्तेन विभूषयेत् ।
[१]तहमध्यं समादाय [२]श्रीखण्डाग्रेण योजयेत् ॥
अत्रिवामं सूक्ष्मयुक्तं मेषेशं[३] च तथैव च ।
झिण्टीशेन समायुक्तमन्त्री(र्घी)शं च समुद्धरेत् ॥
खड्गीशः केवलोऽन्ते स्यात् पृष्ठस्थो झिण्टिसंयुतः ।
[४]साग्रः सूक्ष्मयुतं ते स्यात् स च मध्यतदन्तगः ॥
खड्गो भुजङ्गसंयुक्तो [५]द्विचण्डोऽहीशसंयुतः ॥
केवलं [६]थणमध्यस्तु[७] होग्रो बिन्दुसमायुतः ।
तत्पृष्ठो[८]ऽनन्तसंयुक्तस्तदन्तः परिकीर्तितः ॥
केवलो लयमध्यस्थो वर्णराजस्ततः परम् ।
अखमध्यगतं [९]गृह्य श्रीकण्ठाग्रसमन्वितम् ॥
भुजङ्गसूक्ष्मसंयुक्तं ततः परमुदाहृतम् ।
झिण्टीशेन समाक्रान्तः क्रोधीशः[१०] स्यात् ततः परम् ॥
[११]बहमध्यं समादाय [१२]भूतीशोत्तरशोभितम् ।
[१३]णपृष्ठं केवलं ग्राह्यं साग्रं झिण्टीशसंयुतम् ॥
केवलं दण्डिपृष्ठं स्यात् तदन्ते वर्णनायकम् ।
हाग्रं [१४]सूक्ष्मसमायुक्तं कृत्वा भूयः समुद्धरेत् ॥

---

१. तदमध्यं–घ. । २. श्रीकण्ठाग्रेण–ग. । ३. स च–ग. । ४. शाग्रं सूक्ष्मयुक्तान्ते स्यात् खवमध्य–घ.ङ. । ५. द्विरण्डोवीश–ग., द्विरर्णोऽहीस–घ. । ६. थसमध्यस्थष्फग्रो–घ. । ७. स्थष्हग्रो–ङ. । ८. 'ष्ठो' इत्यस्य परम्-'बिन्दु'–ग. । ९. ग्राह्य श्रीकण्ठोग्र–घ.ङ. । १०. शस्य ततः–ग. । ११. छदमध्यं–घ. । १२. भौतीशो–घ.ङ. । १३. णपृष्ठगोऽङ्के ग्राह्यं–ग. । १४. सूक्ष्मं च संयुक्तं–घ.ङ. ।

[1]ठाग्रं खड्गसमायुक्तं पिनाकी बिन्दुसंयुतम् ।
थाग्रं सूक्ष्मसमायुक्तं तदन्ते वर्णमुद्धरेत् ॥
हकारपृष्ठमादाय साग्रवर्णेन योजयेत् ।
पिनाकीशस्तदन्ते स्याद् वीप्सयेद्वर्णयुग्मकम् ॥
[2]लोहितेशं भुजङ्गेन युक्तमादौ तु दापयेत् ।
[3]वीप्सितश्चार्णयुग्मस्य प्रत्येकं वीप्सयेत्तु तत् ॥
बीजं नीलपताकाया[4]माद्यवर्णं समुद्धरेत् ।
क्रूरामरै[5]शसंयुक्तं मध्यकोष्ठगतं लिखेत् ॥
सोमेश्वरा[6]र्धसंयुक्तं शिखीशं वीप्सयेत्तदा[7] ।
[8]हाग्रं खड्गीशसंयुक्तमनन्तेन वि[9]भूषयेत् ॥
श्रीकण्ठाग्रसमायुक्तं लकुलीशं समुद्धरेत् ।
ज्वालामालिनी नित्येयमुद्धृता च चतुर्दशी ॥
पञ्चादशाक्षरी विद्या सर्वकामफलप्रदा ।
[10]बडमध्ये केवलं तु प्रथमं वर्णमुद्धरेत् ॥
क्रूरानुग्रहसंयुक्तं क्रोधीशं तदनन्तरम् ।
एकाक्षरसमाख्याता चित्रा पञ्चदशी स्मृता ॥
कामेश्वरी [11]च वज्रेशी नित्या [12]च भगमालिनी ।
सुन्दरी त्रिपुरा पूर्वाश्चतस्रः समयात्मिकाः ॥

---

१. छाग्रं–घ.ङ. । २. लोहितेंऽशु–ग. । ३. वीप्सितस्यां तु युग्म–घ.ङ. । ४. माध्यवर्णं–ग. । ५. रेण सं–घ.ङ. । ६. रार्कसं–घ.ङ. । ७. तथा–घ.ङ. । ८. हार्यख–घ.ङ. । ९. विभूषितम्– घ.ङ. । १०. छदमध्यं–घ.ङ. । ११. वज्रेश्वरी–ग. । १२. स्व–ग. ।

[1]कामेशीभगमालिन्यौ नित्या[2]देहगते उभे ।
वज्रेशीसुन्दरी[3]नित्ये उद्धृते **नेत्रगह्वरे** ॥

सद्यः पूर्वं समादाय अक्रूरेण [4]विभेदयेत् ।
प्रथमं बीजमाख्यातं सर्वाभीष्टफलप्रदम् ॥

मध्यकोष्ठगतं गृह्य भुजङ्गासनसंस्थितम् ।
त्रिमूर्तिबिन्दुसंयुक्तं द्वितीयं परिकीर्तितम् ॥

[5]मध्यमाग्रं केवलं स्यात् तृतीयो वर्णनायकः ।
साग्रं [6]भुजङ्गसानन्तं समध्यगामनन्तरम् ॥

भुजङ्गं बालिसंयुक्तं [7]भौतीशोत्तरसंयुतम् ।
[8]षष्ठं वर्णं समाख्यातं सप्तमं कल्प्यतेऽधुना ॥

वालीशपृष्ठमादाय तदमध्येन योजयेत् ।
साग्रः केवल एव स्याद्वर्णराजस्ततः परम् ॥

[9]त्र्युत्तरं सूक्ष्मसंयुक्तं तदन्ते वर्णमुद्धरेत् ।
[10]साग्रं केवलमुद्धृत्य हपृष्ठं रेफ[11]संयुतम् ॥

झिण्टीशसंयुतं कृत्वा [12]शार्णशाग्रेण संयुतम् ।
अनन्ताग्रयुतं लाग्रं उद्धृत्य पुनरुद्धरेत् ॥

---

१.कामेश्वरी–ग.।२.भेद उभे गते–ग.।३.'नित्ये उद्धृते' नास्ति–ग.।४.निवेदयेत्–ग.।५.मध्यगाग्रं–ग.,मध्यसाग्रं–ङ.।६.ङ्गसंयुक्तं चतुर्थं परिकीर्तितम्–ङ.,इतः परम्–'महासेनाग्रगं वर्णं श्रीकण्ठाग्रेण भूषयेत्' इत्यधिकः पाठः–घ.ङ.। ७.मौनीशो–ग.। ८.'षष्ठं ....योजयेत्' इत्यस्य स्थाने 'लाग्रदाग्रसमायुक्तं सप्तमं परिकीर्तितम् । शेतेशपृष्ठमादाय श्रीकण्ठाग्रेण योजयेत् ॥'–घ.ङ.। ९.त्र्योच्चरं–ग.,ऐणत्तरं–ङ.। १०.श्रीग्र–घ.ङ.। ११.संश्रितम्–घ.ङ.।१२.शायं षाग्रेण–ग.।

[1]योत्तरः केवलं ख्यातस्तदूर्ध्वे त्वर्णनायकः ।
छाग्रं धोत्तरसंयुक्तं कृत्वाऽन्यद्बीजमुद्धरेत् ॥
शिखीशाग्रं बिन्दुयुक्तं तत्परं परिकीर्तितम् ।
हपृष्ठं केवलं [2]भूयो यपृष्ठमपि तादृशम् ॥
याग्रं केवलं[3]मुद्धृत्य नाग्रवालियुतं भवेत् ।
[4]पञ्चान्तगं केवलं भूयस्थाग्रो झिण्टीशसंयुतः ॥
अस्या द्वितीयमुद्धृत्य [5]रिसमध्यं समुद्धरेत् ।
भुजङ्गपृष्ठसंयुक्तं सूक्ष्मक्रूरसमन्वितम् ॥
मेषो झिण्टीशसंयुक्तो भौतीशोऽक्रूरसंयुतः ।
हाग्रं वामं भुजङ्गस्थं [6]सद्योऽक्रूरविभूषितम् ॥
लोहिताग्रं सूक्ष्मयुक्तं थाग्रं त्वालियुतं पुनः ।
[7]कालः केवल एष स्यात्तदन्ते वर्णनायकः ॥
नैर्ऋत्यकोष्ठगः पश्चात् स एव लयमध्यगः ।
खड्गो झिण्टीशसंयुक्तः परस्तात् परिकीर्तितः ॥
[8]अस्या द्वितीयकोऽन्ते स्यान्मन्त्रस्यास्य विनिश्चयः ।
पञ्चत्रिंशाक्षरी प्रोक्ता सर्वकार्यार्थसाधिका ॥
चतुर्थी च नमोऽन्तः स्याद् वज्रनित्याद्वयं पुनः ।
वज्रेश्वरीति नित्येयं द्वितीया [9]परमेश्वरी ॥

---

१. न्योतरं–ग.। २. ग्राह्या–घ. ङ.। ३. लकं प्रोक्तं नायं वालि–ग.। ४. पं चं तं केवलं–ग.। ५. ऋद–घ., ऋह–ङ.। ६. स सद्यं बिन्दुभूषितम्–ग.। ७. भयमध्यं केवलं स्यात्त–ग.। ८. तस्या द्वितीयकौले स्यान्म–ग.। ९. समयेश्वरी–घ. ङ.।

मध्यमं कुलसुन्दर्याः प्रथमं परिकीर्तितम् ।
द्विरण्डः केवलान्तः स्यात् पञ्चान्तोऽपि हि तादृशः ॥

खड्गीशः केवलं भूय आषाढी[१] सूक्ष्मसंयुतः ।
नित्या नित्यं चतुर्थं स्यात् ततो मेषः ससूक्ष्मकः ॥

थाग्रो वालि[२]समायुक्तः क्रोधीशोऽनन्तसंयुतः ।
कालो झिण्टीशसंयुक्तः [३]साग्रं साग्रसमन्वितम् ।

भुजङ्गः सूक्ष्मसंयुक्तस्तदन्ते [४]संव्यवस्थितः ।
[५]भृग्वीशथाग्रसंयुक्तो भुजङ्गीशसमन्वितः ॥

त्रिमूर्तिक्रूरसंयुक्तस्त्रयोदशम ईरितः ।
हाग्रः केवल एव स्यात् शाग्रो [६]द्विलाग्रसंयुतः ॥

षष्ठस्थः केवलोऽन्तेऽस्य णपृष्ठः खड्गसंयुतः ।
[७]महासेनसमायुक्तो भुजङ्गीशस्तदन्ततः ॥

माग्रो भूतीशसंयुक्तो यपृष्ठः स्यादनन्तरम् ।
खड्गीशसूक्ष्मसंयुक्तो भौतीशाक्रूरसंयुतः ॥

आद्यं [८]बीजमथान्तेऽस्या द्वात्रिंशार्णा समुद्धृता
समयेशी चतुर्थी या विद्या त्रिपुरसुन्दरी ॥

## मुद्राबीजानि

अथेदानीं [९]स्वमुद्राणां बीजानि कथयाम्यहम् ।
रचितेयं त्रिखण्डाख्या सर्वसिद्धि[१०]फलाप्तये ॥

---

१. ढीषु नरिसंयुतः–ग.। २. समानन्तः–ग.। ३. षाग्रशाग्र–घ.ङ.। ४. सं व्य–ग.। ५. शिखीशवामस्थग्रयुतो–घ.ङ.। ६. लाग्रेण संयुतः–ग.। ७. 'महा ....क्रूरसंयुतः' इत्यस्य स्थाने "केवलः खड्ग एव स्यात्तत्पृष्ठः क्रूरसंयुतः। सोत्तरः केवलो ग्राह्यो यपृष्ठः सूक्ष्मसंयुतः ॥ लकुलीशेन संयुक्तं थाग्रोलासनस्थितः। स सूक्ष्ममध्ये तरः सूक्ष्मसंयुक्तस्तदन्ते परिकीर्तितः ॥ झिण्टीशेन समायुक्तं जपृष्ठयुगलं ततः।"–घ.ङ.। ८. बीजं विच्चे मन्मथान्त्यं सा द्वात्रिंशाक्षरी समु–ग.। ९. समुद्राणां–ग.। १०. फलेन हि–घ.ङ.।

पिनाकी दक्षमादाय वालिपुं[१]च्छेन योजयेत् ।
अनुग्रहोत्तरोपेतमक्रूरेण समन्वितम् ॥

सर्वसंक्षोभिणीमुद्राबीजं त्रैलोक्यमोहनम् ।
सूक्ष्मा[२]गृहीतं तद्बीजमनन्तेन समन्वितम् ॥

सर्वविद्राविणीमुद्राबीजमेतत्[३]प्रकाशितम् ।
[४]दारुणोत्तरमादाय [५]अत्रिवामासनस्थितम् ॥

अर्घीशाक्रूरसंयुक्तं बीजमाकर्षणं मतम् ।
भृग्वीशवाममादाय [६]ङदमध्यासनस्थितम् ॥

[७]सूक्ष्मेशाग्रसमायुक्तं सेनपुच्छविभूषितम् ।
सर्ववशकरीमुद्राबीजमेतत् समुद्धृतम् ॥

शिखीशवाममादाय महासेनेन योजयेत् ।
सर्वोन्मादकरीमुद्राबीजमुन्मादनं परम् ॥

[८]वज्रपुच्छं समादाय कूर्मदक्षासनस्थितम् ।
[९]बिन्दुमस्तकसंयुक्तं सद्योजातेन भूषितम् ॥

एतन्महाङ्कुशामुद्राबीजं साक्षात् समुद्धृतम् ।
भृग्वीशपुच्छमादाय श्वेतपुच्छासनस्थितम् ॥

क्रोधीशा[१०]ग्रसमायुक्तं भृगुदक्षिणयोजितम् ।
वालिपुच्छास[११]नारूढं झिण्टीशाक्रूरं[१२]भूषितम् ॥

---

१.पृष्ठेन–ग.। २.माग्रहान–घ.ङ.। ३.तत्प्रदर्शितः–घ.ङ.। ४.दारुकोत्तर–ग.। ५.अत्र–ग.। ६.दङमध्या–घ.ङ.। ७.सूक्ष्मसाग्र–ग.। ८.चण्डपुच्छं–घ.ङ.। ९.'बिन्दु .. .. भूषितम्' इत्यस्य स्थाने 'सद्योजातेन संयुक्तं बिन्दुना मूर्ध्नि भूषितम्'–घ.ङ.। १०.शाय समा–ग.। ११.च्छसमा–घ.ङ.। १२.संयुतम्–घ.ङ.।

सर्वसंक्षोभिणीमुद्राबीजमाज्ञाकरं परम् ।
भृग्वीशपुच्छमादाय तदग्रासनसंस्थितम् ॥
अनुग्रहेशसंयुक्तं बिन्दुनोपरि भूषितम् ।
बीजं तद्बीजमुद्राया जगद्बीजफलाप्तिदम् ॥
कूर्मवासं[१] समादाय सेनपृष्ठसमन्वितम्[२] ।
बीजं तद्योनिमुद्राया जगद्योनिफलाप्तिदम् ॥
एवं बीजानि मुद्राणां यथायोगं नियोजयेत् ।

## चतुराम्नायविद्योद्धारः

चतुराम्नायविद्यानामुद्धारोऽथ[३] प्रदर्श्यते ॥
श्वेतपृष्ठं[४] समादाय भृगुपृष्ठेन योजयेत् ।
थकारवामसंयुक्तं मूर्तिबिन्दुसमन्वितम्[५] ॥
विद्येयं रुद्रशक्त्याख्या सर्वाम्नायाधिनायिका ।
अनन्तदक्षमादाय [६]अत्रीशोत्तरसंस्थितम्[७] ॥
सद्योजातोत्तराक्रान्तं बिन्दुना मस्तकेऽङ्कितम् ।
[८]ञकारोत्तरमादाय झिण्टीशेन समन्वितम् ॥
तृतीयवर्णमाख्यातं चतुर्थमपि कथ्यते ।
[९]झषमध्यं समादाय [१०]ङदमध्यासनस्थितम् ॥
सूक्ष्माग्रं मस्तकाक्रान्तं बिन्दुनोपरि भूषितम् ।
[११]बीजमेतत्समाख्यातं त्रैलोक्याकृष्टिदायकम्[१२] ॥

---

१. वासो–ग., वामं–ङ.। २. पुच्छसमायुतम्–घ.ङ.। ३. द्याया उद्धारो–घ.ङ.। ४. पुच्छं–घ. ङ.। ५. सभूषितम्–घ. ङ.। ६. बिन्दुना मूर्ध्नि भूषितम्–घ. ङ.। ७. इतः परम्–'प्रथमं वर्णमाख्यातं द्वितीयमपि कथ्यते। ऋकारदक्षमादाय मुद्रागोत्तरसंस्थितम् ॥'–घ.ङ.। ८. लृकारो–घ.ङ.। ९. ऊष–घ.ङ.। १०. दङमध्य–घ.ङ.। ११. वज्र–घ.। १२. तुष्टिकारकम्–घ.ङ.।

केवलं याग्रमुद्धृत्य दण्डिपृष्ठं समुद्धरेत् ।
लकारं दक्षिणं गृह्य वालिपृष्ठेन योजयेत् ॥
[१]शाग्रं झिण्टीशसंयुक्तं तदन्ते परिकीर्तितम् ।
महासेनाग्रमादाय [२]त्रिमूर्त्यग्रेण योजयेत् ॥
[३]डकारदक्षिणं गृह्य झिण्टीशेन नियोजयेत् ।
[४]एतदन्ते मध्यकोष्ठं तदन्तासनसंस्थितम् ॥
सद्योजाताग्र[५]संयुक्तं बिन्दुनोपरि भूषितम् ।
एकादशाक्षरा[६] सेयं विद्या दक्षिणनायिका ॥
लकुलीशं तदग्रं च तदधो लाग्रमेव च ।
संलिख्य मस्तके तस्य भौतीशं बिन्दुसंयुतम् ॥
[७]दत्त्वा समुद्धृतं कूटं प्रथमं प्रणवं भवेत् ।
जग्राधो हाग्रमुद्धृत्य[८] तदधो भृगुपृष्ठगम् ॥
तस्याधो वालिपुच्छं च लिखित्वा तस्य मस्तके ।
त्रिमूर्तिबिन्दुसंयुक्तं द्वितीयं प्रणवं भवेत् ॥
मध्यकोष्ठकमुद्धृत्य[९] तदधः श्वेतपुच्छकम् ।
तदधो [१०]याग्रमुद्धृत्य दण्डिवामं ततोऽप्यधः ॥
त्रिमूर्तिबिन्दुसंयुक्तं शिरस्तस्य प्रकल्पयेत् ।
तृतीयं प्रणवं [११]ख्यातं कमलाप्तिफलप्रदम् ॥

---

१. साग्रं–ग.। २. मूर्ति ग्रेण–ग.। ३. ढकार–घ., ड्कार–ङ.। ४. तदन्ये मध्यकोष्ठान्ते तद–ग.। ५. ग्रमन्तिमं–घ.। ६. रा सर्पविद्या–घ.। ७. तत्र दत्त्वा समुद्धृत्य कूट–घ.ङ.। ८. त्य भृगुपृष्ठे गतः पुनः–घ.ङ.। ९. ष्ठसमु–घ.ङ.। १०. षाग्र–घ.ङ.। ११. प्रोक्तं–घ.ङ.।

[१]कममध्यं समुद्धृत्य कफमध्यं समुद्धरेत् ।
तस्याधश्चण्डमुद्धृत्य शिखीशानं ततोऽप्यधः ॥
लाग्रं तस्यासने दद्याद् झिण्टीशं शिरसि न्यसेत् ।
अक्रूरेण समाक्रान्तं चतुर्थं प्रणवं [२]व्रजेत् ॥
[३]अफमध्यं समादाय क्रोधदक्षे निवेशयेत् ।
खड्गीशं तदधो न्यस्य मस्तके[४]ऽनुग्रहेश्वरम् ॥
अक्रूरेण समाक्रान्तं पञ्चमं प्रणवं भवेत् ।
द्विरण्डं केवलं ग्राह्यं तदन्ते खाग्रगं तथा ॥
खड्गीशं केवलं भूयस्तदन्ते वालिदक्षिणम् ।
कुर्यात् [५]सूक्ष्मेशसंयुक्तं तदन्तेऽन्यत् समुद्धरेत् ॥
[मरुत्कोष्ठगतं गृह्य अक्रूरेण तु योजयेत् ।
झिण्टीशेन समायुक्तं भकाराग्रं समुद्धरेत् ॥]
तदन्ते तु नवात्मानं [६]नवात्मान्ते नवात्मिकाम् ।
[७]अक्रूरेश्वरसंयुक्तं भृगुवामं समुद्धरेत् ॥
छगलण्डयुतं छागं [८]सूक्ष्मणैव तु भेदयेत् ।
झिण्टीशमस्तकाक्रान्तं महासेनाग्रगं पुनः ॥
मध्यकोष्ठगमुद्धृत्य तदग्रासनसंयुतम् ।
चण्डं शिखीशसंयुक्तं तदधोऽपि निवेशयेत् ॥

---

१. कमुमध्यं– ग.। २. भवेत्– घ.ङ.। ३. औफ– घ.ङ.। ४. के तु ग्रहे– ग.। ५. सूक्ष्मसमायुक्तं– घ.ङ.। ६. नवान्तात्मे न– ग.। ७. अमरेशसमायुक्तं– घ.ङ.। ८. सूक्ष्मेशेन तु योजयेत्– घ.ङ.।

एतत् त्रिस्थानगं कृत्वाक्रूरं तच्छिरसि न्यसेत् ।
[१]अनङ्गं प्रथमे कुर्यात् त्रिमूर्तीशं द्वितीयके ॥
अनुग्रहं तु तार्तीयं यथायोगं [२]समुद्धरेत् ।
श्रीकण्ठः केवलो भूयस्तदग्रे शागगं पुनः ॥
सद्योजातसमायुक्तं तदन्ते दण्डिवामकम् ।
झिण्टीशेन समायुक्तं तदन्ते[३]ऽन्यत् समुद्धरेत् ॥
खड्गीशवाममादाय सद्योजातेन[४] योजयेत् ।
तदन्ते लाग्रमुद्धृत्य झिण्टीशेन नियोजयेत् ॥
एतदन्तेऽनन्तपुच्छं च केवलं [५]विनियोजयेत् ।
सद्योजातेन संयुक्तं पञ्चान्ताग्रं समुद्धरेत् ॥
भुजङ्गीशस्तदन्ते स्यादनन्तेन समन्वितः ।
उमाकान्तोत्तरं गृह्य अमरेशेन [६]पूजयेत् ॥
चण्डं सूक्ष्मेशसंयुक्तं तदन्ते तु प्रकल्पयेत् ।
आग्नेयकोष्ठकं गृह्य तदधः क्रोधदक्षिणम्[७] ॥
क्रोधाधो दण्डिवामं स्यात् क्रूरानन्त[८]समन्वितम् ।
बीजमेतत् समाख्यातं सञ्जीवनकरं परम् ॥
आकारहीन एकः स्यान्मूर्ति[९]र्युक्तिस्तदन्ततः ।
भृग्वीशोत्तरकं गृह्य सूक्ष्मेण परिभूषयेत् ॥

---

१. अनन्तं प्रथमं– घ. ङ. । २. च रेफगः– घ. ङ., इतः परम्– 'सरेफकम्'– ग. । ३. न्तेऽन्यं– घ. ङ. । ४. ते नियो– ग. । ५. विनिवेशयेत्– घ. ङ. । ६. भूषितम्– घ. ङ. । ७. क्षितम्– ग. । ८. विभूषितम्– घ. ङ. । ९. हीनस्त– घ. ङ. ।

उमाकान्तः सूक्ष्मयुक्तस्तदन्ते वर्णको भवेत् ।
वीप्सया वर्णयुग्मं स्यात् तदन्ते परिकीर्तितम् ॥
खड्गं सूक्ष्मयुतं कृत्वा कूर्मेशद्वयमुद्धरेत् ।
झिण्टीशेन समायुक्तं [१]द्वात्रिंशं वर्णकं भवेत् ॥
प्रणवैः परिहीनं [२]तद् विलोमान्तात् समुद्धरेत् ।
द्विचत्वारिंशते चैवं पश्चिमे समयेश्वरि ॥
[३]क्रोधीशाग्रं समुद्धृत्य शिखीशं तदधो न्यसेत् ।
भुजङ्गं तदधःस्थाने झिण्टीशं मस्तके न्यसेत् ॥
कालमस्तकमेतत्स्यात् पिण्डं पञ्चात्मकं परम् ।
वालिम[४]स्तकमुद्धृत्य मध्यकोष्ठगतं पुनः ॥
अनन्तम[५]स्तकाक्रान्तं तदन्ते कूर्ममुद्धरेत् ।
उमाकान्तसमायुक्तो दारुकस्तदनन्तरम् ॥
वालिं सद्यःसमायुक्तं पञ्चान्तं झिण्टिसंयुतम् ।
[६]षाग्रं खड्गीशसंयुक्तमर्घीशाग्रं तदन्ततः[७] ॥

**समयमन्त्रसमुद्धारः**

अतः परं समुद्धारं दर्शयिष्यामि सादरम् ।
षण्णां षोढादितत्त्वेषु मन्त्राणां [८]समयात्मनाम् ॥
सद्योजातं बिन्दुयुक्तं प्रथमं [९]परिकल्पयेत् ।
थणमध्यं समादाय अनन्तेन विभूषयेत् ॥

---

१. द्वात्रिंशद्वर्णकं– ग. । २. ते– ग. । ३. क्रोधं साग्रं– ग. । ४. पुस्त– ग. । ५. मस्तकं– ग. । ६. खाग्रं– ग. । ७. तदधोत्तरे– ग. । ८. समहात्मनाम्– ग. ॥ ९. परिकीर्तितम्– घ. ङ. ।

लाग्रं झिण्टीशसंयुक्तं तृतीयं वर्णमुद्धरेत् ।
आषाढीशं समादाय अमरेशेन[१] भूषयेत् ॥
वालीशदक्षिणं [२]गृह्य अनन्तेन नियोजयेत् ।
वालीपुच्छं समादाय झिण्टीशेन विभूषयेत् ॥
चतुर्थमस्य भूयोऽपि सप्तमं परिकीर्तितम् ।
अष्टमं च तृतीयं स्याद् वह्निजायामथोद्धरेत् ॥
तारानाम महाविद्या बौद्धानां समयेश्वरी ।
दशाक्षरा समुदिता जलेषु परिरक्षिता ॥
भौतीशाग्रं समादाय अक्रूरेण समाहृतम् ।
एषा विद्या समाख्याता [३]ब्रांह्मी समयपुङ्गवी ॥
[मध्यकोष्ठगतं गृह्य सद्योजाताग्रसंयुतम् ।
बिन्दुना भूषितं कुर्याद्बीजं प्रासादसंज्ञिकम् ॥
ततः शिवाख्या [४]ठेऽन्ता स्यात् पुनराद्यं नमोऽन्तगम् ।
शिवानां समयेशीयं विद्या मुक्तिफलप्रदा ॥]
मध्यकोष्ठगतं गृह्य भुजङ्गासनसंस्थितम् ।
अनन्तेन समाक्रान्तं बिन्दुनोपरि भूषितम् ॥
एतदोङ्कारहीनं तु त्रिमूर्तीशसमन्वितम् ।
द्वितीयं बीजमाख्यातं [५]सर्वपापप्रणाशनम् ॥
महासेनसमाक्रान्तं श्वेतपृष्ठं [६]तदन्ततः ।
सौरी समयविद्येयं त्र्यक्षरा समुदीरिता ॥

---

१. शेण योजयेत्–ग.। २. द्वन्द्वं–ग.। ३. ब्राह्मे समयपुङ्गवे–ग.। ४. ङेऽन्ता–ङ.।
५. 'सर्व .... समाक्रान्तं' नास्ति–घ.ङ.। ६. ससेनकम्–घ.ङ.।

आदौ वेदादिमुद्धृत्य तदन्ते नतिमुद्धरेत् ।
नारायणाख्या ङेयुक्ता वैष्णवी समयेश्वरी ॥
भौतीशानं समादाय अक्रूरेण तु मण्डयेत् ।
शाक्तानां समयेशीयं महायोनिरिति स्मृता ॥
बौद्धादिबाह्यतन्त्रेषु रहस्येष्वागमेषु च ।
या याः [१]प्राधान्यतो विद्या उद्धृताश्चन्द्रमोलना ॥
**श्रीविद्यानन्दनाथेन** ताः सर्वा **वर्णगह्वरे** ।
[२]मुद्रासंज्ञा कराख्याभिरग्रवामादिसंज्ञया ॥
उद्धृताः साधकेन्द्राणां सम्यग्विद्याफलाप्तये ॥

**॥ इति श्रीविद्यानन्दनाथविरचितायां [३]ज्ञानदीपविमर्शिन्यां श्रीत्रिपुरसुन्दरीपद्धत्यां मन्त्रोद्धारपद्धतिरेकादशी ॥**

■

१. प्राधानिका विद्या– ग.। २. रुद्रसंज्ञा– ग.। ३. श्रीत्रिपुरसुन्दरीपद्धत्यां ज्ञानदीपविमर्शिन्यां– घ.ङ.।

# चतुर्थं परिशिष्टम्

## न्यासपद्धतिः

### कुङ्कुमन्यासः

[1]अथवा पूर्वोक्तक्रमेण मातृकां विन्यस्य ततः कुङ्कुमन्यासमाचरेत् । तृतीय-बीजपुटितां च विन्यस्य पुनः प्रथमद्वितीयबीजे उक्त्वा मातृकाक्षरमेकैकं तृतीय-बीजं च योज्य न्यसेत् । अयं कुङ्कुमन्यासः ।

### भूतलिपिन्यासः

अथ भूतलिपिन्यासमाचरेत् । ऐं ह्रीं श्रीं अः इः उः ऋः लृः ब्रह्मणे नमः । एः ऐः ओः औः विष्णवे नमः । हः यः रः वः लः रुद्राय नमः । ङः कः खः घः गः प्रजेशाय नमः । ञः चः छः झः जः इन्द्राय नमः । नः तः थः धः दः वरुणाय नमः । मः पः फः भः बः सोमाय नम इति मूलाधारनाभिहृदयकण्ठेषु प्राग्याम्यवरुणोदङ्मुखेषु न्यसेत् क्रमेण । ऐं ह्रीं श्रीं शः इच्छाशक्त्यै नमः । षः ज्ञानशक्त्यै नमः । सः क्रियाशक्त्यै नम इत्याधारहृदयमूर्धसु । ह्रीं श्रीं प्रभूतायै नमः । ह्रीं श्रीं विमलायै नमः । ह्रीं श्रीं सारायै नमः । ह्रीं श्रीं समाराध्यायै नमः । ह्रीं श्रीं परमसुखायै नम इति दक्षकट्यां सवामांसकटिहृत्सु न्यसेत् । हः यः रः वः लः हृदयाय नमः । ङः कः खः घः गः शिरसे स्वाहा । ञः चः छः झः जः शिखायै वषट् । णः टः ठः ढः डः कवचाय हुं । नः तः थः धः दः नेत्रत्रयाय वौषट् । मः पः फः भः बः अस्त्राय फट् । अत् शब्दब्रह्मऋषिः अत् श्रीभूतलिपि च्छन्दः अत् मूलप्रकृतिर्देवता । पूर्ववन्न . . . भिन्नवर्गाणि मूला-धारस्वाधिष्ठानमणिपूरकानाहतविशुद्धिखण्डिकाभ्रूमध्यललाटब्रह्मरन्ध्रेषु अर्ल इति बीजपुटितानि विन्यस्य शः षः सः अर्ल इच्छाज्ञानक्रियाशक्तिभ्यो नमः । तत्रैव अः इः उः ऋः लृः एः ऐः ओः औः इति स्वरान् त्रिप्रणवपूर्वकान् अर्ल इति

---

*१. "मुद्रानवकं प्रदर्श्य ध्यानं कुर्यात्" (पृ. ५१) इत्यतः परमपि न्यासप्रपञ्चो दृश्यते—ख. ग. घ. ङ. । सोऽयमत्र चतुर्थपरिशिष्टत्वेन स्थापितः ।*

श्रीभूतलिपिबीजपुटितान् न्यसेत् । इत्थमुपर्यपि सर्वत्र हः यः रः वः लः इत्यूर्ध्व-प्राग्दक्षिणपश्चिमोत्तरमुखेषु त्रिप्रणवपूर्वकान् विन्यसेत् । ङः कः खः घः गः इति कराग्रतन्मूलमध्याङ्गुलिमूलमणिबन्धकेषु विन्यस्य एवं चवर्गटवर्गतवर्गान् वाम-करदक्षवामपादेषु न्यसेत् । एवं पवर्गं जठरदक्षवामपार्श्वनाभिपृष्ठेषु न्यसेत् । शः षः सः इत्याधारहृदयभ्रूमध्येषु न्यसेत् । एवमेतान् प्रणवादिश्रीभूतलिपिबीज-पुटितान् पूर्वोक्तविपरीतक्रमेण सः षः शः इत्यादिकान् तत्तत्स्थानेषु विन्यसेत् ।

## विघ्नरतिन्यासः

अथ [1]विघ्नरतिन्यासः । अं विघ्नेशरतिभ्यां नमः । आं विघ्नराजश्रीभ्यां नमः । इं विनायकश्रीभ्यां नमः । ईं शिवोत्तमतुष्टिभ्यां. । उं विघ्नकृत्सरस्वतीभ्या. । ऊं विघ्नकर्तृरतिभ्यां. । ऋं गणनायककान्तिभ्यां. । ॠं एकदन्तकामिनीभ्यां. । लृं द्विजिह्वमोहिनीभ्यां नमः । ॡं गजवक्त्रजटीभ्यां. । एं निरञ्जनतीव्राभ्यां. । ऐं कप-र्दिजटाभ्यां. । ओं दीर्घमुखाम्बिकाभ्यां. । औं शङ्खवर्णानन्दाभ्यां नमः । अं वृषभ-ध्वजदीर्घमुखीभ्यां. । अः गणनाथकामरूपिणीभ्यां. । कं गजेन्द्रभ्रान्तिभ्यां. । खं शूर्पकर्णजयिनीभ्यां. । गं त्रिलोचनसत्याभ्यां. । घं लम्बोदरविघ्नेशीभ्यां. । ङं महा-नन्दमुखीभ्यां. । चं चतुर्मुखकान्तिभ्यां. । छं सदाशिवमदविह्वलाभ्यां. । जं आमो-दविकटाभ्यां. । झं दुर्मुखघूर्णिताक्षिभ्यां. । ञं सुमुखभूताभ्यां. । टं प्रमोदपूताभ्यां. । ठं एकपादसतीभ्यां. । डं द्विपेन्द्ररतिभ्यां. । ढं शूरमानुषीभ्यां. । णं वीरमकरध्व-जीभ्यां. । तं षण्मुखविकटाक्षिभ्यां. । थं वरदभ्रुकुटीभ्यां. । दं वामदेवलज्जाभ्यां. । धं वक्रतुण्डदीर्घघोणाभ्यां. । नं द्विरण्डकधनुर्धराभ्यां. । पं सेनानीयामिनीभ्यां. । फं ग्रामणीरात्रिभ्यां. । बं मत्तवाहनाभ्यां. । भं विमत्तवाहनाभ्यां. । मं मत्तवाहनचप-लाभ्यां. । यं जटीचपलाक्षिभ्यां. । रं मुण्डऋत्विग्भ्यां. । लं खड्गिदुर्गाभ्यां. । वं वरेण्यसुभगाभ्यां. । शं वृषवाहनशिशुप्रजाभ्यां. । षं भक्ष्यप्रियदुर्गाभ्यां. । सं गणे-श्वरकालजिह्वाभ्यां. । हं मेघनादानन्दाभ्यां. । ळं कङ्कालजिह्वाभ्यां. । क्षं गणेश्वर-गुहप्रियाभ्यां नमः ।

---

1. *विघ्नरतिन्यासोऽयमन्यासु मातृकासु गणेशन्यासत्वेनोपन्यस्तः ।*

## कामरतिन्यासः

अथ कामरतिन्यासः। ऐं ह्रीं श्रीं क्लीं अं कामरतिभ्यां नमः। ४ आं कामप्रीतिभ्यां नमः। ४ इं कान्तकामिनीभ्यां नमः। ४ ईं कान्तिमन्मोहिनीभ्यां नमः। ४ उं कामाङ्ककमलालयाभ्यां नमः। ४ ऊं कामचारविलासिनीभ्यां नमः। ४ ऋं कामकल्पलताभ्यां नमः। ४ ॠं कामुकश्यामलाभ्यां नमः। ४ लृं कामवर्धकशुचिस्मिताभ्यां नमः। ४ लॄं कामविस्मिताक्षिभ्यां नमः। ४ एं कामप्रियाभ्यां नमः। ४ ऐं रममाणलेलिहाभ्यां नमः। ४ ओं रतिनाथदिगम्बराभ्यां नमः। ४ औं रतिप्रियवामाभ्यां नमः। ४ अं रात्रिनाथकुब्जाभ्यां नमः। ४ अः रमाकान्तधराभ्यां नमः। ४ अं आं असिताङ्गभैरवब्रह्माणीभ्यां नम इति न्यासस्थाने व्यापकम्। ४ कं रममाणनित्याभ्यां नमः। ४खं निशाचरकल्याणीभ्यां नमः। ४ गं नन्दमोहिनीभ्यां नमः। ४ घं नन्दसुरोत्तमाभ्यां नमः। ४ ङं नन्द्युत्तमाभ्यां नमः। ४ इं ईं रुरुमाहेन्द्रीभ्यामिति न्यासस्थाने व्यापकम्। ४ चं नन्दयितृसुलावणीभ्यां नमः। ४ छं पञ्चबाणमालिनीभ्यां नमः। ४ जं रतिसखकलहप्रियाभ्यां नमः। ४ झं पुष्पधन्वैकाक्षिभ्यां नमः। ४ ञं महातनुमुखीभ्यां नमः। ४ उं ऊं चण्डकौमारीभ्यां व्यापकम्। ४ टं भ्रमणनीलीभ्यां नमः। ४ ठं भ्रमणजटिलीभ्यां नमः। ४ डं

---

### घ.ङ.पाठः

#### कामरतिन्यासः

अं कामरतिभ्यां नमः। आं कामप्रीतिभ्यां नमः। इं कामकान्तिभ्यां नमः। ईं कान्तिमन्मोहनीभ्यां नमः। उं कामघ्नकमलालयाभ्यां नमः। ऊं कामचारविलासिनीभ्यां नमः। ऋं कर्मकल्पलतिकाभ्यां नमः। ॠं कामुकश्यामलतिकाभ्यां नमः। लृं कामवर्धकशुचिस्मिताभ्यां नमः। लॄं कामविस्मिताभ्यां नमः। एं र(का)मविशालाक्षीभ्यां नमः। ऐं रमणलेलिहाभ्यां नमः। ओं रतिनाथदिगम्बराभ्यां नमः। औं रतिप्रियरा(वा)माभ्यां नमः। अं रात्रिनाथकुब्जाभ्यां नमः। अः रमाकान्तधराभ्यां नमः। कं र[म]माणनि[त्या]भ्यां नमः। खं निशाच[र]कल्याणीभ्यां नमः। गं गणमोहनीभ्यां नमः। घं नन्दकमहाभ्यां नमः। ङं नन्दिनीसुरतोत्सवाभ्यां नमः। चं नन्दयितृसुलावण्याभ्यां नमः। छं निचरमर्दिनीभ्यां नमः। जं रतिसंघकलाप्रियाभ्यां नमः। झं पुष्पधन्वि-एकाक्षिभ्यां नमः। ञं महाधनुःसुमुखीभ्यां नमः। टं भ्रामणाभ्यां नमः। ठं भ्रामणजटिनीभ्यां नमः। डं भ्रममाणमालिनीभ्यां नमः। ढं

भ्रममाणमालिनीभ्यां नमः। ४ ढं भ्रमशिवाभ्यां नमः। ४ णं भ्रान्तमुग्धाभ्यां नमः। ४ ॠं ॠं क्रोधवैष्णवीभ्यां व्यापकम्। ४ तं भ्रमिकरमाभ्यां नमः। ४ थं भ्रमभ्रामणीभ्यां नमः। ४ दं भ्रान्तवारलोलाभ्यां नमः। ४ धं भ्रमवाहदीर्घजिह्वीभ्यां नमः। ४ नं मोहनरतिप्रियाभ्यां नमः। ऌं ॡं उन्मत्तवाराहीभ्यां व्यापकम्। ४ पं मोहकपलाशाक्षिभ्यां नमः। ४ फं मोहगृहिणीभ्यां नमः। ४ बं मोहविवर्दकशुचिस्मिताभ्यां नमः। ४ भं मदनानुरूपधराभ्यां नमः। ४ मं मन्मथमालाभ्यां नमः।४ एं ऐं कपालीन्द्राणीभ्यां व्यापकम्। ४ यं मातङ्गह्लादनीभ्यां नमः। ४ रं भृङ्गनायकविश्वतोमुखीभ्यां नमः। ४ लं गायकनन्दिनीभ्यां नमः। ४ चं गीतिकररमाभ्यां नमः। ४ ओं औं भीषणचामुण्डाभ्यां व्यापकम्। ४ शं गर्तककालीभ्यां नमः। ४ षं क्ष्वेलककालकण्ठाभ्यां नमः। ४ सं उन्मत्तकन्दरीभ्यां नमः। ४ हं नृत्तजयमेघश्यामलाभ्यां नमः। ४ ळं विलासिझषाभ्यां नमः। ऐं ह्रीं श्रीं क्लीं क्षं कामवर्तनोन्मत्ताभ्यां नमः। ४ अं अः संहारमहालक्ष्मीभ्यां व्यापकम्।

**श्रीकण्ठादिन्यासः**

अथ श्रीकण्ठादि। ऐं ह्रीं श्रीं श्री अं श्रीकण्ठेशमूर्तिपूर्णोदरीशक्तीभ्यां नमः। ३ आं अनन्तविजयाभ्यां नमः। ३ इं सूक्ष्मशाल्मलीभ्यां नमः। ३ ईं त्रिमूर्ति-

---

भ्रमणिशिखाभ्यां नमः। णं भ्रान्तमुग्धाभ्यां नमः। तं भ्रमणिरमाभ्यां नमः। थं भृङ्गिभूमाभ्यां नमः। दं भ्रान्तचारलोलाभ्यां नमः। धं भ्रमरवचञ्चलाभ्यां नमः। नं मोहनदीर्घजिह्वाभ्यां नमः। पं मोचकरतिप्रियाभ्यां नमः। फं मुग्वलोलाक्षीभ्यां नमः। बं मोहनवर्द्धनभङ्गिभ्यां नमः। भं मदनकपटनाभ्यां नमः। मं मन्मथनरूपाभ्यां नमः। यं भङ्गमालाभ्यां नमः। रं भृङ्गनायकफंसिनीभ्यां नमः। लं गायकविश्वतोमुखीभ्यां नमः। वं गीतिजनन्दिनीभ्यां नमः। शं वर्तकरमणभ्यां नमः। षं क्षोलककान्तिभ्यां नमः। सं उन्मत्तकाल[क]ण्ठाभ्यां नमः। हं म(न)र्तकवृकोदराभ्यां नमः। ळं विलासिमेघश्यामाभ्यां नमः। क्षं कामवर्द्धनपयोभ्यां नमः। इति मातृ[का]स्थानेषु न्यसेत्।

**श्रीकण्ठन्यासः**

एवमा[यु]धादि विन्यस्य रुद्रशक्त्यन्वितां मातृकां न्यसेत्। तद्यथा—

श्रीकण्ठादिन्यासस्य दक्षिणामूर्तिऋषिर्गायत्रीच्छन्दोऽर्धनारीश्वरदेवता हलो बीजानि स्वराः शक्तयो ज्ञानार्थे विनियोगः। एतेषां स्थाननियमस्तु—

लोलाभ्यां नमः। ३ उं अमरेशवर्तुलाक्षिभ्यां नमः। ३ ऊं अर्घीशदीर्घघोणाभ्यां नमः। ३ ऋं भारभूतिसुदीर्घमुखीभ्यां नमः। ३ ॠं अतिथीशगोमुखीभ्यां नमः। ३ लृं स्थाण्वीशदीर्घजिह्विकाभ्यां नमः। ३ लॄं हरेशकुण्डोदरीभ्यां नमः। ३ एं झण्डीशोर्ध्वकेशीभ्यां नमः। ३ ऐं भौतिकविकृतमुखीभ्यां नमः। ३ ओं सद्योजातज्वालामुखीभ्यां नमः। ३ औं अनुग्रहेशोल्कामुखीभ्यां नमः। ३ अं अक्रूरेशश्रियामुखीभ्यां नमः। ३ अः महासेनविद्यामुखीभ्यां नमः। ३ कं क्रोधीशमहाकालीभ्यां नमः। ३ खं चण्डेशसरस्वतीभ्यां नमः। ३ गं पञ्चान्तकसर्वसिद्धिगौरीभ्यां नमः। ३ घं शिवोत्तमत्रैलोक्यविद्यामुखीभ्यां नमः। ३ ङं एकरुद्रमन्त्रशक्तिभ्यां नमः। ३ चं कूर्मेशात्ममयिशक्तिभ्यां नमः। ३ छं एकनेत्रभूतमातृभ्यां नमः। ३ जं चतुराननलम्बोदरीभ्यां नमः। ३ झं अजेशद्राविणीभ्यां नमः। ३ ञं सर्वेशनागरीभ्यां नमः। ३ टं सोमेशखेचरीभ्यां नमः। ३

---

ऋषिर्गुरुत्वाच्छिरसैव धार्यः छन्दोऽक्षरत्वाद्रसनागतं स्यात्।
धियाऽवगन्तव्यतया सदैव हृदि प्रतिष्ठा(दिष्टा) मनुदेवता च॥ इति।

(प्र. सा. ६.२)

हसां हृदयाय नमः। हसीं शिरसे स्वाहा। हसूं शिखायै वषट्। हसैं कवचाय हुं। हसौं नेत्रत्रयाय वौ[ष]ट्। हसः अस्त्राय फट्। इत्यङ्गन्यासः। इति विधाय चिन्तयेत्—

सिन्दूरकाञ्चनसमोभव(य)भागमर्ध-
नारीश्वरं गिरिसुताहरभूषचिह्नम्।
पाशाभयाक्षवलयेष्टदहस्तमेवं
स्मृत्वा न्यसेत् सकलवाञ्छितवस्तुसिद्ध्यै॥

(प्र. सा. ७.२३)

इति ध्यात्वा न्यसेत्—

अं श्रीकण्ठपूर्णोदरीभ्यां नमः। आं अनन्तविजयाभ्यां नमः। इं सूक्ष्मशाल्मलीभ्यां नमः। ईं त्रिमूर्तीशलोलाक्षीभ्यां नमः। उं अमरेशवर्तुलाक्षीभ्यां नमः। ऊं अर्घीशदीर्घघोणाभ्यां नमः। ऋं भारभूतीशदीर्घमुखीभ्यां नमः। ॠं अतिथीशशोमुखीभ्यां नमः। लृं स्थाण्वीशदीर्घजिह्वाभ्यां नमः। लॄं हरेण(श)कुण्डोदरीभ्यां नमः। एं झण्टीश-ऊर्ध्वकेशीभ्यां

ठं लाङ्गलीशमञ्जरीभ्यां नमः। ३ डं दारु[णेश]रूपिणीभ्यां नमः। ३ ढं अर्धनारीश्वरवीरिणीभ्यां नमः। ३ णं उमाकान्तकाकोदरीभ्यां नमः। ३ तं आषाढीशपूतनाभ्यां नमः। ३ थं डिण्डीशभद्रकालीभ्यां नमः। ३ दं अत्रीशयोगिनीभ्यां नमः। ३ धं मीनेशशङ्खिनीभ्यां नमः। ३ नं मेषेशगर्जिनीभ्यां नमः। ३ पं लोहितेशकालरात्रिभ्यां नमः। ३ फं शिखीशकुण्डिनीभ्यां नमः। ३ बं छगलण्डेशकपर्दिनीभ्यां नमः। ३ भं द्विरण्डेशवज्राभ्यां नमः। ३ मं महाकालेशजयाभ्यां नमः। ३ यं बालीशसुमुखीश्वरीभ्यां त्वगात्मने ओन्नमश्शिवाय। ३ रं भुजङ्गेशरेवतीभ्यां रुधिरात्मने.। ३ लं पिनाकीशमाधवीभ्यां मांसात्मने.। ३ वं. खड्गीशवारुणीभ्यां मेदात्मने.। ३ शं बकेशवायवीभ्यां अस्थ्यात्मने.। ३ षं श्वेतेशरक्षोवधारिणीभ्यां मज्जात्मने.। ३ सं भृग्वीशसहजयाभ्यां शुक्लात्मने.। ३ हं लगुलीशमहालक्ष्मीभ्यां प्राणात्मने.। ३ ळं शिवेशव्यापिनीभ्यां लिङ्गात्मने.। ऐं ह्रीं श्री क्षं संवर्तकेशमूर्तिमहामायाभ्यां क्रोधात्मने नमः शिवाय।

---

नमः। ऐं भौतिकेशविभूतिमुखीभ्यां नमः। ओं सद्योजातेशज्वालामुखीभ्यां नमः। औं अनुग्रहेश-उल्कामुखीभ्यां नमः। अं अक्रूरश्रीश्रीमुखीभ्यां नमः। अः महासेनसद्विद्यामुखीभ्यां नमः। कं क्रोधीशमहाकालीभ्यां नमः। खं चण्डेशसरस्वतीभ्यां नमः। गं पञ्चान्तकेशसर्वसिद्धिभ्यां नमः। घं शिवोन्मेषत्रैलोक्यविद्याभ्यां नमः। ङं एकरुद्रेशमन्त्रशक्तिभ्यां नमः। चं कूर्मे[श]शक्तिभ्यां नमः। छं एकनेत्रेशभूताभ्यां नमः। जं चतुराननेशलम्बोदरीभ्यां नमः। झं अजेशद्राविणीभ्यां नमः। ञं संवेशनगरीभ्यां नमः। टं सोमेशखेचरीभ्यां नमः। ठं लाङ्गलीशमञ्जरीभ्यां नमः। डं दारुणेशरूपिणीभ्यां नमः। ढं अर्धनारीशवीरणीभ्यां नमः। णं उमाकान्तशरादनीभ्यां नमः। तं आधारीशपूतनाभ्यां नमः। थं दण्डीशभद्रकालीभ्यां नमः। दं अत्रीशयोगिनीभ्यां नमः। धं मीनेशशङ्खिनीभ्यां नमः। नं मेषगर्जिनीभ्यां नमः। पं लोहितेशकालरात्रिभ्यां नमः। फं शिखण्डीशकुर्दिनीभ्यां नमः। बं छगलण्डेशकपर्दिनीभ्यां नमः। भं द्विरण्डेशवक्रकालीभ्यां नमः। मं महाकालेशजयाभ्यां नमः। यं वालीशसुमुखीभ्यां नमः। रं अङ्गीशरेवतीभ्यां नमः। लं पिनाकीशमाधवीभ्यां नमः। वं खड्गीशवारुणीभ्यां नमः। शं बकेशवायवीभ्यां नमः। षं श्वेतेशरक्षोवधारणीभ्यां नमः। सं भृग्वीशसहजाभ्यां नमः। हं लकुलीश[ल]क्ष्मीभ्यां नमः। ळं शिवेशव्यापिनीभ्यां नमः। क्षं संवर्तकेशमहामायाभ्यां नमः। इति श्रीकण्ठादिन्यासं मातृकास्थानेषु न्यसेत्।

## ग. न्यासपद्धतिः

[[1]अथ न्यासमाचरेत्—

न्यासं निर्वर्तयेद् देवि षोढान्यासपुरःसरम्।
गणेशैः प्रथमो न्यासो द्वितीयस्तु ग्रहैः स्मृतः ॥
नक्षत्रैश्च तृतीयः स्याद् योगिनीभिश्चतुर्थकः ।
राशिभिः पञ्चमो न्यासः षष्ठः पीठैर्निगद्यते ॥
षोढान्यासस्त्वयं प्रोक्तः सर्वत्रैवापराजितः ।
एवं यो न्यस्तगात्रस्तु स पूज्यः सर्वयोगिभिः ॥
नास्त्यस्य पूज्यो लोकेषु पितृमातृमुखो जनः ।
स एव पूज्यः सर्वेषां स स्वयं परमेश्वरः ॥
षोढान्यासविहीनं यं प्रणमेदेष पार्वति ।
सोऽचिरान्मृत्युमाप्नोति नरकं च प्रपद्यते ॥

(यो. हृ. ३. ८-१३)

### गणेशन्यासः

ऐं ह्रीं श्रीं अं विघ्नेश्वरश्रीभ्यां नमः—शिरसि, ऐं ह्रीं श्रीं आं विघ्नराजह्रीभ्यां नमः—मुखमण्डले, ऐं ह्रीं श्रीं इं विनायकतुष्टिभ्यां नमः—दक्षिणनेत्रे, ऐं ह्रीं श्रीं ईं शिवोत्तमशान्तिभ्यां नमः—वामनेत्रे, ऐं ह्रीं श्रीं उं विघ्नहृत्पुष्टिभ्यां नमः—दक्षकर्णे, ऐं ह्रीं श्रीं ऊं विघ्नकर्तृसरस्वतीभ्यां नमः—वामकर्णे, ऐं ह्रीं श्रीं ऋं गणनायकरतिभ्यां नमः—दक्षनासापुटे, ऐं ह्रीं श्रीं ॠं गणनाथमेधाभ्यां नमः—वामनासापुटे, ऐं ह्रीं श्रीं ऌं एकदन्तकान्तिभ्यां नमः—दक्षगण्डे, ऐं ह्रीं श्रीं ॡं द्विदन्तकामिनीभ्यां नमः—वामगण्डे, ऐं ह्रीं श्रीं एं गजवक्त्रमोहिनीभ्यां नमः—ऊर्ध्वोष्ठे, ऐं ह्रीं श्रीं ऐं

१. उदयपुरमातृकायां ३९ ख. पत्रतो न्यासप्रकरणमेवं प्रारभते । कोष्ठस्थः पाठः (पृ. २१५-२१७) ख. नास्ति ।

निरञ्जरा[नजटा]भ्यां नमः—अधरोष्ठे, ऐं ह्रीं श्रीं ओं कपर्दितीव्राभ्यां नमः—ऊर्ध्व-दन्तपङ्क्तौ, ऐं ह्रीं श्रीं औं दीर्घमुखज्वालिनीभ्यां नमः—अधोदन्तपङ्क्तौ, ऐं ह्रीं श्रीं अं शङ्कुकर्णनन्दिनीभ्यां नमः—मस्तकोर्ध्वे, ऐं ह्रीं श्रीं अः वृषध्वजसुवत्साभ्यां नमः—आस्ये, ऐं ह्रीं श्रीं कं गणनाथकामरूपिणीभ्यां नमः—दक्षबाहुमूले, ऐं ह्रीं श्रीं खं गजेन्द्रोग्राभ्यां नमः—दक्षकूर्परे, ऐं ह्रीं श्रीं गं शूर्पकर्णजयिनीभ्यां नमः—दक्षमणिबन्धे, ऐं ह्रीं श्रीं घं त्रिनेत्रसत्याभ्यां नमः—दक्षकराङ्गुलिमूले, ऐं ह्रीं श्रीं ङं लम्बोदरविघ्नेशानीभ्यां दक्षपाणिनखाग्रे, ऐं ह्रीं श्रीं चं महानन्दस्वरूपिणीभ्यां नमो वामबाहुमूले, ऐं ह्रीं श्रीं छं चतुर्मूर्तिकामदाभ्यां नमो वामबाहुकूर्परे, ऐं ह्रीं श्रीं जं सदाशिवमदविह्वलाभ्यां नमो वामबाहुमणिबन्धे, ऐं ह्रीं श्रीं झं आमोदविकटाभ्यां नमो वामकराङ्गुलिमूले, ऐं ह्रीं श्रीं ञं दुर्मुखघूर्णिताननाभ्यां नमो वामपाणिनखाग्रे, ऐं ह्रीं श्रीं टं सुमुखभूतिभ्यां नमो दक्षपादोरुमूले, ऐं ह्रीं श्रीं ठं प्रमोदभूमिभ्यां नमो दक्षपादजानुनि, ऐं ह्रीं श्रीं डं एकपादसतीभ्यां नमो दक्षपादगुल्फे, ऐं ह्रीं श्रीं ढं द्विजिह्वरमाभ्यां नमो दक्षपादाङ्गुलिमूले, ऐं ह्रीं श्रीं णं शूरमानुषीभ्यां नमो दक्षपाद-नखाग्रे, ऐं ह्रीं श्रीं तं वीरमकरध्वजाभ्यां नमो वामपादोरुमूले, ऐं ह्रीं श्रीं यं षण्मुखविकर्णाभ्यां नमो वामपादजानुनि, ऐं ह्रीं श्रीं दं वरदभृकुटीभ्यां नमो वामपा-दगुल्फे,. ऐं ह्रीं श्रीं धं वामदेवलज्जाभ्यां नमः वामपादाङ्गुलिमूले, ऐं ह्रीं श्रीं नं वक्रतुण्डदीर्घघोणाभ्यां नमो वामपादनखाग्रे, ऐं ह्रीं श्रीं पं द्विरण्डकधनुर्धराभ्यां नमो पार्श्वे, ऐं ह्रीं श्रीं फं सेनानीयामिनीभ्यां नमो वामपार्श्वे, ऐं ह्रीं श्रीं बं ग्रामणीरात्रिभ्यां नमः पृष्ठे, ऐं ह्रीं श्रीं भं मत्तचन्द्रकान्ताभ्यां नमो नाभौ, ऐं ह्रीं श्रीं मं विमत्तशशिप्र-भाभ्यां नमो जठरे, ऐं ह्रीं श्रीं यं मत्तवाहनलोलाभ्यां नमो वक्षसि, ऐं ह्रीं श्रीं रं जटीशचपललोचनाभ्यां नमो दक्षदोर्मूले, ऐं ह्रीं श्रीं लं मुण्डिऋद्धिभ्यां नमो वाम-दोर्मूले, ऐं ह्रीं श्रीं वं खड्गिदुर्भगाभ्यां नमोऽपरगले, ऐं ह्रीं श्रीं शं वरेण्यसुभगाभ्यां नमो दक्षकक्षे, ऐं ह्रीं श्रीं षं वृषकेतनशिवाभ्यां नमो वामकक्षे, ऐं ह्रीं श्रीं सं भक्षप्रियदुर्गाभ्यां नमः पादयुग्मे, ऐं ह्रीं श्रीं हं गणेशगुहप्रियाभ्यां नमो पाण्योः, ऐं ह्रीं श्रीं ळं मेघनादकालीभ्यां नमो जठराननयोः, ऐं ह्रीं श्रीं क्षं गणेश्वरकालजिह्वाभ्यां नमः सर्वाङ्गसन्धिषु ।

तरुणादित्यसङ्काशान् गजवक्त्रांस्त्रिलोचनान् ।

पाशाङ्कुशवराभीतिहस्तान् शक्तिसमायुतान् ॥

एतांस्तु विन्यसेद् देवि मातृकान्यासवत् प्रिये ।

(यो. हृ. ३.२०-२२)

इति गणेशन्यासं विधाय ग्रहन्यासं कुर्यात् ।]

**ग्रहन्यासः**

आदिवर्गमुक्त्वा सूर्याय नम इति हृदयाधः । यादि[वर्ग]मुक्त्वा सोमाय नमः । कादि अङ्गारकाय नमः । चादि शुक्राय नमः । टादि बुधाय नमः । तादि बृहस्पतये नमः । पादि शनैश्चराय नमः । शं षं सं हं राहवे नमः । ळं क्षं केतवे नमः ।

स्वरैस्तु सहितं सूर्यं हृदयाधस्तु विन्यसेत् ।

बिन्दुस्थाने सुधासूतिं यादिवर्णचतुष्टयैः ॥

भूपुत्रं लोचनद्वन्द्वे कवर्गाधिपतिं प्रिये ।

हृदये विन्यसेच्छुक्रं चवर्गाधिपतिं पुनः ॥

हृदयोपरि विन्यस्य टवर्गाधिपतिं बुधः ।

बृहस्पतिं कण्ठदेशे तवर्गाधिपतिं प्रिये ॥

नाभौ शनैश्चरं चैव पवर्गेशं सुरेश्वरि ।

वक्त्रे चैव चतुर्वर्णैः सहितं राहुमेव च ॥

---

**ग. पाठ**

**ग्रहन्यासः**

अथ **ग्रहन्यासः** — ॐ अं आं इं ईं उं ऊं ऋं ॠं लृं लॄं एं ऐं ओं औं अं अः श्रीसूर्याय रेणुकायै नमो हृन्मध्ये, यं रं लं वं चन्द्राय अमृतायै नमो भ्रुवोर्मध्ये, कं खं गं घं ङं मङ्गलाय वामायै लोचनद्वये, चं छं जं झं ञं बुधाय ज्ञानरूपायै नमो हृदयोपरि, टं ठं डं ढं णं बृहस्पतये यशस्विन्यै नमो कण्ठदेशे, तं थं दं थं नं शुक्राय शाङ्कर्यै नमो वक्त्रे, पं फं बं भं मं शनैश्चराय शक्त्यै नमो नाभौ, शं षं सं हं राहवे कृष्णायै नमो वक्त्रे, ळं क्षं केतवे धूम्रायै नमो पादयोः ।

ळक्षकारान्वितं केतुं पायौ देशे च विन्यसेत् ।
ललाटे दक्षनेत्रे च वामे कर्णद्वये पुनः ॥
पुटयोर्नासिकायां च कण्ठे स्कन्धद्वये तथा ।
पश्चात् कौर्परयुग्मे च मणिबन्धद्वये तथा ॥
स्तनयोर्नाभिदेशे च कटिद्वन्द्वे ततः परम् ।
ऊरुयुग्मे तथा जान्वोर्जङ्घयोश्चरणद्वये ॥
ज्वलत्कालानलप्रख्या वरदाभयपाणयः ।
नतिपाण्योऽश्वनीपूर्वाः सर्वाभरणभूषिताः ॥
एतास्तु विन्यसेद्देवि स्थानेष्वेषु सुरार्चिते ।

(यो. हृ. ३.२१-२९)

## नक्षत्रन्यासः

अं आं अश्विनीनक्षत्रदेवतायै नमः । इं भरणीनक्षत्रदेवतायै नमः । ईं उं ऊं कृत्तिकानक्षत्रदेवतायै नमः । ऋं ॠं लं लूं रोहिणीनक्षत्रदे. । एं मृगशीर्षनक्षत्रदे. । ऐं आर्द्रानक्षत्रदे. । ओं औं पुनर्वसुनक्षत्रदे. । कं पुष्यनक्षत्रदे. । खं गं आश्लेषानक्षत्रदे. । घं ङं मघानक्षत्रदेवतायै नमः । चं पूर्वानक्षत्रदेवतायै. । छं जं उत्तरानक्षत्रदे. ।

---

रक्तं श्वेतं तथा रक्तं रक्तं पीतं च पाण्डुरम् ।
धूम्रं कृष्णं तथा धूम्रं भावयेद् रविपूर्वकान् ॥

(नि. षो. ८.२६)

इति ग्रहन्यासं कृत्वा नक्षत्रन्यासं कुर्यात् ।

### नक्षत्रन्यासः

अथ नक्षत्रन्यासः—अं आं अश्विन्यै नमो ललाटे, इं भरण्यै नमो दक्षनेत्रे, ईं उं ऊं कृत्तिकायै नमो वामनेत्रे, ऋं ॠं लृं लॄं रोहिण्यै नमो दक्षकर्णे, एं मृगशिरायै नमो वामकर्णे, ऐं आर्द्रायै नमो दक्षनासापुटे, ओं औं पुनर्वसवे नमो वामनासापुटे, कं पुष्याय नमः कण्ठे,

झं ञं हस्तनक्षत्रदे. । टं ठं चित्रानक्षत्रदे. । डं स्वातिनक्षत्रदे. । ढं णं विशाखानक्षत्र-दे. । तं थं दं अनुराधानक्षत्रदेवता. । धं ज्येष्ठानक्षत्रदे. । नं पं फं मूलनक्षत्रदे. । बं पूर्वाषाढानक्षत्रदेवता. । भं उत्तराषाढानक्षत्रदेवता. । मं श्रवणनक्षत्र. । यं रं श्रविष्ठा-नक्षत्रदेवता. । लं शतभिषानक्षत्रदेवता. । वं शं पूर्वभाद्रपदानक्षत्रदेवता. । षं सं हं उत्तराभाद्रपदानक्षत्रदेवता. । अं अः ळं क्षं रेवतीनक्षत्रदेवतायै नमः ।

### योगिनीन्यासः

विशुद्धौ हृदये नाभौ स्वाधिष्ठाने च मूलके ।
आज्ञायां धातुनाथाश्च न्यस्तव्याः स्थितिदेवताः ॥
अमृतादियुताः सम्यक् स्थानेष्वेषु सुरेश्वरि ।

---

खं गं आश्लेषायै नमो दक्षिणांसे, घं ङं मघायै नमो वामांसे, चं पूर्वाफल्गुन्यै नमो दक्षकूर्परे, छं जं उत्तराफल्गुन्यै नमो वामकूर्परे, झं ञं हस्ताय नमो दक्षमणिबन्धे, टं ठं चित्रायै नमो वाममणिबन्धे, डं स्वात्यै नमो दक्षहस्ततले, ढं णं विशाखायै नमो वामहस्ततले, तं थं अनुराधायै नमो नाभौ, दं धं ज्येष्ठायै नमो कटिप्रदेशे, नं पं फं मूलाय नमो वामकटिप्रदेशे, बं पूर्वाषाढायै नमो दक्षोरौ, भं उत्तराषाढायै नमो वामोरौ, मं श्रवणाय नमो दक्षजानुनि, यं रं धनिष्ठायै नमो वामजानुनि, लं शतभिषायै नमो दक्षजङ्घायाम्, वं शं पूर्वाभाद्रपदायै नमो वामजङ्घायाम्, षं सं हं उत्तरभाद्रपदायै नमो दक्षपादे, ळं क्षं अं अः रेवत्यै नमो वामपादे ।

ज्वलज्ज्वालाग्निसङ्काशा वरदाभयपाणयः ।
नतिपाण्योऽश्विनीपूर्वाः सर्वाभरणभूषिताः ॥

(यो. हृ. ३. २८-२९)

इति नक्षत्रन्यासः ।

### योगिनीन्यासः

अथ योगिनीन्यासः—ऐं ह्रीं श्रीं डां डीं डूं डैं डौं डः डमलवरयूं डाकिनी(नि) मां रक्ष रक्ष मम त्वचां रक्ष रक्ष सर्वसत्त्ववशङ्करि देवि आगच्छ आगच्छ इमां पूजां गृह्ण गृह्ण ऐं घोरे देवि ह्रीं सः परमघोरे हूं घोरतरे एह्येहि नमश्चामुण्डे ड र ल क स हैं श्रीमहात्रिपुर-सुन्दरि वरदे विच्चे देवि विशुद्धपीठस्थविशुद्धडाकिनि विशुद्धनाथदेवश्रीपादुकाभ्यो नमः ।

ऐं ह्रीं श्रीं अं अमृतायै नमः, आं आकर्षिण्यै नमः, इं इन्द्राण्यै नमः, ईं ईशान्यै नमः, उं उमायै नमः, ऊं ऊर्ध्वकेसरिण्यै नमः, ऋं ऋद्धिदायै नमः, ॠं ॠषायै नमः, लृं लृकायै नमः,

[डाकिनी राकिनी चैव लाकिनी काकिनी तथा ॥
साकिनी हाकिनी चैव स्वरानुक्रमतो न्यसेत् ।]
पादे लिङ्गे तथा कुक्षौ हृदये बाहुमूलयोः ॥
दक्षिणं पार्श्वमारभ्य वामपार्श्वावसानकम् ।
(यो. हृ. ३. ३०-३३)

---

लूं लूषायै नमः, एं एकपादायै नमः, ऐं ऐश्वर्यात्मिकायै नमः, ओं ओङ्कारिण्यै नमः, औं औषधात्मिकायै नमः, अं अम्बिकायै नमः, अः अक्षरात्मिकायै नम इत्यपि कण्ठस्य मध्ये परस्परं ध्येयाः ।

रक्ताक्षीं रक्तवर्णां पशुजनभयकृच्छूलखट्वाङ्गहस्तां
वामे खेटं दधानां चषकमपि सुधापूरितं चैकवक्त्राम् ।
अत्युग्रामुग्रदंष्ट्रामरिकुलमथिनीं पायसान्ने प्रसक्तां
कण्ठस्थानेऽमृताद्यैः परिवृतवपुषां भावयेड्डाकिनीं ताम् ॥

अथ **राकिनीन्यासः**—ऐं ह्रीं श्रीं रां रीं रूं रैं रौं रः रमलवरयूं राकिनि मां रक्ष रक्ष मद्रक्तं रक्ष रक्ष सर्वसत्त्ववशङ्करि देवि आगच्छ आगच्छ इमां पूजां गृह्ण गृह्ण ऐं घोरे देवि ह्रीं सः परमघोरे हूं घोरतरे एह्येहि नमश्चामुण्डे डरलकसहैं श्रीमहात्रिपुरसुन्दरि वरदे विच्चे देवि अनाहतपीठस्थ(स्थे) अनाहतराकिनि अनाहतनाथदेवश्रीपादुकाभ्यो नम इति हृदये रक्ते एतद्वेष्टकत्वे[न] ।

ऐं ह्रीं श्रीं कं कालरात्र्यै नमः, ऐं ह्रीं श्रीं खं खातीतायै नमः, ऐं ह्रीं श्रीं गं गायत्र्यै नमः, ऐं ह्रीं श्रीं घं घण्टाधारिण्यै नमः, ऐं ह्रीं श्रीं ङं. ङार्णात्मिकायै नमः, ऐं ह्रीं श्रीं चं चण्डायै नमः, ऐं ह्रीं श्रीं छं छायायै नमः, ऐं ह्रीं श्रीं जं जयायै नमः, ऐं ह्रीं श्रीं झं झङ्कारिण्यै नमः, ऐं ह्रीं श्रीं ञं ज्ञानरूपायै नमः, ऐं ह्रीं श्रीं टं टङ्कहस्तायै नमः, ऐं ह्रीं श्रीं ठं ठङ्कारिण्यै नम इत्यादि हृत्परितः ।

श्यामां शूलाब्जहस्तां डमरुकसहितां तीक्ष्णवज्रं वहन्तीं
देवीं रक्तां त्रिनेत्रां भृकुटि[वि]लसद्दंष्ट्रदन्तप्रभाभिः ।
दीप्तां तां देवदेवीं हृदयकमलगां रक्तधात्वैकनाथां
सिद्धान्नेषु प्रसक्तां मधुमदमुदितां चिन्तयेत्तां प्रसन्नाम् ॥

अथ **लाकिनीन्यासः**—ऐं ह्रीं श्रीं लां लीं लूं लैं लौं लः लमलवरयूं लाकिनि मां रक्ष रक्ष मम मांसं रक्ष रक्ष सर्वसत्त्ववशङ्करि देवि आगच्छ आगच्छ इमां पूजां गृह्ण गृह्ण ऐं घोरे देवि ह्रीं सः परमघोरे हूं घोरतरे एह्येहि नमश्चामुण्डे डरलकसहैं श्रीमहात्रिपुरसुन्दरि वरदे विच्चे देवि मणिपूरकपीठस्थे मणिपूरकलाकिनि मणिपूरकनाथदेवश्रीपादुकाभ्यो नम [इति]नाभौ मांसे च एतद्वेष्टकत्वेन ।

ऐं ह्रीं श्रीं डं डामर्यै नमः, ऐं ह्रीं श्रीं ढं ढङ्कारिण्यै नमः, ऐं ह्रीं श्रीं णं णाकिन्यै नमः, ऐं ह्रीं श्रीं तं तामस्यै नमः ऐं ह्रीं श्रीं थं स्थाण्व्यै नमः, ऐं ह्रीं श्रीं दं दाक्षायिण्यै नमः, ऐं ह्रीं श्रीं धं धात्र्यै नमः, ऐं ह्रीं श्रीं नं नन्दायै नमः, ऐं ह्रीं श्रीं पं पार्वत्यै नमः, ऐं ह्रीं श्रीं फं फेत्कारिण्यै नम इत्यपि नाभेः परितः।

कृष्णां देवीं त्रिवक्त्रां त्रिनयनसहितां दंष्ट्रिणीमुग्ररूपां
वज्रं शक्तिं च दण्डाभयवरदकरां दक्षवामे दधानाम्।
ध्यात्वा नाभिस्थपद्मे दशदलविलसत्कर्णिके लाकिनीं तां
मांसस्थां गौडभक्तोत्सुकहृदयवतीं विन्यसेत् साधकेन्द्रः॥

एता लाकिनीं परितो ध्येयाः।

अथ **काकिनीन्यासः**—ऐं ह्रीं श्रीं कां कीं कूं कैं कौं कः कमलवरयूं काकिनि मां रक्ष रक्ष मम मेदो रक्ष रक्ष सर्वसत्त्ववशङ्करि देवि आगच्छ आगच्छ इमां पूजां गृह्ण गृह्ण ऐं घोरे देवि ह्रीं सः परमघोरे हूं घोरतरे एह्येहि नमश्चामुण्डे डरलकसहैं महात्रिपुरसुन्दरि वरदे विच्चे देवि स्वाधिष्ठानपीठस्थे स्वाधिष्ठानकाकिनि स्वाधिष्ठाननाथदेवश्रीपादुकाभ्यो नम इति स्वाधिष्ठानपद्मे मज्जायामेतद्वेष्टकत्वेन।

ऐं ह्रीं श्रीं बं बन्धिन्यै नमः, ऐं ह्रीं श्रीं भं भद्रकाल्यै नमः, ऐं ह्रीं श्रीं मं महामायायै नमः, ऐं ह्रीं श्रीं यं यशस्विन्यै नमः, ऐं ह्रीं श्रीं रं रमायै नमः, ऐं ह्रीं श्रीं लं लम्बोष्ठ्यै नमः।

स्वाधिष्ठानाख्यपद्मे रसदलविलसत्काकिनीं मज्जसंस्थां
पाशं शूलं कपालं डमरुकमभयं धारिणीं पीतवर्णाम्।
दध्यन्ने सक्तचित्तां सुरवरनमितां वारुणीमत्तचित्तां
षट्पत्रे बादिलान्तैः परिवृतवपुषीं भावयेत् काकिनीं ताम्॥

एताः काकिनीं [परितो] ध्येयाः।

अथ **शा(सा)किनीन्यासः**—ऐं ह्रीं श्रीं सां सीं सूं सैं सौं सः समलवरयूं साकिनि मां रक्ष रक्ष ममास्थि रक्ष रक्ष सर्वसत्त्ववशङ्करि देवि आगच्छ आगच्छ इमां पूजां गृह्ण गृह्ण ऐं घोरे देवि ह्रीं सः परमघोरे हूं घोरतरे एह्येहि नमश्चामुण्डे डरलकसहैं श्रीमहात्रिपुरसुन्दरि वरदे विच्चे एता आधारपीठस्थे आधारसाकिनि आधारनाथदेवश्रीपादुकाभ्यो नम इति मूलाधारस्थानेऽस्थिनि एतद्वेष्टकत्वेन।

ऐं ह्रीं श्रीं वं वरदायै नमः, ऐं ह्रीं श्रीं शं श्रियै नमः, ऐं ह्रीं श्रीं षं षण्ढायै नमः, ऐं ह्रीं श्रीं सं सरस्वत्यै नम इत्यपि मूलाधारस्थाने परितः।

देवीं ज्योतिःस्वरूपां त्रिनयनविलसत्पञ्चवक्त्रां सुदंष्ट्रां
हस्ताम्भोजेस्व(षु) पाशं शृणिमपि दधतीं पुस्तकं ज्ञानमुद्राम्।

## राशिन्यासः

अं आं इं ईं मेषराशिदेवताभ्यो नमः । उं ऊं ऋं वृषभराशिदेवताभ्यो नमः । ॠं मिथुनराशिदेवताभ्यो नमः । एं ऐं कर्कटकराशि. । ओं औं सिंहराशि. । शं षं सं हं ळं क्षं अं अः कन्याराशि. । कं खं गं घं ङं तुलाराशि. । चादि वृश्चिकराशि. ।

---

मूलाधारस्थपद्मे निखिलपशुजनोन्मादिनीमस्थिसंस्थां
मुद्गान्ने प्रीतियुक्तां मधुमदमुदितां चिन्तयेत्तां प्रसन्नाम् ॥

एताः शा(सा)किनीं [परितो] ध्येयाः ।

अथ हाकिनीन्यासः—ऐं ह्रीं श्रीं हां हीं हूं हैं हौं हः हमलवरयूं हाकिनि मां रक्ष रक्ष सर्वसत्त्ववशङ्करि देवि आगच्छ आगच्छ इमां पूजां गृह्ण गृह्ण ऐं घोरे देवि ह्रीं सः परमघो[रे] हूं घोरतरे एह्येहि नमश्चामुण्डे डरलकसहैं श्रीमहात्रिपुरसुन्दरि वरदे विच्चे देवि आज्ञापीठस्थे कुसुममालिनि आज्ञानन्दनाथश्रीपादुकाभ्यो नम [इति] बिन्दुस्थाने शुक्रमज्जायां एतद्वेष्टकत्वेन ।

ऐं ह्रीं श्रीं हं हंसवत्यै नमः, ऐं ह्रीं श्रीं क्षं क्षमावत्यै नमः ।

बिन्दुस्थां शुक्लवर्णां डमरुकसहितामक्षसूत्रं कपालं
विद्यामुद्रां दधानां त्रिनयनविलसद्वक्त्रषट्कैश्च युक्ताम् ।
हादिक्षान्तैः प्रसक्तामभिमतफलदां शुद्धमज्जास्थिरूपां
देवीं देवेन्द्रवृन्दारकनुतिनमितां हाकिनीं भावयेत्ताम् ॥

## राशिन्यासः

अथ **राशिन्यासः**—ऐं ह्रीं श्रीं अं आं इं ईं प्राणात्मने रक्तवर्णाय मेषाय नमो दक्षगुल्फे, ऐं ह्रीं श्रीं उं ऊं ऋं ॠं अपानात्मने श्वेतवर्णाय वृषभाय नमो दक्षजानुनि, ऐं ह्रीं श्रीं लृं लॄं व्यानात्मने चित्र(हरिद्)वर्णाय मिथुनाय नमो दक्षवृषणे, ऐं ह्रीं श्रीं एं ऐं उदानात्मने पाण्डुरवर्णाय कर्कटकाय नमो दक्षजठरे, ऐं ह्रीं श्रीं ओं औं अं अः समानात्मने चित्रवर्णाय सिंहाय नमो दक्षकन्धरे, ऐं ह्रीं श्रीं कं खं गं घं ङं नागरूपायै सितवर्णायै कन्यायै नमो दक्षशिरसि, ऐं ह्रीं श्रीं चं छं जं झं ञं कूर्मरूपायै पिशङ्गवर्णायै तुलायै नमो वामशिरसि, ऐं ह्रीं श्रीं टं ठं डं ढं णं कृकररूपाय पिङ्गलवर्णाय वृश्चिकाय नमो वामकन्धरे, ऐं ह्रीं श्रीं तं थं दं धं नं देवदत्तरूपाय बभ्रुवर्णाय धनुषे नमो वामजठरे, ऐं ह्रीं श्रीं पं फं बं भं मं धनञ्जयरूपाय कर्बुरवर्णाय मकराय नमो वामवृषणे, ऐं ह्रीं श्रीं यं रं लं वं शं षं सं जीवात्मरूपाय धूमलवर्णाय कुम्भाय नमो वामजानुनि, ऐं ह्रीं श्रीं हं क्षं परमात्मरूपाय अगरुवर्णाय मीनाय नमो वामगुल्फे ।

टादि धनुराशि. । तादि मकरराशि. । पादि कुम्भराशि. । यं रं लं वं मीनराशिदेवताभ्यो नमः ।

## पीठन्यासः

पीठांस्तु विन्यसेद् देवि मातृकास्थानके पुनः ।
तेषां नामानि कथ्यन्ते शृणुष्वावहिता प्रिये ॥

(यो. हृ. ३.३३)

अं कामरूपपीठदेवताभ्यो नमः । आं वाराणसीपीठदेवता. । इं नेपालपीठ. । ईं पौण्ड्रवर्धनपीठ. । उं पुरस्थिरपीठ. । ऊं कान्यकुब्जपीठ. । ऋं पूर्णशैलपीठ. । ॠं अर्बुदपीठ. । लृं आम्रातकेश्वरपीठ. । लॄं एकाम्रपीठ. । एं त्रिस्रोतःपीठ. । ऐं कामकोट्टपीठ. । ओं कैलाशपीठ. । औं भृगुनगरपीठ. । अं केदारपीठ. । अः चन्द्रसूर्यपीठ. । कं श्रीपीठ. । खं एलाख्यपीठ. । गं जालन्धरपीठ. । घं मालवपीठ. । ङं लूतकपीठ. । चं देविकोट्टपीठ । छं गोकर्णपीठ. । जं मुरुडेश्वर. । झं अट्टहासपीठ. । ञं विरजपीठ. । टं राजगृहपीठ. । ठं महापीठ. । डं कोल्लगिरिपीठ. । ढं एलापुरपीठ. । णं ओंकार-

---

रक्तं श्वेतं हरिद्वर्णं पाण्डुचित्रासितान् स्मरेत् ।
पिशङ्गपिङ्गलौ बभ्रु कर्बुरासितधूमलान् ॥

इति राशिन्यासः ।

**पीठन्यासः**

अथ पीठन्यासः—ऐं ह्रीं श्रीं अं कामरूपपीठाय नमो शिरसि, आं वाराणसीपीठाय नमो मुखवृत्ते, इं नेपालपीठाय नमो दक्षचक्षुषि, ईं पौण्ड्रवर्धनपीठाय नमो वामचक्षुषि, उं पुरस्थिरपीठाय नमो दक्षकर्णे, ऊं कान्यकुब्जपीठाय नमो वामकर्णे, ऋं पूर्णगिरिशैलपीठाय नमो दक्षनासापुटे, ॠं अर्बुदपीठाय नमो वामनासापुटे, लृं आम्रातकेश्वरपीठाय नम दक्षगण्डे, लॄं एकाम्रपीठाय नमो वामगण्डे, एं त्रिस्रोतःपीठाय नम ऊर्ध्वोष्ठे, ऐं कामकोटिपीठाय नमोऽधरोष्ठे, ओं कैलासपीठाय नम ऊर्ध्वदन्तपङ्क्तौ, औं भृगुपुरपीठाय नमोऽधोदन्तपङ्क्तौ, अं केदारपीठाय नमो ब्रह्मरन्ध्रे, अः चन्द्रपुरपीठाय नमो मुखे, कं श्रीपीठाय नमो दक्षस्कन्धे, खं ओङ्कारपीठाय नमो दक्षकूर्परे, गं जालन्धरपीठाय नमो दक्षमणिबन्धे, घं मालवपीठाय नमो दक्षकराङ्गुलिमूले, ङं कुलान्तकपीठाय नमो दक्षपाणिनखाग्रे, चं देवीकोट्टपीठाय नमो वामस्कन्धे, छं गोकर्णपीठाय नमो वामकूर्परे, जं मारुतेश्वरपीठाय नमो वाममणिबन्धे, झं अट्टहासपीठाय नमो वामकराङ्गुलिमूले, ञं विरजापीठाय नमो वामकर-

पीठ. । तं जयन्तिकापीठ. । थं उज्जयन्तीपीठ. । दं विचित्रापीठ. । धं क्षीरकपीठ. । नं हस्तिनापुरपीठ. । पं ओड्डीशपीठ. । फं प्रयागपीठ. । बं षष्ठीशपीठ. । भं माया-पुरपीठ. । मं ओडेशपीठ. । यं मलयगिरिपीठ. । रं मेरुगिरिपीठ. । लं महेन्द्रगिरि-पीठ. । वं हिरण्यपुरपीठ. । शं महालक्ष्मीपीठ. । षं ओड्याणपीठ. । सं छायापीठ. । हं छत्रपीठ. । गिरिपीठ. । क्षं शैलपीठदेवताभ्यो नमः ।

कामरूपं वाराणसीं नेपालं पौण्ड्रवर्धनम् ।
पुरस्थिरं कान्यकुब्जं पूर्णशैलं तथार्बुदम् ॥
आम्रातकेश्वरैकाम्रं त्रिस्रोतः कामकोट्टकम् ।
कैलासं भृगुनगरं केदारं चन्द्रसूर्यकम् ॥
श्रीपीठं चैव एलाख्यं जालाख्यं मालवं ततः ।
लूतं च देविकोट्टं च गोकर्णं मुरुडेश्वरम् ॥
अट्टहासं तु विरजं राजगृहमहापथम् ।
कोल्लगिरि एलापुरमोकारं तु जयन्तिका ॥
उज्जयन्ती विचित्रा च क्षीरकं हस्तिनापुरम् ।
ओड्डीशं च प्रयागाख्यं षष्ठं मायापुरं ततः ॥
ओडेशं मलयं शैलं मेरुं गिरिवरं तथा ।
माहेन्द्रं वामनं चैव हिरण्यपुरमेव च ॥

---

नखाग्रे, टं राजगृहपीठाय नमो दक्षपादमूले, ठं महापथपीठाय नमो दक्षिणपादजानुनि, डं कोल्लगिरिपीठाय नमो दक्षगुल्फे, ढं एलापुरपीठाय नमो दक्षपादाङ्गुलिमूले, णं कालेश्वर-पीठाय नमो दक्षपादनखाग्रे, तं जयन्तिकापीठाय नमो वामपादमूले, थं उज्जयिनीपीठाय नमो वामपादजानुनि, दं चित्रपुरपीठाय नमो वामगुल्फे, धं क्षीरकपुरपीठाय नमो वामपा-दाङ्गुलिमूले, नं हस्तिनापुरपीठाय नमो वामपादनखाग्रे, पं उड्डीशपीठाय नमो दक्षपार्श्वे, फं प्रयागपीठाय नमो वामपार्श्वे, बं षष्ठीशपीठाय नमोः पृष्ठे, भं मायापुरपीठाय नमो नाभौ, मं जलेश्वरपीठाय नमो जठरे, यं मलयगिरिपीठाय नमो हृदये, रं श्रीशैलपीठाय नमो दक्षदोर्मूले, लं मेरुगिरिपीठाय नमो वामदोर्मूले, वं गिरिवरपीठाय नमो [दक्ष]गले, शं माहेन्द्रपीठाय नमो [वाम]गले, षं वामनपीठाय नमो दक्षकक्षे, सं हिरण्यपुरपीठाय नमो वामकक्षे, हं महालक्ष्मीपुरपीठाय नमो हृदये, ळं उड्याणपीठाय नमो पाणियुगे, क्षं छायाछत्रपुरपीठाय नमो व्यापकम् ।

महालक्ष्मीपुरोड्याणं छायाच्छत्रमतः परम् ।

(यो. हृ. ३. ३४-४०)

इति षोढान्यासः ॥

## चक्रन्यासः

अथ चक्रन्यासमाचरेत् । यथा—ह्रीं श्रीं समस्तप्रकटगुप्तगुप्ततरसम्प्रदाय-कुलकौलनिगर्भरहस्यातिरहस्यपरापरातिरहस्ययोगिनीचक्रश्रीपादुकेभ्यो नम इति शिरआदिपादान्तं व्याप्य ह्रीं श्रीं चतुरश्रबाह्यरेखायै नम इत्यपि व्याप्य स्वकं देहं चक्राकारं विचिन्त्य ह्रीं श्रीं अणिमादिसिद्धिदेवीश्रीपादुकां पूजयामि नमः । २ लघिमासिद्ध.।२ महिमासिद्धि. । २ ईशित्वसिद्धि. । २ वशित्वसिद्धि. । २ प्राका-म्यसिद्धि. । २ भुक्तिसिद्धि. । २ इच्छासिद्धि. । २ प्राप्तिसिद्धि. । २ रससिद्धि. । २ मोक्षसिद्धिदेवीश्रीपादुकां पूजयामि नमः ।

दक्षांसपार्श्वपाण्यग्रस्फिक्पादाङ्गुष्ठकेषु च ।
वामाङ्घ्र्यङ्गुष्ठके स्फिक्के पाण्यग्रे पार्श्वकेंऽसके ॥

---

श्यामान् रक्तान् वरान् सर्वान् सर्वालङ्कारभूषितान् ।
सशक्तिकान् स्मरेत् कामान् पीठस्थान् चन्द्रपञ्चसु ॥

इति पीठन्यासः[1] ।

## चक्रन्यासः

अथ **चक्रन्यासः**—पूर्ववन्मूलषडङ्गादिकं विन्यस्य श्रीचक्रन्यासं कुर्यात् । ऐं मध्य-मयोः, क्लीं अनामिकयोः, सौः कनिष्ठिकयोः, ऐं अङ्गुष्ठयोः, क्लीं तर्जन्योः, सौः करसम्पु-टयोः । ऐं क्लीं सौः रक्ष रक्ष हृदयाय नमः, ऐं क्लीं सौः शिरसे स्वाहा, ऐं क्लीं सौः शिखायै वषट्, ऐं क्लीं सौः नेत्रत्रयाय वौषट्, ऐं क्लीं सौः अस्त्राय फट्—इति षडङ्गं कृत्वा,

---

*1. इतः परं ४६ खपत्रे—'ऐं ह्रीं श्रीं अः निवृत्तिकलायै नमो ललाटे' इति दृश्यतेऽत्रासम्बद्धं* वाक्यम् । ततः परं च—'परयोनिं मथित्वा' इत्यादिकः 'मुद्रानवकं प्रदर्श्य ध्यानं कुर्यात्' इत्यन्तः *पाठो मूले स्थापितोऽत्र दृश्यते । अत्र ध्यानमित्यस्य स्थाने 'चक्रन्यासं' इति पाठो दृश्यते ।* अत्रैव (५० ख) त्रयोदशीपद्धतिः परिसमाप्ता । ततश्च चक्रन्यासप्रकरणमत्र स्थापितम् ।

सचूलितलवृत्तेषु व्यापकत्वेन सुन्दरि।
अत्रैव स्थानदशकेष्वणिमादि दश न्यसेत्॥
विन्यस्य तस्य स्थानेषु ब्रह्माण्याद्यं त्वनुक्रमात्।
पादाङ्गुष्ठे द्वये पार्श्वे दक्षे मूर्धनि पार्श्वके॥
वामदक्षिणजान्वोश्च बहिरंसद्वये तथा।
(यो. हृ. ३. ४३-४७)

अं कादि आं ब्रह्माणी शक्तिदेवी श्रीपादुकां पूजयामि नमः। इं चादि ईं माहेशी.। उं टादि ऊं कौमारी। ऋं तादि ॠं वैष्णवी.। लृं पादि ॡं वाराही.। एं यादि ऐं इन्द्राणी.। ओं शादि औं चामुण्डी.। अं ळं क्षं अः महालक्ष्मीशक्तिदेवी-श्रीपादुकां पूजयामि।

---

देवदेव जगन्नाथ नीलकण्ठ जगत्पते।
श्रीमत्त्रिपुरसुन्दर्याश्चक्रन्यासं वद प्रभो॥
यत्र कस्यचिदाख्यातं तनुशुद्धिकरं परम्।
चतुरस्रादिरेखायै नम इत्यादिकं न्यसेत्॥
दक्षांसपृष्ठपाण्यग्रस्फिजि पादाङ्गुलीष्वथ।
वामपादाङ्गुलिस्फिजौ पाण्यग्रे चांसपृष्ठके॥
सचूलीतलपृष्ठेषु व्यापकत्वेन सुन्दरि।
(यो. हृ. ३. ४१-४४)

अं ऐं क्लीं ह्सौः आं ईं ऊं यां रां लां वां सां कामेश्वरि इच्छाकामफलप्रदे सर्वसत्त्ववशङ्करि जगत्क्षोभकरे हूं हूं हूं द्रां द्रीं क्लीं ब्लूं सः ह्सौः क्लीं ऐं कामेश्वरीनित्या-श्रीपादुकां पूजयामि—प्रथमा, दक्षांसे। आं ऐं भगभुगे भगिनि भगोदरि भगमाले भगावहे भगगुह्ये भगयोनि भगपातिनि सर्वभगवशङ्करि भगरूपे नित्यक्लिन्ने भगस्वरूपे सर्वाणि भगानि मे ह्यानय वरदे रेते सुरेते भगक्लिन्ने क्लिन्नद्रवे क्लेदय द्रावय अमोघे भगविच्चे क्षुभ क्षोभय सर्वसत्त्वान् भगेश्वरि ऐं ब्लूं जं ब्लूं भें ब्लूं हें ब्लूं ऐं क्लिन्ने सर्वाणि भगानि मे वशमानय स्त्रीं हर्ब्लें ह्रीं इति भगमालिनिनित्याश्री [पादुकां पूजयामि]—द्वितीया,

विन्यस्य चान्त्यरेखायै नम इत्यपि विन्यसेत् ।
विन्यस्य व्यापकत्वेन मुद्राणां दशकं न्यसेत् ॥
ब्रह्माण्याद्यष्टस्थानेषु तासामष्टौ न्यसेत्तथा ।
शिष्टे द्वे द्वादशान्ते च पादाङ्गुष्ठे च विन्यसेत् ॥

(यो. हृ. ३. ४७-४९)

२ द्रां सर्वसंक्षोभिणीमुद्रादेवीश्रीपादुकां पूजयामि । २ द्रीं सर्वविद्राविणी. । २ क्लीं सर्वाकर्षणी. । २ ब्लूं सर्वावेशकारिणी. । २ सः सर्वोन्मादिनी. । २ क्रों सर्वमहाङ्कुशा. । २ हस्ख्फ्रें सर्वखेचरी. । २ हसौः त्रिखण्डा. । २ सर्व ह्सौः बीजमुद्रा. । २ सर्व ऐं ह्सौः योनिमुद्रादेवीश्रीपादुकां पूजयामि । अं आं सौः श्रीत्रिपुरानित्यापादुकां पूजयामि नमः । २ एताः प्रकटयोगिन्यस्त्रैलोक्यमोहने चक्रे समुद्राः ससिद्धयः सायुधाः सवाहनाः सपरिवाराः सर्वोपचारैः संपूजिताः सन्तु । इत्येता हृदि न्यसेत् ।

---

हृदये । इं ह्रीं नित्यक्लिन्ने मदद्रवे स्वाहा नित्यक्लिन्नानित्याश्री [पादुकां पूजयामि]—तृतीया, पृष्ठे । ईं ऊं क्रौं भ्रौं क्रौं क्ष्रौं ज्रौं स्वाहा नित्या भेरुण्डा[नित्याश्रीपादुकां पूजयामि]—चतुर्थी, दक्षकरे । उं ॐ ह्रीं वह्निवासिन्यै नमो वह्निवासिनीनित्या[श्रीपादुकां पूजयामि] —पञ्चमी, स्फिजि । ऊं ॐ फें सः नित्यक्लिन्ने मदद्रवे स्वाहा महाविद्येश्वरी-नित्या[श्रीपादुकां पूजयामि]—षष्ठी, दक्षपादे । ऋं ह्रीं शिवदूत्यै नमः शिवदूती-नित्या[श्रीपादुकां पूजयामि] —सप्तमी, पादाङ्गुलीषु । ॠं ॐ ह्रीं हुं खे च छे क्ष स्त्रीं हूं क्षं क्षीं फट् त्वरितानित्या[श्रीपादुकां पूजयामि]—अष्टमी, अधः । ऌं ऐं क्लीं सौं कुल-सुन्दरीनित्या[श्रीपादुकां पूजयमि]—नवमी, पादाङ्गुलीषु । ॡं द्रां द्रीं क्लीं ब्लूं सः नित्या-नित्या[श्रीपादुकां पूजयामि]—दशमी, वामस्फिजि । एं ह्रीं फ्रें स्रुं क्रों आं क्लीं ऐं ब्लूं नित्यमदद्रवे हुं फ्रें ह्रं नीलपताकानित्या [श्रीपादुकां पूजयामि]—एकादशी, वामपाण्यग्रे । ऐं भ् म् र् यूं ॐ विजयानित्या[श्रीपादुकां पूजयामि]—द्वादशी, वामांसे । ओं स्वौः सर्वमङ्गलानित्या[श्रीपादुकां पूजयामि] —त्रयोदशी, वामस्कन्धे । औं ॐ नमो भगवति ज्वालामालिनि देवि सर्वभूतसंहारकारिके जातवेदसि ज्वलन्ती ज्वल ज्वल प्रज्वल प्रज्वल ह्रीं हुं फट् स्वाहा ज्वालामालिनि(नी)नित्या[श्रीपादुकां पूजयामि]—चतुर्दशी, चूलितले । अं च्क्रौं चित्रानित्या[श्रीपादुकां पूजयामि]—पञ्चदशी, शिखायाम् । अः क्रौं

२ षोडशदलपद्माय नम इति व्याप्य

दलानि दक्षिणश्रोत्रपृष्ठमंसं च कूर्परम्।
करपृष्ठोरुजान्वन्तं गुल्फपादतलं तथा॥
वामपादतलाद्येवमेतदप्यष्टकं मतम्।

(यो. हृ. ३. ५१-५२)

२ अं कामाकर्षणीनित्याकलादेवीश्रीपादुकां। २ आं बुद्ध्याकर्षणी-नित्याकलादेवी.। २ इं अहङ्काराकर्षणी.। २ ईं शब्दाकर्षणी.। २ उं स्पर्शाकर्षणी.। २ ऊं रूपाकर्षणी.। २ ऋं रसाकर्षणी.। २ ॠं गन्धाकर्षणी.। २ लृं चित्ताकर्षणी.। २ लॄं धैर्याकर्षणी.। २ एं स्मृत्याकर्षणी.। २ ऐं नामाकर्षणी.। २ ओं बीजाकर्षणी.।

---

नित्याश्री[पादुकां पूजयामि]—षोडशी, दक्षिणपृष्ठे। समस्तमूलविद्यया तामपि पूजयेत्। पूजा परिपूर्णेत्यर्थः।

अथाष्टदलपद्मस्याग्नेयनैर्ऋत्यादिदिक्षु हृदयादिचतुष्टयं मध्ये नेत्रं दिक्ष्वस्त्रमित्यङ्गानि सम्पूज्य पश्चिमद्वारे

अत्रैव स्थानदशकेऽणिमाद्या दश न्यसेत्।
सिद्धीस्तदन्तश्च तनुव्यापकत्वेन सुन्दरि॥
चतुरस्रमध्यरेखायै नम इत्यपि वल्लभे।
विन्यस्य तस्याः स्थानेषु ब्रह्माण्याद्यास्तथाष्टसु॥
पादाङ्गुष्ठद्वये पार्श्वे दक्षे मूर्ध्नोऽन्यपार्श्वके।
वामदक्षिणजान्वोश्च बहिरंसद्वये तथा॥

(यो. हृ. ३. ४४-४६)

ऐं ह्रीं श्रीं [अं] अणिमासिद्धिश्रीपादुकां पूजयामि-दक्षिणपादाङ्गुष्ठे, ऐं ह्रीं श्रीं लं लघिमासिद्धिश्रीपादुकां पूजयामि-वामाङ्गुष्ठे, ऐं ह्रीं श्रीं मं महिमासिद्धिश्रीपादुकां पूजयामि-दक्षमूर्ध्नि, ऐं ह्रीं श्रीं ईं ईशित्वसिद्धिश्रीपादुकां पूजयामि-वाममूर्ध्नि, ऐं ह्रीं श्रीं [वं] वशित्वसिद्धिश्रीपादुकां पूजयामि-दक्षजानुनि, ऐं ह्रीं श्रीं [प्रां]प्राकाम्यसिद्धिश्रीपादुकां पूजयामि-वामजानुनि, ऐं ह्रीं श्रीं [भुं]भुक्तिसिद्धिश्रीपादुकां पूजयामि-दक्षांसे, ऐं ह्रीं श्रीं [इं]इच्छासिद्धिश्रीपादुकां पूजयामि-वामांसे, ऐं ह्रीं श्रीं [रं]रससिद्धिश्रीपादुकां पूजयामि-हृदये, ऐं ह्रीं श्रीं [सं]सर्वकामसिद्धिश्रीपादुकां पूजयामि-ब्रह्मरन्ध्रे इति वा पूर्वाभिमुखो

२ औं आत्माकर्षणी. । २ अं अमृताकर्षणी. । २ अः शरीराकर्षणीनित्याकलादेवी-श्रीपादुकां पूजयामि नमः । ऐं क्लीं ह्सौः श्रीत्रिपुरेश्वरीनित्यादेवीपादुकां पूजयामि । २ एता गुप्तयोगिन्यः सर्वाशापरिपूरके चक्रे समुद्राः ससिद्धयः सायुधाः सवाहनाः सपरिवाराः सर्वोपचारैः संपूजिताः सन्तु । एता हृदि न्यसेत् ।

ततः २ अष्टदलपद्माय नम इति व्यापकत्वेन विन्यस्य

विन्यस्य तद्दलेष्वेषु दक्षशङ्खे च जत्रुके ।
ऊर्वन्ते गुल्फगुल्फोरु जत्रुशङ्खे च वामतः ॥
अनङ्गकुसुमाद्याश्च शक्तीरष्टौ तु विन्यसेत् ।

(यो. हृ. ३. ५३-५४)

२ कं खं गं घं ङं अनङ्गकुसुमादेवीश्रीपादुकां पूजयामि । २ चादि अनङ्गमेखलादेवी. । २ टादि अनङ्गमदना. । २ तादि. अनङ्गमदनातुरादेवी. । २ पादि

---

दक्षिणोत्तरपङ्क्तिक्रमेण पूजयेत् । नैर्ऋत्यादारभ्य आग्नेयान्तमुत्तराभिमुखो गुरुपङ्क्तिं पूजयेत् । ॐ ऐं ह्रीं श्रीं परमेष्ठीगुरुभ्यो नमो ब्रह्मरन्ध्रे ।

विन्यस्य तस्याः स्थानेषु ब्रह्माण्याद्यास्तथाष्टसु ।
पादाङ्गुष्ठद्वये पार्श्वे दक्षे मूर्ध्नोऽन्यपार्श्वके ॥
वामदक्षिणजान्वोश्च बहिरंसद्वये तथा ।
न्यस्तव्याश्चतुरस्रान्त्यरेखायै नम इत्यपि ॥

(यो. हृ. ३. ४६-४७)

ऐं ह्रीं श्रीं आं ब्रह्माणीश्रीपादुकां पूजयामि-दक्षपादाङ्गुष्ठे, ऐं ह्रीं श्रीं ईं माहेश्वरीश्रीपादुकां पूजयामि-वामपादाङ्गुष्ठे, ऐं ह्रीं श्रीं ऊं कौमारीश्रीपादुकां पूजयामि-दक्षमूर्ध्नि, ऐं ह्रीं श्रीं ॠं वैष्णवीश्रीपादुकां पूजयामि-वाममूर्ध्नि, ऐं ह्रीं श्रीं ॡं वाराहीश्रीपादुकां पूजयामि-दक्षजानुनि, ऐं ह्रीं श्रीं ऐं इन्द्राणीश्रीपादुकां पूजयामि-वामजानुनि, ऐं ह्रीं श्रीं औं चामुण्डाश्रीपादुकां पूजयामि-दक्षांसे, ऐं ह्रीं श्रीं अः महालक्ष्मीश्रीपादुकां पूजयामि-वामांसे इति संपूज्य पुनरन्तश्चतुरस्रे पश्चिमादिदिक्षु वायव्यादिविदिक्षु प्रादक्षिण्येन विन्यस्य तस्य स्थानेषु मुद्राणां दशकं न्यसेत् ।

विन्यस्य व्यापकत्वेन पूर्वोक्तान्तश्च विग्रहे ।
तेषु स्थानेषु दशसु मुद्राणां दशकं न्यसेत् ॥

अनङ्गरेखा. । २ यादि अनङ्गवेगा. । २ शादि अनङ्गाङ्कुशा. ।२ ळं क्षं अनङ्गमालिनी-देवीश्रीपादुकां पूजयामि । ह्रीं क्लीं ह्सौः त्रिपुरसुन्दरीनित्यादेवीश्रीपादुकां. । २ एता गुप्ततरयोगिन्यः सर्वसंक्षोभके चक्रे समुद्रा इत्यादि । एता हृदि न्यसेत् ।

तदन्तः २ चतुर्दशारचक्राय नम इत्यपि व्याप्य

विन्यस्य तस्य स्थानेषु न्यसेच्छक्तीश्चतुर्दश ।
सर्वसंक्षोभिण्याद्यास्तु तस्य कोणानि वच्म्यहम् ॥
केशान्ते दक्षललाटे दक्षगण्डांसमध्यतः ।
पार्श्वान्तरूरुजङ्घान्तः पायुपृष्ठे च सुन्दरि ॥
वामजङ्घा तदूर्वन्ते तत्पार्श्वे च तदंसके ।
तद्गण्डे तल्ललाटे च न्यसेच्छक्तीश्चतुर्दश ॥
(यो. हृ. ३. ५५-५७)

---

ब्राह्म्यादीनां तु स्थानेषु तस्यामष्टौ न्यसेदथ ।
शिष्टे द्वे द्वादशान्ते तु पादाङ्गुष्ठे च विन्यसेत् ॥
(यो. हृ. ३. ४८-४९)

श्रीं ह्रीं ऐं (ऐं ह्रीं श्रीं) सर्वसंक्षोभिणीमुद्रादेवीश्रीपादुकां पूजयामि-दक्षपादाङ्गुष्ठे, ऐं ह्रीं श्रीं सर्वविद्राविणीमुद्राश्रीपादुकां पूजयामि-वामपादाङ्गुष्ठे, ऐं ह्रीं श्रीं सर्वाकर्षणीमुद्रा-देवीश्रीपादुकां पूजयामि-दक्षमूर्ध्नि, ऐं ह्रीं श्रीं सर्ववशङ्करिमुद्रादेवीश्रीपादुकां पूजयामि-वाम-मूर्ध्नि, ऐं ह्रीं श्रीं सर्वोन्मादिनीमुद्रादेवीश्रीपादुकां पूजयामि-दक्षजानुनि, ऐं ह्रीं श्रीं महाङ्कुशामुद्रादेवीश्रीपादुकां पूजयामि-वामजानुनि, ऐं ह्रीं श्रीं सर्वखेचरीमुद्रादेवीश्रीपादुकां पूजयामि-दक्षांसे, ऐं ह्रीं श्रीं त्रिखण्डामुद्रादेवीश्रीपादुकां पूजयामि-वामांसे, ऐं ह्रीं श्रीं बीजमुद्रादेवीश्रीपादुकां पूजयामि-हृदये, ऐं ह्रीं श्रीं योनिमुद्रादेवीश्रीपादुकां पूजयामि-ब्रह्मरन्ध्रे । एताः प्रकटयोगिन्यस्त्रैलोक्यमोहनचक्रे समुद्राः ससिद्धयः सासनाः सवाहनाः सपरि-वाराः सर्वोपचारैः पूजिताः सन्तु । अर्घ्योदकाक्षतकुसुमैर्मूलदेव्यै पूजां समर्पयेत् ।

अथ षोडशारे पूर्वादारभ्य दक्षिणावर्तेन पूजयेत् । तदन्तः षोडशदले कामाकर्षिण्या-द्याश्च विन्यसेत्—

दलानि दक्षिणश्रोत्रपृष्ठमंसं च कूर्परम् ।
करपृष्ठं चोरुजानुगुल्फपादतलं तथा ॥
वामपादतले चैव एतदेवाष्टकं मतम् । (यो. हृ. ३.५१-५२)

ह्रीं श्रीं सर्वसंक्षोभणीशक्ति. ।२ सर्वविद्राविणीशक्ति. । २ सर्वाकर्षणी-शक्ति. । २ सर्वाह्लादिनीशक्ति. । २ सर्वसम्मोहनीशक्ति. । सर्वस्तम्भिनीशक्ति. । सर्वजम्भिनीशक्ति. । २ सर्ववशंकारिणीशक्ति. । २ सर्वरञ्जनीशक्ति. । २ सर्वोन्मा-दिनीशक्ति. । २ सर्वार्थसाधकीशक्ति. । २ सर्वसम्पत्तिपूरणीशक्ति. । २ सर्वमन्त्र-मयीशक्ति. । २ सर्वद्वन्द्वक्षयङ्करीशक्तिश्रीपादुकां. । ह्रीं क्लीं सौः श्रीत्रिपुरावासिनी-नित्यादेवीश्रीपादुकां । २ एताः सम्प्रदायक्रमयोगिन्यः सर्वसौभाग्यदायके चक्रे समुद्रा इत्यादि पूर्ववत् । एता हृदि न्यसेत् ।

तदन्तः बाह्यदशारचक्राय नम इत्यपि विन्यसेत् ।

तस्य कोणेषु दक्षाक्षिकुक्षिपार्श्वोर्ध्वमेव च ।
तदधः पार्श्वजानुश्च पायौ जानौ च वामके ॥
तत्पार्श्वकुक्ष्यधोभागे तत्पार्श्वोर्ध्वे च नेत्रके ।
नासामूले च विन्यस्याः सर्वसिद्धिप्रदा दश ॥

(यो. हृ. ३. ५८-५९)

---

ॐ ऐं ह्रीं श्रीं अं कामाकर्षिणीनित्याकलादेवीश्रीपादुकां पूजयामि-दक्षश्रोत्रे, ऐं ह्रीं श्रीं आं बुद्ध्याकर्षिणीकलादेवीश्रीपादुकां पूजयामि-वामश्रोत्रे, ऐं ह्रीं श्रीं इं अहङ्काराकर्षि-णीनित्याकलादेवीश्रीपादुकां पूजयामि-दक्षकूपरे, ऐं ह्रीं श्रीं ईं शब्दाकर्षिणीनित्याकलादेवी-श्रीपादुकां पूजयामि दक्षपृष्ठे, ऐं ह्रीं श्रीं उं स्पर्शाकर्षिणीनित्याकलादेवीश्रीपादुकां पूजयामि-दक्षोरौ, ऐं ह्रीं श्रीं ऊं रूपाकर्षिणी नित्याकलादेवीश्रीपादुकां पूजयामि-दक्षजानौ, ऐं ह्रीं श्रीं ऋं रसाकर्षिणीनित्याकलादेवीश्रीपादुकां पूजयामि-दक्षगुल्फे, ऐं ह्रीं श्रीं ॠं गन्धाकर्षिणीनित्याकलादेवीश्रीपादुकां पूजयामि-दक्षपादतले, ऐं ह्रीं श्रीं लृं चित्ताकर्षिणी-नित्याकलादेवीश्रीपादुकां पूजयामि-वामपादतले, ऐं ह्रीं श्रीं ॡं धैर्याकर्षिणीनित्याकलादेवी-श्रीपादुकां पूजयामि-वामपादगुल्फे, ऐं ह्रीं श्रीं एं स्मृत्याकर्षिणीनित्याकलादेवीश्रीपादुकां पूजयामि- वामजानौ, ऐं ह्रीं श्रीं ऐं नामाकर्षिणीनित्याकलादेवीश्रीपादुकां पूजयामि-वामोरौ, ऐं ह्रीं श्रीं ओं बीजाकर्षिणीनित्याकलादेवीश्रीपादुकां पूजयामि-वामकरतले, ऐं ह्रीं श्रीं औं आत्माकर्षिणीनित्याकलादेवीश्रीपादुकां पूजयामि-वामकूपरे, ऐं ह्रीं श्रीं अं अमृताकर्षिणी-नित्याकलादेवीश्रीपादुकां पूजयामि-वामपृष्ठे, ऐं ह्रीं श्रीं अः शरीराकर्षिणीनित्याकलादेवी-श्रीपादुकां पूजयामि-वामकर्णे। ऐं ह्रीं श्रीं त्रिपुरेश्वरीनित्याकलादेवी इति मध्ये

ह्री श्रीं सर्वसिद्धिप्रदादेवी. । २ सर्वसम्पत्प्रदादेवी. । २ सर्वप्रियङ्करी. । २ सर्वमङ्गलकारिणी. । २ सर्वकामप्रदा. । २ सर्वदुःखविमोचनी. । २ सर्वमृत्युप्रशमनी. । २ सर्वविघ्नविनाशिनी. । २ सर्वाङ्गसुन्दरी. । २ सर्वसौभाग्यदायिनी देवीश्रीपादु. । हैं ह्क्लीं ह्सौः श्रीत्रिपुराश्रीनित्यादेवीश्रीपादु. । एता कुलयोगिन्यः सर्वार्थसाधके चक्रे समुद्रा इत्यादि पूर्ववत् । एता हृदि न्यसेत् ।

ततः अन्तर्दशारचक्राय नमः ।

विन्यस्य तस्य कोणेषु सर्वाज्ञाद्याश्च विन्यसेत् ।
दक्षनासासृक्किणी च स्तनं वृषणमेव च ॥
गुदं च वाममुष्कं च स्तनं सृक्किणिनासिके ।
नासाग्रं चैव विज्ञेयं कोणानां दशकं पुनः ॥

(यो. हृ. ३. ६१-६२)

---

चक्रेश्वरीमाराध्य एता गुप्तत[र]योगिन्यः सर्वाशापूरके चक्रे समुद्रा इत्यादि पूर्ववत् । इति मूल्यदेव्यै पूजां समर्पयेत् ।

अथाष्टप्रागादिदिग्दलेष्वाग्नेयादिविदिग्दलेषु—

तदन्तरे चाष्टदलपद्माय नम इत्यपि ।
विन्यस्य तद्दलेष्वेषु दक्षशङ्खे च जत्रुके ॥
ऊर्वन्तर्गुल्फगुल्फोरुजत्रुशङ्खे च वामतः ।
अनङ्गकुसुमाद्यास्तु शक्तीरष्टौ च विन्यसेत् ॥

(यो. हृ. ३. ५२-५४)

ऐं ह्रीं श्रीं कं खं गं घं ङं अनङ्गकुसुमादेवीश्रीपादुकां पूजयामि-दक्षजत्रुणि, ऐं ह्रीं श्रीं चं छं जं झं ञं अनङ्गमेखलादेवीश्रीपादुकां पूजयामि-दक्षशङ्खे, ऐं ह्रीं श्रीं टं ठं डं ढं णं अनङ्गमदनादेवीश्रीपादुकां पूजयामि-दक्षोरौ, ऐं ह्रीं श्रीं तं थं दं धं नं अनङ्गमदनातुरादेवीश्रीपादुकां पूजयामि-दक्षगुल्फे, ऐं ह्रीं श्रीं पं फं बं भं मं अनङ्गरेखादेवीश्रीपादुकां पूजयामि-वामगुल्फे, ऐं ह्रीं श्रीं यं रं लं वं अनङ्गवेगिनीदेवीश्रीपादुकां पूजयामि-वामोरौ, ऐं ह्रीं श्रीं शं षं सं हं अनङ्गाङ्कुशादेवीश्रीपादुकां पूजयामि-वामजत्रुणि, ऐं ह्रीं श्रीं ळं क्षं अनङ्गमालिनीदेवीश्रीपादुकां पूजयामि-वामशङ्खे, ऐं ह्रीं ह्सौः महात्रिपुरसुन्दरीनित्याकलादेवीश्रीपादुकां

ह्रीं श्रीं सर्वज्ञादेवीश्रीपादु. । २ सर्वशक्तिदेवी. । २ सर्वैश्वर्यप्रदा देवी. । २ सर्वज्ञानमयीदेवी. । २ सर्वव्याधिविनाशिनीदेवी. । २ सर्वाधारस्वरूपिणीदेवी. । २ सर्वपापहरादेवी. । २ सर्वानन्दमयीदेवी. । २ सर्वरक्षास्वरूपिणीदेवी. । ह्रीं श्रीं सर्वेप्सितफलप्रदादेवीश्रीपादु. । ह्सैं ह्स्क्लीं ह्सौः श्रीत्रिपुरामालिनीनित्यादेवी-श्रीपादु. । एता निगर्भयोगिन्यः सर्वरक्षाकरे चक्रे समुद्रा इत्यादि पूर्ववत् । एता हृदि न्यसेत् ।

२ अष्टारचक्राय नम इति देहे व्यापकं विन्यस्य

विन्यस्य तस्य कोणेषु वशिन्याद्यष्टकं न्यसेत् ।
चिबुके कण्ठहृदयनाभीनां चैव दक्षिणम् ॥

---

पूजयामीति मध्ये चक्रेश्वरीमाराध्य एता गुप्त[तर]योगिन्यः सर्वसंक्षोभकरे समुद्रा इत्यादि पूर्ववत् । अर्घ्योदकेनाक्षतकुसुमैर्मूलदेव्यै पूजां समर्पयेत् ।

अथ चतुर्दशारे पश्चिमादारभ्य दक्षिणावर्तेन पूजयेत्—

तदन्तश्चतुर्दशारचक्राय नम इत्यपि ।
विन्यस्य तस्य कोणेषु न्यसेच्छक्तीश्चतुर्दश ॥
सर्वसंक्षोभिणीत्यादि तासां स्थानानि कथ्यते ।
ललाटे दक्षभागे च दक्षगण्डांसमध्यतः ॥
पार्श्वान्तरूरुजङ्घान्तर्वामजङ्घादि पार्वति ।
वामोरौ वामपार्श्वे च वामांसे वामगण्डके ।
ललाटवामभागे च तथा वै पृष्ठ इत्यपि ॥

(यो. हृ. ३. ५४-५७)

ऐं ह्रीं श्रीं सर्वसंक्षोभिणीशक्तिश्रीपादुकां पूजयामि-दक्षललाटे, ऐं ह्रीं श्रीं सर्वविद्राविणीशक्तिश्रीपादुकां पूजयामि-दक्षगण्डे, ऐं ह्रीं श्रीं सर्वाकर्षिणीशक्तिश्रीपादुकां पूजयामि-दक्षांसे, ऐं ह्रीं श्रीं सर्वाह्लादिनीशक्तिश्रीपादुकां पूजयामि-दक्षपार्श्वे, ऐं ह्रीं श्रीं सर्वसम्मोहिनीशक्तिश्रीपादुकां पूजयामि-दक्षकुक्षौ, ऐं ह्रीं श्रीं सर्वस्तम्भिनीशक्तिश्रीपादुकां पूजयामि-दक्षोरौ, ऐं ह्रीं श्रीं सर्वजम्भिनीशक्तिश्रीपादुकां पूजयामि-दक्षजङ्घायाम्, ऐं ह्रीं श्रीं सर्ववशङ्करीशक्तिश्रीपादुकां पूजयामि-वामजङ्घे, ऐं ह्रीं श्रीं सर्वरञ्जिनीशक्तिश्रीपादुकां पूजयामि-वामोरौ, ऐं ह्रीं श्रीं सर्वोन्मादिनीशक्तिश्रीपादुकां पूजयामि-वामकुक्षौ, ऐं ह्रीं श्रीं

नाभ्यधो नाभिपार्श्वं च हृत्पार्श्वं कण्ठपार्श्वकम् ।
ज्ञेयं पार्श्वचतुष्कं च मणिपूरादिवामकम् ॥
चतुष्टयं च पार्श्वनामेतदप्यष्टकं पुनः ।

(यो. हृ. ३. ६३-६४)

आदि ब्लूं वशिनीवाग्देवतादेवीश्रीपादुकां. । कादि क्ल्हीं कामेश्वरीवाग्देवता. । चादि न्ब्लीं मोदिनीवाग्देवता. । टादि य्लूं विमला. । तादि ज्म्रीं अरुणा. । पादि ह्स्ल्व्यूं जयिनी. । यं रं लं वं झ्म्रीं सर्वेश्वरी । शं षं सं हं ळं क्षं क्ष्म्रीं कौलिनीवाग्देवतादेवीश्रीपादुकां. । ह्रीं क्लीं ब्लें श्रीत्रिपुरासिद्धिदेवीश्रीपादु. । एता रहस्ययोगिन्यः सर्वरोगहरे चक्रे समुद्रा इत्यादि पूर्ववद् हृदि न्यसेत् ।

हृदयाब्जत्रिकोणस्य चतुर्दिक्षु बहिर्न्यसेत् ।
शरचापौ पाशसृणी त्रिकोणाय नमस्तथा ॥

---

सर्वार्थसाधकी(धिनी)शक्तिश्रीपादुकां पूजयामि-वामपादे, ऐं ह्रीं श्रीं सर्वसम्पत्तिपूरिणीशक्तिश्रीपादुकां पूजयामि-वामांसे, ऐं ह्रीं श्रीं सर्वमन्त्रमयीशक्तिश्रीपादुकां पूजयामि-वामगण्डे, ऐं ह्रीं श्रीं सर्वद्वन्द्वक्षयङ्करीशक्तिश्रीपादुकां पूजयामि-वामललाटे, ऐं क्लीं ह्सौः त्रिपुरवासिनीशक्तिश्रीपादुकां पूजयामि। एताः सम्प्रदायक्रमयोगिन्यः सर्वसौभाग्यदायकचक्रे समुद्रा इत्यादि पूर्ववत्। अर्घ्योदकेनाक्षतकुसुमैर्मूलदेव्यै पूजां समर्पयेत्।

ततो दशारचक्राय नम इत्यपि पार्वति।
तस्य कोणानि दक्षाक्षिनासिकामूलनेत्रके ॥
कुक्षीशवायुकोणेषु जानुद्वयगुदेषु च।
कुक्षिनैर्ऋतिवह्न्याख्यकोणयोश्च न्यसेत् पुनः ॥

(यो. हृ. ३. ५८-५९)

अथ बाह्यदशारे पश्चिमादारभ्य—ऐं ह्रीं श्रीं सर्वसिद्धिप्रदादेवीश्रीपादुकां पूजयामि-दक्षनासायाम्, ऐं ह्रीं श्रीं सर्वसम्पत्प्रदादेवीश्रीपादुकां पूजयामि-नासामूले, ऐं ह्रीं श्रीं सर्वमङ्गलकारिणीदेवीश्रीपादुकां पूजयामि-वामनेत्रे, ऐं ह्रीं श्रीं सर्वप्रियङ्करीदेवीश्रीपादुकां पूजयामि-दक्षस्तने, ऐं ह्रीं श्रीं सर्वकामप्रदादेवीश्रीपादुकां पूजयामि-दक्षसीवन्याम्, ऐं ह्रीं श्रीं सर्वदुःखविमोचिनीदेवीश्रीपादुकां पूजयामि-दक्षजानुनि, ऐं ह्रीं श्रीं सर्वमृत्युप्रशमिनीदेवीश्री-

विन्यस्य तस्य कोणेषु अग्रदक्षेतरेषु च ।

कामेश्वर्यादिदेवीश्च मध्ये देवीं च विन्यसेत् ॥

(यो. हृ. ३. ६५-६७)

गु मध्यत्रिकोणचक्राय नम इति व्याप्य ह्रीं श्रीं यां रां लां वां सां ऐं द्रां द्रीं क्लीं ब्लूं सः यां रां लां वां सां जम्भनेभ्यः कामेश्वरबाणेभ्यो नमः । २ द्रां द्रीं क्लीं ब्लूं सः यां रां लां वां सां ऐं द्रां द्रीं क्लीं ब्लूं सः जम्भनेभ्यः कामेश्वरीबाणेभ्यो नमः । २ यां रां लां वां सां ऐं द्रां द्रीं क्लीं ब्लूं सः थां सम्मोहनाय कामेश्वरचापाय नमः । २ द्रां द्रीं क्लीं ब्लूं सः यां रां लां वां सां थां सम्मोहनाय कामेश्वरीचापाय नमः । एवं सर्वत्र योज्यम् । आं वशीकरणाय कामेश्वरपाशाय नमः । ह्रीं वशीकरणाय कामेश्वरीपाशाय नमः । आं ह्रीं क्रों स्तम्भनाय कामेश्वराङ्कुशाय नमः । क्रौं स्तम्भनाय कामेश्वर्यङ्कुशाय नमः ।

---

पादुकां पूजयामि-वामजानुनि, ऐं ह्रीं श्रीं सर्वविघ्ननिवारिणीदेवीश्रीपादुकां पूजयामि-गुदे, ऐं ह्रीं श्रीं सर्वाङ्गसुन्दरीदेवीश्रीपादुकां पूजयामि-वामवृषणे, ऐं ह्रीं श्रीं सर्वसौभाग्यदायिनी-शक्तिश्रीपादुकां पूजयामि-वामस्तने, ऐं ह्रीं श्रीं ह्सौं ह्स्वों श्रीमहात्रिपुरानित्याकलादेवी-श्रीपादुकां पूजयामीति मध्यचक्रेश्वरीमाराध्य एताः कुलयोगिन्यः सर्वार्थसाधकचक्रे समुद्रा इत्यादि पूर्ववत् । इत्यर्घोदकेनाक्षतकुसुमैर्मूलदेव्यै पूजां समर्पयेत् ।

अथान्तर्दशारे पश्चिमादारभ्य दक्षिणावर्तेन—

सर्वसिद्धिप्रदादीनां शक्तीनां दशकं न्यसेत् ।

तदन्तश्च दशारादिचक्राय नम इत्यपि ॥

विन्यस्य तस्य कोणेषु सर्वज्ञाद्याश्च विन्यसेत् ।

दक्षनासा सृक्किणी च स्तनं वृषणमेव च ॥

सीवनी वाममुष्कं च स्तनं सृक्किणिनासिके ।

नासाग्रं चैव विज्ञेयं कोणानां दशकं ततः ॥

(यो. हृ. ३. ६०-६२)

ऐं ह्रीं श्रीं सर्वज्ञादेवीश्रीपादुकां पूजयामि-दक्षनासायाम्, ऐं ह्रीं श्रीं सर्वशक्तिदेवीश्री-पादुकां पूजयामि-दक्षसृक्किण्याम्, ऐं ह्रीं श्रीं सर्वैश्वर्यप्रदादेवीश्रीपादुकां पूजयामि-दक्षस्तने,

आद्यबीजमुच्चार्य अग्निचक्रे कामगिर्यालये षष्ठनाथात्मके कामेश्वरीदेविश्रीरुद्रात्मशक्तिश्रीपादु. । द्वितीयमुच्चार्य सूर्यचक्रे जालन्धरपीठे मित्रनाथात्मके वज्रेश्वरीदेवीश्रीविष्ण्वात्मशक्तिश्रीपादु. । तृतीयमुच्चार्य सोमचक्रे पूर्णगिरिगह्वरे ओड्डुनाथात्मके भगमालिनीदेवीब्रह्मात्मशक्तिश्रीपादु. । तुर्यं समस्तं वोच्चार्य ब्रह्मचक्रे ओड्याणमहापीठे श्रीचर्यानाथात्मके श्रीमहात्रिपुरसुन्दरीदेवीश्रीपरब्रह्मशक्तिश्रीपादु. । ह्स्त्रैं ह् स् क् लीं ह्स्त्रौं श्रीत्रिपुराम्बिकानित्यादेवीश्रीपादु. । एता अतिरहस्ययोगिन्यः सर्वसिद्धिमये चक्रे समुद्रा इत्यादि पूर्ववत्। एता हृदि न्यसेत्।

ह्रीं श्रीं मध्यमवृत्ताय नमः। तुर्यबीजमुच्चार्य श्रीत्रिपुरभैरवीनित्यादेवीश्रीपादु. । २ एताः परापरातिरहस्ययोगिन्यः सर्वानन्दमये महाचक्रे बैन्दवे परंब्रह्मस्वरूपिणि परमामृतशक्ति सर्वचक्रेश्वरि सर्वमन्त्रेश्वरि सर्वविद्येश्वरि सर्वपीठेश्वरि सर्वयोगेश्वरि सर्ववागीश्वरि सर्वसिद्धेश्वरि सर्वजगदुत्पत्तिमातृकासने चक्रासने च

---

ऐं ह्रीं श्रीं सर्वज्ञानमयीशक्तिश्रीपादुकां पूजयामि-दक्षवृषणे, ऐं ह्रीं श्रीं सर्वव्याधिविनाशिनीदेवीश्रीपादुकां पूजयामि-गुदे, ऐं ह्रीं श्रीं सर्वाधारस्वरूपिणीदेवीश्रीपादुकां पूजयामि-वामवृषणे, ऐं ह्रीं श्रीं सर्वपापहराशक्तिश्रीपादुकां पूजयामि-वामस्तने, ऐं ह्रीं श्रीं सर्वानन्दमयीशक्तिश्रीपादुकां पूजयामि-वामसृक्किण्याम्, ऐं ह्रीं श्रीं सर्वरक्षास्वरूपिणीदेवीश्रीपादुकां पूजयामि-वामनासायाम्, ऐं ह्रीं श्रीं सर्वेप्सितफलप्रदाशक्तिश्रीपादुकां पूजयामि-नासाग्रे, ऐं ह्रीं श्रीं ह्सैं ह्स्क्रीं ह्सैः श्रीमहात्रिपुराम्बाचक्रेश्वरीदेवीश्रीपादुकां पूजयामीति चक्रेश्वरीमाराध्य एता निगर्भयोगिन्यः सर्वरोगहरचक्रे समुद्रा इत्यादि पूर्ववत्। इत्यर्घोदकेनाक्षतकुसुमैर्मूलदेव्यै पूजां समर्पयेत्।

अथाष्टकोणे देवीपुरस्तादारभ्य दक्षिणावर्तेन पूजयेत्—

तदनन्तरष्टकोणादिचक्राय नम इत्यपि।<br>
विन्यस्य तस्य कोणेषु वशिन्याद्यष्टकं न्यसेत्॥<br>
चिबुकं कण्ठहृदयनाभीनां चैव दक्षिणम्।<br>
ज्ञेयं पार्श्वचतुष्कं च मणिपूरादिवामकम्॥<br>
चतुष्टयं च पार्श्वानामेतत् कोणाष्टकं पुनः।<br>
हृदयस्थत्रिकोणस्य चतुर्दिक्षु बहिर्न्यसेत्॥<br>
शरचापौ पाशसृणी त्रिकोणाय नमस्तथा।<br>
विन्यस्य तस्य कोणेषु अग्रदक्षान्तरेषु च॥

तासां समुद्राः ससिद्धयः सायुधाः सवाहनाः सपरिवाराः सर्वोपचारैर्महात्रिपुरसुन्दरी परयाऽपरया परापरया सपर्यया सम्पूजिताः सन्तु । अत्राणिमाद्यारभ्य त्रिकोणान्त-परिवारदेवतानां मूलदेवतावद् ध्यानं द्रष्टव्यम् । तदुक्तं **सङ्केतपद्धत्याम्**—

महाचक्रवरस्यान्तः पद्मरागसमप्रभाः ।
पाशाङ्कुशौ शरांश्चापं धारयन्त्यो नमाम्यहम् ॥

बाह्यचक्रेषु योगिन्यस्तदुल्लाससमप्रभाः ।
तद् ध्यानेन समा ध्येयानङ्गब्राह्म्यादयस्तथा ॥

ततो वाग्देवताष्टकेन **पुर्यष्टकन्यासं** दण्डकक्रमेण विन्यसेत् । यथा—

शीर्षांसद्वयहृत्पृष्ठगुह्याङ्घ्रिद्वयमेव च ।
पुर्यष्टकं तु विन्यस्येद् व्यापकत्वेन सुन्दरि ॥

ब्रह्मरन्ध्रललाटभ्रूमध्यकण्ठहृदयनाभिगुह्यपादान्तं च विन्यसेत् । ततः पीठ-चतुष्टयमाधारहृदयभ्रूमध्यब्रह्मरन्ध्रेषु ।

तत**स्तत्त्वन्यासः** । आधारादिब्रह्मरन्ध्रान्तं मूलादिब्रह्मरन्ध्रान्तं मूलादिक-ल्पान्तं पादादिकेशान्तं केशादिपादान्तं च व्यापकतया पूर्वोक्तैर्विन्यसेत् । ततः शक्त्युत्थापनपूर्वकमावाहनविद्यया बाह्यदेवीरूपं स्वकं ध्यात्वा पूर्वोक्तक्रमेण शिरसि पुष्पाञ्जलिं विकीर्य पूर्वोक्तक्रमेण अलङ्कृत्य मुद्राः प्रदर्श्य ध्यानं कुर्यात् ।

चक्रन्यासमहिमा **ईश्वरेण** प्रतिपादितो यथा—

एवं निगदितं देवि न्यसेद् गुह्यतमं स्मृतम् ।
एतद्गुप्ततरं कार्यं त्वया वै वीरवन्दिते ॥

(यो. हृ. ३. ६७-६८)

---

कामेश्वर्यादिदेवीनां मध्ये देवीं च विन्यसेत् ।
एवं मयोदितो देव्या न्यासो गुह्यतमक्रमः ॥[1]

(यो. हृ. ३. ६३-६७)

---

*1. इतः परं 'ख' पुस्तकवत् 'समयस्थाय' (पृ. २३८-२४०) इत्यादिको न्यासपद्धतिसमाप्ति-पर्यन्तः पाठोः 'ग' पुस्तकेऽपि विद्यते ।*

समयस्थाय[1] दातव्यं नाशिष्याय कदाचन ।
गुह्याद् गुह्यतरं चैतत् तवाद्य प्रकटीकृतम् ॥
मूलदेव्यादिकं न्यासमणिमान्तं [2]पुनर्न्यसेत् ।
शिरस्त्रिकोणे[3] पूर्वादि कामेश्वर्यादिकं[4] न्यसेत् ।
बाणान् नेत्रे भ्रुवोश्चापौ कर्णे पाशद्वयं पुनः ॥
सृणिद्वयं तु नासाग्रे दक्षिणाद्यं तु विन्यसेत् ।
मुण्डमाला[5]क्रमेणैव न्यसेद् वाग्देवताष्टकम् ॥
बैन्दवादीनि चक्राणि न्यस्तव्यानि वरानने ।
नेत्रमूले त्वपाङ्गे च [6]कर्णपूर्वोत्तरे पुनः ॥
चूलिकायां तु निम्नार्धे शेषार्धे [7]कण्ठपृष्ठके ।
कर्णपूर्वे त्वपाङ्गे च तस्य मूले च विन्यसेत् ॥
सर्वसिद्ध्यादिकं कण्ठे प्रादक्षिण्येन विन्यसेत् ।
हृदये मनुकोणस्थाः शक्तयोऽपि च पूर्ववत् ॥
नाभौ त्वष्टदलं तत्तु वंशे वामे च पार्श्वके ।
उदरे सव्यपार्श्वे च न्यसेदादिचतुष्टयम्[8] ॥
[9]वंशवामान्तरालादि न्यसेदन्यच्चतुष्टयम् ।
स्वाधिष्ठाने न्यसेत् तस्य पूर्वाद्दक्षावसानकम् ॥
[सकामाकर्षणीर्नित्याकलाषोडकशं पुनः ।]
मूलाधारे न्यसेन्मुद्रादशकं साधकोत्तमः ॥

---

१. स्था प्रदातव्यं–ग.। २. न्यसेत्पुनः–ग., इतः परम्–'इति संहारन्यासः'–ख।
३. कोणपूर्वादि–ग.। ४. दि विन्यसेत्–ग.। ५. मालाः–ख.। ६. कण्ठपूर्वोत्तरे–ख.।
७. कर्णपृष्ठके–ग.। ८. ष्टये–ग.। ९. वंश .... स्वाधिष्ठा' नास्ति–ग.।

पुनः सव्ये च वंशे च वामे [1]चैवान्तरालके ।
ऊर्ध्वाधो दशमुद्राश्च [2]ऊर्ध्वाधोवर्जितं पुनः ॥
ब्रह्माण्याद्यष्टकं दक्षजङ्घायां तास्तु पूर्ववत् ।
वामजङ्घां समारभ्य [3]वामादिक्रमतोऽपि च ॥
सिद्ध्यष्टकं न्यसेच्छेषं द्वयं पादतले न्यसेत् ।
कारणात् प्रसृतं न्यासं दीपाद्दीपमिवोद्धृतम् ॥
एवं विन्यस्य [4]देवेशीं स्वात्माभेदेन चिन्तयेत् ।

(यो. हृ. ३. ६८-८१)

[पूजयेत् परमेशानं कामेश्वरमनीश्वरम् ॥
स्वच्छन्दाख्येन मन्त्रेण पञ्चब्रह्मषडङ्गयुक् ।
वामादिशक्तिभिः सार्धं श्रीगुरुं च शिरस्यपि ॥
मातृकान्तरिताचूलं व्यस्तव्यापकमाचरेत् ।]
मूर्ध्नि गुह्ये च हृदये नेत्रत्रितय[5] एव च ।
श्रोत्रयोर्युगले[6] देवि मुखे च भुजयोः पुनः ॥
पृष्ठे जान्वोश्च नाभौ च विद्यान्यासं विधाय च[7] ।

(यो. हृ. ३. ८२-८३)

[श्रोत्रयोश्चिबुके चैव शङ्खास्येषु दृशोर्नसि ॥
अंसद्वये च हृदये न्यसेत् कूर्परकुक्षिषु ।
जान्वंसपादगुह्येषु पार्श्वहृत्सु स्तनद्वये ॥
सकण्ठे नवयोन्याख्यो न्यासो बीजत्रयात्मकः ।]

---

१. चैकान्त– ग.। २. 'ऊर्ध्वा ....पुनः' इत्यस्य स्थाने 'विशिन्याद्यष्टकं न्यसेत्– ग.। ३. वायव्यादिक्रमेण च– ग.। ४. देवेशं स्वाभेदेन विचिन्तयेत्– ग.। ५. यमेव– ग.। ६. गलं– ग.। ७. वै– ग.।

करशुद्धिं[1] पुनश्चैव आसनानि षडङ्गकम् ॥
श्रीकण्ठादींश्च वाग्देवीराधारे हृदये तथा ।
शिखायां बैन्दवस्थाने त्वग्निचक्रादिका न्यसेत् ॥
तत्त्वत्रयं समस्तं च विद्याबीजत्रयान्वितम् ।
पादादिनाभिपर्यन्तमागलं च शिरस्तथा ॥
व्यापकं चैव विन्यस्य स्वात्मीकृत्य परं वपुः ।
सन्तर्पयेत् पुनर्देवीं सौम्याग्नेयामृतद्रवैः ॥
[2]एवं चतुर्विधो न्यासः कर्तव्यो वीरवन्दिते ।
षोढान्यासोऽणिमाद्यश्च मूलदेव्यादिकः प्रिये ॥
करशुद्ध्यादिकश्चैव साधकेन [3]सुसिद्धये ।
प्रातःकालेऽथवा पूजासमये होमकर्मणि ॥
जपकालेऽथवा तेषां विनियोगः पृथक् पृथक् ।
पूजाकाले [4]समस्तं वा कृत्वा साधकपुङ्गवः ॥
(यो. हृ. ३. ८३-८९)

[5]इत्थं करशुद्ध्यादिमूलदेवतान्तं विन्यस्य देवीं ध्यायेत् ।

**॥ इति [6]श्रीविद्यानन्दनाथविरचितायां त्रिपुरसुन्दरीपद्धत्यां ज्ञानदीपविमर्शिन्यां न्यासपद्धतिरेकादशी[7] ॥**

■

---

१. शुद्धिः–ग.। २. एतद्गुप्ततरन्यासं कर्तव्यं वीर–ख.। ३. स्वसिद्धये–ग.। ४. समस्ता–ख.। ५. 'इत्थं .... ध्यायेत्' इत्यस्य स्थाने 'इति चक्रन्यासविधिः । अथ ध्यानं कुर्यात्'–ग.। ६. 'श्रीविद्यानन्द .... र्शिन्यां' नास्ति–ख.। ७. तिः पञ्चदशी–ग.।

## कामिनीन्यासः

[1]अथ कामिनीन्यासः—अं कामिनीत्रिपुरायै नमः, आं मोदनीत्रिपुरायै नमः, इं मदनात्रिपुरायै नमः, ईं उन्मादिनीत्रिपुरायै नमः, उं द्राविणीत्रिपुरायै नमः, ऊं खेचरीत्रिपुरायै नमः, ऋं घण्टिकात्रिपुरायै नमः, ॠं कुलावतीत्रिपुरायै नमः, लृं क्लेदिनीत्रिपुरायै नमः, ॡं शिवदूतीत्रिपुरायै नमः, [एं सुभगात्रिपुरायै नमः, ऐं भगवहात्रिपुरायै नमः], ओं विद्येश्वरीत्रिपुरायै नमः, औं महालक्ष्मीत्रिपुरायै नमः, अं कौलिनीत्रिपुरायै नमः, अः वामकेश्वरीत्रिपुरायै नमः, कं कुलमालिनीत्रिपुरायै नमः, खं व्यापिनीत्रिपुरायै नमः, गं भगावहात्रिपुरायै नमः, घं वागी[श्वरी]त्रिपुरायै नमः, ङं कालिकात्रिपुरायै नमः, चं पिङ्गलात्रिपुरायै नमः, छं भगसर्पिणीत्रिपुरायै नमः, जं सुन्दरीत्रिपुरायै नमः, झं नीलपताकात्रिपुरायै नमः, ञं सिद्धेश्वरीत्रिपुरायै नमः, टं अणिमासिद्धेश्वरीत्रिपुरायै नमः, ठं अमोघात्रिपुरायै नमः, डं रत्नमालात्रिपुरायै नमः, ढं मङ्गलात्रिपुरायै नमः, णं भगमालिनीत्रिपुरायै नमः, तं रौद्रीत्रिपुरायै नमः, थं योगेश्वरीत्रिपुरायै नमः, दं अम्बिकात्रिपुरायै नमः, धं अट्टहासात्रिपुरायै नभः, नं व्योमव्यापिनीत्रिपुरायै नमः, पं वज्रेश्वरीत्रिपुरायै नमः, फं क्षोभिणीत्रिपुरायै नमः, बं शाम्भवीत्रिपुरायै नमः, भं अङ्गानङ्गात्रिपुरायै नमः, मं लोकेश्वरीत्रिपुरायै नमः, यं रक्तात्रिपुरायै नमः, रं सुस्थात्रिपुरायै नमः, लं शुक्लात्रिपुरायै नमः, वं अपराजिता-त्रिपुरायै नमः, शं संवर्तात्रिपुरायै नमः, षं विमलात्रिपुरायै नमः, सं अघोरात्रिपुरायै नमः, हं भैरवीत्रिपुरायै नमः, ळं अघोरमुखीत्रिपुरायै नमः, क्षं सर्वाकर्षिणीत्रिपुरायै नम इति [एक]पञ्चाशत्त्रिपुरान्यासं मातृकास्थानेषु न्यसेत् ।

## नवयोनिन्यासः

अथ नवयोनिन्यासः । तद्यथा—मूलविद्यात्रिभिर्बीजैः । स्थाननियमस्तु **लक्ष्मणदेशिकेन्द्रेणोक्तः**—

> कर्णयोश्चिबुके भूयः शङ्ख्योर्वदने पुनः ।
> नेत्रयोर्नसि विन्यस्येदंसयोः पिठरे पुनः ॥

---

*1. इतः परं केवलं घ.-ङ. पुस्तकयोः पाठोऽत्र स्थापितः ।*

ततः कूर्परयोः कुक्षौ जानुनोर्ध्वजमूर्धनि ।

पादयोर्गुह्यदेशे च पार्श्वयोर्हृदयाम्बुजे ।

स्तंनद्वये कण्ठदेशे न्यसेद् मन्त्रक्रमेण तु ॥

(शा. ति. १२. ९-११)

**आन्तरन्यासः**

अथान्तरन्यासो योगिनां यथा—

आधारे लिङ्गनाभौ हृदयसरसिजे तालुमूले ललाटे

द्वे पत्रे षोडशारे द्विदशदशदले द्वादशार्धे चतुष्के ।

वासान्ते वालमध्ये डफकठसहिते कण्ठकूपे स्वराणां

हक्षौ द्वौ दण्डमध्ये न्यसतु विमलधीरूर्ध्वसम्पत्तिसिद्ध्यै ॥

इति मातृकादिस्थाने। आधारादिषट्चक्रेषु षडासनानि विन्यस्यानुलोमेनाद्यवष्ट(कोण)चक्रेषु वशिन्यादिकाष्टकं विभाव्याधारानाहताज्ञानादान्तेषु पीठचतुष्टयं विन्यस्य नादान्ते भ्रूमध्यहृदयाधारेषु तत्त्वचतुष्टयं विन्यसेदिति ।

॥ इति श्रीविद्यानन्दनाथविरचितायां ज्ञानदीपप्रद(विम)र्शिन्यां श्रीमत[ त्रिपुरसुन्दरी] पद्धत्यामान्तरन्यासपद्धतिस्त्रयोदशी ॥

■

# पञ्चमं परिशिष्टम्[1]

अथ पूर्वोक्तलक्षणोद्धृते महाचक्रे नवधा चक्रसङ्केतोक्तचक्रात्मकं ध्यात्वा तन्मध्ये पीठमर्चयेत्। नवचक्रं यथा—

सर्वानन्दमयं चादौ सर्वसिद्धिमयं परम्।
सर्वरोगहरं चान्यत् सर्वरक्षाकरं तथा॥
सर्वार्थसाधकं चक्रं सर्वसौभाग्यदायकम्।
सर्वसंक्षोभणं चान्यत् सर्वाशापरिपूरकम्॥
त्रैलोक्यमोहनं चेति नवमं चक्रनायकम्।
नवधा चक्रसङ्केतं यो जानाति स पूजकः॥

(सुभगो. श्लो. १३-१५; नि.षो.टि. पृ. ६२)

पीठार्चनं यथा—मण्डूकाय नमः, कालाग्निरुद्राय नमः, आधारशक्तये नमः, मूलप्रकृत्यै नमः, अनन्ताय नमः, सूकराय नमः, पृथिव्यै नमः, इक्षुसमुद्राय नमः, विद्रुमद्वीपाय नमः, सुवर्णगिरये नमः, कालानलाय नमः, रत्नमण्डपाय नमः, कल्पवृक्षेभ्यो नमः, श्वेतच्छत्राय नमः, वेदिकायै नमः, रत्नसिंहासनाय नमः।

अथ दिक्षु विदिक्षु धर्मादीन् पूजयेत्। यदुक्तं श्रीमत**प्रपञ्चसारे**—

रक्तं धर्मं वृषतनुमथाग्नौ हरिं श्यामवर्णं
ज्ञानं रक्षोदिशि मरुति पीतं च वैराग्यसंज्ञम्।
भूताकारं द्विरदतनुमैश्वर्यमीशे च कृष्णं
नञ्पूर्वैस्तैः यजतु दिशि चित्राणि गात्राणि पीठे॥

(प्र. सा. ६.२०)

---

1. *पञ्चमेऽस्मिन् परिशिष्टे केवलं घ-ङ मातृकयोः पाठः स्थाप्यते। पाठोऽयं तत्र न्यासध्यानपद्धत्योरन्तराले स्थितोऽस्ति।*

अनेन क्रमेण ज्ञात्वाऽर्चयेत् । पुनरपि मध्ये—मायायै नमः, विद्यायै नमः, विंशोत्तरद्विशतभुवनकण्टकपञ्चाशत्सूत्रगर्भितनाभिनालाय नमः, अधश्छन्देभ्यो नमः, शुद्धछन्देभ्यो नमः, द्वात्रिंशत्तत्त्वाधिपानन्ताय नमः, कर्णिकायै नमः, सूर्यमण्डलाय नमः, सोममण्डलाय नमः, मं वह्निमण्डलाय नमः, सं सत्त्वाय नमः, रं रजसे नमः, तं तमसे नमः, अं उं मं ज्ञानात्मने नमः, मायातत्त्वात्मने नमः, कलातत्त्वात्मने नमः, विद्यातत्त्वात्मने नमः, परमतत्त्वात्मने नमः, ह्सौं ब्रह्मविष्णुशिवेश्वरसदाशिवपञ्चमहाप्रेतासनाय नमः । तदुपरि न्यासोक्तक्रमेण षडासनानि पूजयेत् । तत्र पुनरपि ऐं ह्रीं श्रीं समस्तप्रकटगुप्तगुप्ततरसम्प्रदायक्रमकुलकौलि[नी]निगर्भरहस्यरहस्यातिरहस्ययोगिनीश्रीपादुकां पूजयामीति पुष्पाक्षतं विकीर्य सामान्यपात्रभोगपात्रसाधनार्थं कुम्भं स्थापयेदिति ।

**॥ इति श्रीविद्यानन्दनाथविरचितायां ज्ञानदीपप्रद(विम)र्शिन्यां महात्रिपुरसुन्दरीपद्धत्यां पीठार्चनपद्धतिश्चतुर्दशी ॥**

---

मण्डलस्यात्मनः कुम्भं वामे संस्थापयेत् सुधीः ।
चतुरस्रवृत्तषट्कोणत्रिकोणान्तं कुलाङ्कितम् ॥
अङ्गानि पूजयेत् तत्र यथोक्तं **पूर्वशूरिभिः** ।
आनन्दभैरवाय वौषट् नम इत्यत्र पूजयेत् ॥
आधारं स्थापयेत् तस्मिन् मण्डले भाण्डपूर्वकम् ।
आनन्दभैरवाय वौषट् नम इत्यर्चयेत् [सुधीः] ॥
ततः सुधूपितं भाण्डमानन्देश्वरपूर्वकम् ।
आधारे स्थापयेत् तस्मिन् सौवर्णं वाथ राजतम् ॥
कांस्यजं मृण्मयं वापि सौवर्णं भोगदं भवेत् ।
राजतं मोक्षदं प्रोक्तं कांस्यं [प्री]तिकरं भवेत् ॥
मृण्मयं पुष्टिजनकं प्रोक्तं श्री**कुम्भस[द]ग्रहे** ।

हसक्षमलवरयूं आनन्दभैरवाय वौषड् इति कुम्भे निक्षिप्य पुष्पं विहितजलेन पूरयेत् । जलविशेषस्तु **अष्टचक्रेश्वरे**—

जलात् शतगुणं गन्धोदकं शतगुणं ततः ।
दुग्धं दधि ततश्चापि मधु शतगुणं घृतम् ॥
घृतात् शतगुणं मद्यं वामदक्षिणशासने ।
सुस्वादुना प्रसन्नेन तनुना सुसुगन्धिना ॥
अलिना बिन्दुमात्रेण नखाग्रेणापि सुन्दरि ।
कुलकौलादियोगिन्यो विनयादिषु देवताः ॥
समयाद्याः प्रहृष्यन्ति नात्र कार्या विचारणा ।
इत्यादि श्रुतितश्चैव तोयबिन्दुनिपातनात् ॥
समस्तदेवतातृप्तिस्ततश्च गुण्यतामपि ।
तत्र त्रिकोणषट्कोणमालिख्याङ्गं समर्चयेत् ॥
यथापूर्वं नवात्मानमानन्दभैरवं तथा ।
अर्चयेत् तस्य मध्ये तु देवं स्पृष्ट्वा जपेत् त्रिशः ॥
तस्मै पुनस्त्रिशः कुर्यात् तर्पणं साधकोत्तमः ।
ततः सम्पूजयेत् तस्मिन् महात्रिपुरसुन्दरीम् ॥
मूलविद्यां समुच्चार्य जपेत् तत्संख्यया पुनः ।

ह स क्ष म ल व र यूं ह स क्ष म ल व र यीं सः सः आनन्दभैरवाय वौषड् इति तत्र बिन्दुभिस्तदेव तर्पयेत्—

ऐं क्लीं सौं

अखण्डैकरसानन्दकरे परसुधामयि ।
स्वच्छन्दस्फुरणं मन्त्रं निधेहि कुलरूपिणि ॥
अकुलास्थामृताकारे सिद्धिज्ञानकरे परे ।
अमृतत्वं निधेह्यस्मिन् त्वं स्तुता क्लिन्नरूपिणि ॥

ऐं क्लीं सौः

त्वद्रूपैकरसाधारेन्द्रत्वाशेषस्वरूपिणि ।
भूत्वा परामृताकारं मे चित्संस्फुरणं कुरु ॥

इति त्रिवारं गन्धाक्षतकुसुमैरभ्यर्च्य,

तर्पणं तु त्रिशः कुर्यात् कीलिक्या मुद्रया पुनः ।

इति कुम्भसंस्कारविधिः ॥

अथ सामान्यार्घपात्रस्थापनविधिरुच्यते । पात्रसंख्यानियमः **कुलसार-संग्रहे**—

अर्घ्यस्य त्रीणि [1]पात्राणि पाद्यस्यापि त्रयं भवेत् ।
[2]सदाऽऽचमनपात्राणि स्यादप्येकमतं भवेत् ॥
यदाप्येवं विशेषस्तु सामान्यार्घ्यं प्रकल्पयेत् ।

उक्तं हि—

एकं पात्रं न कर्तव्यं यदि साक्षात् कुलेश्वरः ।
मन्त्राः पराङ्मुखा यान्ति चापदश्च पदे पदे ।
इह लोके च दारिद्र्यं मृते च पशुतां नयेत् ॥

पुनरप्युक्तं हि—

चक्रबाह्यस्थदेवीनां चक्रानां चैव तर्पणम् ।
सामान्यार्घ्येण कर्तव्यं नान्येन तु कदाचन ॥

उक्तं हि **अष्टचक्रेश्वरे**—

सामान्येनार्घ्यपात्रेण बहिः कुर्यात् प्रपूजनम् ।
यस्य कस्यचिदन्यस्य चक्रबाह्यस्य पूजने ॥
कुलक्रमविहीनस्य तत्स्थाननिरतस्य च ।
विशेषार्घ्येण दातव्यं प्रायश्चित्तं प्रपद्यते ॥

---

१. 'पात्राणि' नास्ति—घ. । २. 'सदा .... प्रकल्पयेत्' नास्ति—घ. ।

तदर्घबिन्दुस्तं तन्तुं त्रैपुरादिक्रमाश्रयात् ।
कल्पितस्थाननियमाद् बटुकादीनथार्चयेत् ॥
सामान्यार्घ्यस्थितान्येव तेषु द्रव्याणि चार्चयेत् ।
ततः स्ववामभागे तु मण्डलं कारयेत् सुधीः ॥
सशक्तिहुतभुग्गेहं चतुरस्रं च तद्बहिः ।
अङ्गानि पूजयेत् तत्र पूर्वोक्तजातिसंयुतः ॥
आधारं स्थापयेत् तत्र वह्नेर्दशकलात्मकम् ।
तस्मिन् पात्रं तारमयं न्यसेद् दिनकरात्मकम् ॥
जलासवेन सम्पूर्य केवलेनैव साधकः ।

उक्तं हि **देवराजपद्धत्याम्**—

सामान्यपात्रं सजलं सासवं परिकल्पयेत् ।
प्रकल्पयेत् सोममयं तदर्घ्यं साधकोत्तमः ॥
जपेद् विद्यां त्रिशः पञ्चात्मानमर्घ्यमिदं क्रमम् ।

अथ मूलश्रीविशेषपात्रस्योत्तरे विशेषपात्रोक्तविधिना सामान्यार्घ्यपात्रं संस्थाप्य विशेषार्घ्यबिन्दुं निक्षिप्य तेनार्घ्यजलेन बाह्यक्रमं संप्रोक्षयेदिति । सामान्यार्घ्यविशेषार्घ्यपात्रयोर्मध्ये त्रिकोणं पात्रमण्डलं विधाय साधारं सद्वितीयं प्रथमद्रव्यपूरितं पात्रं निधाय विशेषार्घ्यबिन्दुं निक्षिप्य तेन स्वशिरसि गुरुपङ्क्तिं तर्पयेद्यथा—

ह्रीं श्रीं परमशिवनाथश्रीपादुकां पूजयामि तर्पयामि, ह्रीं श्रीं कामेश्वर्यम्बापादुकां पूजयामि., ह्रीं श्रीं दिव्यौघानन्दनाथपादश्रीपादुकां. तर्पयामि, ह्रीं श्रीं महौघानन्दनाथश्रीपादुकां. तर्पयामि, ह्रीं श्रीं सर्वानन्दनाथश्रीपादुकां. तर्पयामि, ह्रीं श्रीं प्रज्ञानदेव्यम्बाश्रीपादुकां. तर्पयामि, ह्रीं श्रीं प्रकाशानन्दनाथश्रीपादुकां. तर्पयामि, ह्रीं श्रीं दिव्यानन्दनाथश्रीपादुकां. तर्पयामि, ह्रीं श्रीं विचित्रानन्दनाथश्रीपादुकां. तर्पयामि, ह्रीं श्रीं कैवल्यम्बाश्रीपादुकां. तर्पयामि, ह्रीं श्रीं शक्तीश्वरानन्दनाथश्रीपादुकां. तर्पयामि,

ह्रीं श्रीं कमलानन्दनाथश्रीपादुकां. तर्पयामि, ह्रीं श्रीं मनोहरानन्दनाथश्रीपादुकां. तर्पयामि, ह्रीं श्रीं स्वात्मानन्दनाथश्रीपादुकां. तर्पयामि, ह्रीं श्रीं संविदानन्दनाथश्रीपादुकां. तर्पयामि, ह्रीं श्रीं अमृतानन्दनाथश्रीपादुकां. तर्पयामि ह्रीं, श्रीं अजेशानन्दनाथश्रीपादुकां. तर्पयामि, ह्रीं श्रीं आत्मानन्दनाथश्रीपादुकां. तर्पयामि, ह्रीं श्रीं चन्द्रानन्दनाथश्रीपादुकां. तर्पयामि—इति स्वशिरःस्थिताय गुरवे तदर्घपात्रं निवेद्य तत्त्वत्रयमन्त्रेण पात्रत्रयं प्रसादाक्षत्परुणां नन्दी भूषपात्रस्थो देवीं सचक्रां सध्यानां सम्पूज्य मुद्रां प्रदर्श्य सामान्यार्घेण दत्त्वा स्वशिरःस्थां सचक्रां देवीं सध्यानां सम्पूज्य सामान्यार्घविशेषार्घजलेन सन्तर्प्य उपचाराणि दत्त्वा बाह्यक्रमं पूजयेदिति ।

**॥ इति श्रीविद्यानन्दनाथविरचितायां ज्ञानदीपप्रद(विम)र्शिन्यां [त्रिपुरसुन्दरीपद्धत्यां] सामान्यार्घपात्रविधिः पञ्चदशी ॥**

---

अथ चक्रमध्ये षडा[स]नपूजा षड्योगिनीपूजा यथा—

ह्रीं श्रीं डां डीं डूं डैं डः डमलवरयूं ग्लूं डां डाकिनि त्वग्धातुगते चतुषष्टिलक्षकोटियोगिनीस्वामिनि सर्वसत्त्ववशङ्करि आज्ञां देहि मां रक्ष रक्ष डाकिन्यम्बाश्रीपादुकां पूजयामि । ह्रीं श्रीं रां रीं रूं रैं रौं रः रमलवरयूं म्लूं रां राकिनि रक्तधातुगते द्वात्रिंशल्लक्षकोटियोगिनीस्वामिनि सर्वसत्त्ववशङ्करि आज्ञां देहि मां रक्ष रक्ष राकिन्यम्बाश्रीपादुकां पूजयामि । ह्रीं श्रीं लां लीं लूं लैं लौं लः लमलवरयूं प्लूं लां लाकिनि मांसधातुगते षोडशलक्षकोटियोगिनीस्वामिनि सर्वसत्त्ववशङ्करि आज्ञां देहि मां रक्ष रक्ष लाकिन्यम्बाश्रीपादुकां पूजयामि । ह्रीं श्रीं कां कीं कूं कैं कः कमलवरयूं म्लूं कां काकिनि मेदोधातुगतेऽष्टलक्षकोटियोगिनीस्वामिनि सर्वसत्त्ववशङ्करि आज्ञां देहि मां रक्ष रक्ष काकिन्यम्बाश्रीपादुकां पूजयामि । ह्रीं श्रीं सां सीं सूं सैं सौं सः समलवरयूं न्लूं सां साकिनि मज्जाधातुगते चतुर्लक्षकोटियोगिनीस्वामिनि सर्वसत्त्ववशङ्करि आज्ञां देहि मां रक्ष रक्ष साकिन्यम्बाश्रीपादुकां पूजयामि । ह्रीं श्रीं हां हीं हूं हैं हौं हः हमलवरयूं ग्लूं हां हाकिनि अस्थिधातुगते द्विलक्षकोटियोगिनीस्वामिनि सर्वसत्त्ववशङ्करि आज्ञां देहि मां रक्ष रक्ष हाकिन्यम्बाश्रीपादुकां पूजयामि ।

ततो मध्यत्रिकोणमध्ये चतुष्पीठपूजा—

ऐं ह्रीं श्रीं लं ओडियाणपीठश्रीपादुकां पूजयामि, यं कामगिरिपीठश्रीपादुकां पूजयामि, ह्रीं श्रीं वं जालन्धरपीठश्रीपादुकां पूजयामि, रं पूर्णगिरिपीठश्रीपादुकां पूजयामि—इति त्रिकोणमध्याग्रदक्षवामकोणेषु पूजयेत् तर्पयेच्च। ह्रीं श्रीं लं ब्रह्मणे पृथिव्यधिपतये श्रीमञ्चपादप्रेतासनाय नमः, ह्रीं श्रीं वं विष्णवे अपामधिपतये श्रीमञ्चपादप्रेतासनाय नमः, ह्रीं श्रीं रं रुद्राय तेजोऽधिपतये श्रीमञ्चपादप्रेतासनाय नमः, ह्रीं श्रीं यं ईश्वराय प्राणाधिपतये श्रीमञ्चपादप्रेतासनाय नमः, ह्रीं श्रीं हं सदाशिवाय वियदधिपतये श्रीमञ्चवलयाकारप्रेतासनाय नमः—इति त्रिकोणमध्ये पूजयेत्। तदुपरि ह्रीं श्रीं प्रसूनतूलिकायै नम इति पुष्पमयदिव्यतूलिकां विभाव्य पूजयेत्। तदुपरि ऐं क्लीं सौः कामेश्वरीमूर्तिभ्यां नम इति मध्ये पूजयेत्। ततः श्रीचक्रवामे दक्षिणे च ऐं ह्रीं श्रीं कुलगणपतिनाथवल्लभाम्बापादुकां पूजयामि। ऐं ह्रीं श्रीं कुलबटुकनाथवल्लभाम्बा[श्री]पादुकां पूजयामि—इति सम्पूज्य।

अथ करकलितत्रिखण्डीमण्डितां जलालो( ?)बालदिनकरकिरणारुण-प्रसूनचन्दनदूर्वाक्षतसिन्दूरपूरिते कुलकुण्डलिनीसुषुम्नावर्त्मना षडम्बुजानि निर्भिद्य व्योमपञ्चकं स्वतेजसा विदार्य परतेजः सङ्गमय्य तदुद्भवां कुलामृतादुत्थां विश्रम्य मानसेनोपचारेणा[रा]ध्य परामृता लोहितमयी चैतन्यमयी तां भवतीं प्रवहन्नाड्या तदञ्जलौ निर्गमय्य,

हस्रैं हस्क्लीं हस्रौः

महापद्मवनान्तःस्थे परमानन्दनन्दिते।
जगत्त्रयहिते मातरेह्येहि परमेश्वरि॥

इति समावाह्य संस्थाप्य सन्निरुध्य सन्निधीकृत्यावगुण्ठनसकलीकरणानि विधाय तां ध्यानोक्तरूपिणीं ध्यायेत्।[1]

■

1. *इतः परं मूले स्थापिता ध्यानपद्धतिर्द्रष्टव्या (पृ. ५६-६१)।*

# षष्ठं परिशिष्टम्[1]

## स्तोत्रपद्धतिः

प्रशान्तपदतः परिस्फुरति येयमाद्यप्रभा
समस्तगुणगर्भिणी विविधवर्णमन्त्राम्बिका ।
निरुत्तरचमत्कृतिप्रसरसारसंबोधनी
जयत्यगमधामगा त्रिपुरसुन्दरी चाव्यया ॥१८ ॥

इच्छाज्ञानक्रियाख्यं त्रितयमिह परं वाग्भवादिक्रमाद्यै-
र्या देवी निर्विभागा परमशिवपदा स्फारयन्ती नितान्तम् ।
स्वातन्त्रोल्लासवृत्तिर्निरवधिविभवा निर्मला निर्निकेता
नित्या वर्णप्रचारस्फुरिततनुरता सातयत्पद्यशक्तिः ॥१९ ॥

वर्गैरष्टभिराकृतिस्ततगतिः शीर्षांशहृत्पृष्ठगै-
र्गुह्याङ्घ्रिक्रमनिष्ठितेन च सदा ज्ञानप्रदानन्तदा ।
चिद्रूपा परमा विभाति नितरां देव्यक्षयाख्याश्रयी
पीठाज्ञानिलया त्रिमूर्तिवसतिः कालापहा कौलिकी ॥२० ॥

अनुत्तरेच्छोभयसामरस्या या मूर्तिराद्या प्रविभाति दीप्ता ।
आनन्ददा हार्धकलार्धगर्भा तां नौमि शृङ्गाटवरासनस्थाम् ॥२१ ॥

हुतवहरविसोमब्रह्मरन्ध्रान्तराले
स्फुरति निरवकाशा वस्तुशक्तिः स्वतन्त्रा ।
सकलभुवनवर्गं पूरयन्ती स्वभाभिः
परमशिवपराभ्यां भिन्नमूर्तिं नुमस्ताम् ॥२२ ॥

---

*१. स्तोत्रपद्धत्यां (पृ. ११४-११६) इतः परं घ-ङ पुस्तकयोः परिदृश्यमानोऽधिकः पाठोऽयम् ।*

ब्रह्मव्योम्ना विकसितगतिः शक्तिराद्या स्फुरन्ती
मायागर्भे समरसतया व्यक्तरूपं विहाय ।
त्यक्त्वा भूमिं भरितभुवनां जन्मसंस्थानसूक्ष्म-
प्राणोद्योतैः शिखिशितमुखा मोहिनी ग्रन्थिसत्ताम् ॥२३ ॥

प्रोल्लङ्घ्याशुव्रततहृदये व्योमधामाव्ययाभा
स्वैरं प्राप्य क्षपितकलना या महानादवृत्तिः ।
नित्यां देवीं निरवधिलसद्वाग्विलासप्रपञ्च-
स्फूर्तिर्दामप्रथितरचनाहेतुभूतां नुमस्ताम् ॥२४ ॥

भूयस्ततो हृदयबद्धबलक्रियायाः
शक्तिः परा निरवधिं करुणं विरौति ।
प्राणप्रवृत्तिमनघां हृदयप्रदिष्टां
देवीं परां त्रिपुरसुन्दरिना[म]धेयाम् ॥२५ ॥

सर्वाभिलाषपरिपूरणकल्पवल्ली
बिन्दुं विदार्य परमामृतक्षीरवर्षम् ।
वेगान् विमुच्य परितः कपिलावनिस्था
हार्दाकृतिः प्रलयवह्निसहस्रदीप्ता ॥२६ ॥

मायाविमोहविलयाच्छिवधामखस्था
शक्तिः परा जयति सा परमाभिधेया ।
वृत्त्या महन्मुखपरं वचसामगम्यं
संसाद्य सत्सु वितनोति विमुक्तलक्ष्मीम् ॥२७ ॥

यस्याः स्मृतेश्च लयमेति विपत्त्रिधोत्थं

इत्थं देव्या निरवधिमहः सर्वदिक्कं विभाति

त्रैधात्वन्तं सततविततं वामचारक्रमेण ।

ऋद्धिः सिद्धिर्निरुपममहामोक्षकक्षामपीह

प्रस्फार्याशु स्वकुलपदगं यस्य सम्यक् स मुक्तः ॥२८॥

शाक्तेन बीजेन विकाश्य [श]क्तिमिच्छात्मिकां या विषमेति सर्वम् ।

उन्मीलयन्ती भुवनान्यभेदरूपाणि गर्भे तु नमाम्यहं ताम् ॥२९ ॥

नैरञ्जनं धाम परं नितान्तं विकाशयन्ती सदसद्विहीनम् ।

चक्राश्रया विक्रमविक्रमोद्यं संहारिणीं नौमि चितिं स्वतन्त्राम् ॥३० ॥

कामाख्यबीजेन [प्र]तिक्रियाख्यं प्रोल्लास्य विश्वं भुवनं समग्रम् ।

करोति नित्यं निजवीर्यवृत्तिमाहात्म्यतो या प्रणमाम्यहं ताम् ॥३१ ॥

आद्येन बीजेन विकाश्य देवीं ज्ञानाभिधां शक्तिमिहामिताभाम् ।

विस्पष्टगङ्गाजलवीचिवन्द्यां तनोति काव्यं रुचिरं नुमस्ताम् ॥३२ ॥

ब्राह्मे बिले हृद्भुवि जन्मधात्रि(म्नि) यद्वर्णभङ्गैः सततं विभाति ।

तां नौमि देवीं परनादशक्तिप्रोल्लासरूपां त्रिपुरां त्रिमार्गाम् ॥३३ ॥

स्फटिकमणिनिभं यच्छक्तिजीवं करन्ध्रे

प्रभवति परसंवित्स्वामिनीनाथरूपाम् ।

तदहमिह सुभक्त्या सर्वकालं प्रपद्ये

भवभयपरिशोषो यच्च संस्मृत्य याति ॥३४ ॥

अभिनवदिननाथप्रस्फुरत्कान्तवर्णं

हृदयगगनधाम्नि भ्राजते यत्सदैव ।

तदिह कुसुमचापस्फारकं कामबीजं

भवति निखिलकान्तासन्ततेर्ध्यानयोगात् ॥३५ ॥

कुसुमविशिखवर्णैः पञ्चभिः साध्यनाम
स्फुरदनुपमनादस्फारमाविश्य सम्यक् ।
द्रुतमिह नितरां यत् कामराजोदरस्थं
कतिपयदिनपूजाध्यानतः क्षुभ्यते तत् ॥३६ ॥

कुलगगनपदान्तर्दिव्यलिङ्गाग्रभागे
प्रभवति परबीजं वाग्भवं विद्युदाभम् ।
तदिह विविधविद्याद्योतकं ध्यानगम्यं
जयति निरुपरागं तत्परं विश्वरूपम् ॥३७ ॥

भावार्थाद्यैः स्फुरदमितमहो भास्वरैः षट्प्रकारै-
र्दिव्यं मान्त्रं वपुरनुपमं तावकं ये विदन्ति ।
तेषां देवि त्वमपरपरासिद्धिमुच्चैर्ददासि
स्थूलं सूक्ष्मं परमथ महाध्यानमाश्रित्य मातः ॥३८ ॥

इति जननि तदेतद्दिव्यमन्त्राक्षराणां
निगदितमनुपाधिध्यानमध्यात्मदृष्ट्या ।
गुरुवरपरवक्त्रस्फारसत्सम्प्रदायात्
प्रभवति निजचित्ते यस्य सम्यक्त्वसिद्धिः ॥३९ ॥

इत्थं तदिच्छोच्छलिता त्रिधेयं वर्णोज्झितं वर्णनयस्वरूपम् ।
प्रकाशयन्ती परचित्प्रकाशं प्रोल्लासितां तां प्रणमाम्यहं ताम् ॥४० ॥

जगत्त्रयं गौणमथाविरूपं धाराभिधं कारणसंस्थितं च ।
कर्तादिकं तात्त्विकमप्यवद्यं न्यायोत्थमाशुप्रथितं शिवायाः ॥४१ ॥

त्रिधा त्रिधेदं तु विकाश्य विश्वं सर्वाधिकानुत्तरसिद्धिभूते ।
शिवामनःप्रच्युतवृत्तिरुच्चैः स्थितेह तां नौमि परां भवानीम् ॥४२ ॥

विश्वं सर्वं समरसतया व्यक्तमन्तर्विधत्ते
चिद्व्योमाङ्का कथितविभवा या विकाशानिरुक्ता ।
संहृत्येवाश्रिततमबीजभावं स्वतन्त्रा
शक्तिः सा मां प्रथममुदिताकारमाप्तां कुरु त्वम् ॥४३ ॥

कौण्डल्यै या प्रभवति शिखाकारमाश्रित्य दीप्ता
ज्येष्ठा दण्डाकृतिरिव कला दर्शिता शास्त्रदृष्ट्या ।
रौद्री रौद्रा त्रिजगदखिलं भासयन्ती त्रिकोणा
त्वं देव्येवं त्रिदशनमिते भास्यनन्ते(न्तै)कके(कै)व ॥४४ ॥

नामरूपकलनाकुलप्रिये स्वैरतोऽत्र कुलनायिके कुलम् ।
आश्रिता त्वमकुलं कुलक्रमं कौलि तेकिमपि चेष्टितंत्विदम् ॥४५ ॥

प्रकाशधर्मा भगवान् महेशो यया विना किं नु न कुत्रचिच्च ।
यं वीर्यमाहात्म्यविकाशयोगाद् विश्वोपमाभासनिराशकृद्यः ॥४६ ॥

प्राणो वह्निरिहोच्यते प्रलयकृद्ध(धर्मा)न्मादिशीर्षान्तगः
प्रोन्मेषक्षितितुर्यमारुतमहाभूतान्तसत्ताश्रयः ।
शक्तिः शाम्भवधामतस्त्वनवधिः संसृक्क्रमप्रोदिता
कादिक्षान्तगता सदाप्तगुरुतो ज्ञात्वामृतत्वं भजेत् ॥४७ ॥

अग्निरूर्ध्वगतिर्नूनं वपुः संहर्तुमुद्यतः ।
शक्तिममृतवर्षेण तं विलाप्य ततः सृजेत् ॥४८ ॥

अपानधर्मा प्रतिभाति यस्याः पुनः स्थितः पूरकधामनिष्ठः ।
गणाधिनाथः सकलान् विलाप्य संकल्पविघ्नैः प्रणमाम्यहं ताम् ॥४९ ॥

प्राणप्रवाहप्रचयस्वरूपो द्वाराग्रवर्ती बटुको विभाति ।
बाह्यार्थवर्गेऽद्य निवासयुक्तो यस्या नतोऽहं त्रिपुरेश्वरीं ताम् ॥५० ॥

सुधाभिमुख्यं प्रविभाति यस्याः षोढासनं चक्रकलात्मिकायाः ।
षट्चक्ररूपां प्रणमाम्यनल्पप्रोन्मेषदां तां त्रिपुराभिधानाम् ॥५१ ॥

त्र्यस्रमध्यगगनोदरोदितां सर्वचक्रविभवाद्यनायिकाम् ।
तुर्यरूपमवगाह्य भाति या तां पुरत्रितयसुन्दरीं नुमः ॥५२ ॥

ओडियाणपरपीठसंश्रिता [या चितिः] निरवकाशधर्मिणी ।
निर्विकल्पपरधर्मचारिणी या कला चिदतनु नतोऽस्मि ताम् ॥५३ ॥

सर्वज्ञताद्यानि पराणि भान्ति यस्याः सदाङ्गानि हृदादिगानि ।
तां नौमि देवीं परबोधयित्रीं स्पन्दात्मरूपामिह वामकेशीम् ॥५४ ॥

ईशादिशक्तित्रितयक्रमेण कामेश्वरीमुख्यमिह त्रिपञ्च ।
पीठत्रयाकारमये त्रिकोणे चकास्ति यस्याः प्रणमाम्यहं ताम् ॥५५ ॥

रुद्रस्य विष्णोः कमलोद्भवस्य च ब्रह्मतनोः शिवस्य ।
एकैव शक्तिः प्रविभाति नित्यं निजेच्छया जन्मपदे चतुर्थी ॥५६ ॥

शब्दादितन्मात्रवपुर्महोग्रं यस्याः पुरोगामि महः समिद्धम् ।
अष्टाष्टकं चक्रवरान्तराले विराजते तां प्रणमामि देवीम् ॥५७ ॥

द्विपञ्चकोणेऽथ विभाति दीप्तं चक्रे द्वितीये दहनात्मरूपम् ।
सिद्धिप्रदादिप्रमुखं तु यस्या व्यक्तं पुरस्थं त्रिपुरां नुमस्ताम् ॥५८ ॥

चतुर्दशारे कृतसुप्रदिष्टसंक्षोभिणीमुख्यमिहार्कचक्रम् ।
अन्तर्बहीरूपकलाद्वयेन युक्तं तु यस्याः सततं नुमस्ताम् ॥५९ ॥

पद्मेऽष्टपत्रे स्थितमग्रकोणे चक्रं तु पुर्यष्टकभेदभिन्नम् ।
पूर्वाद्यहङ्कारमयं त्वनङ्गपुष्पादिकं यत्पुरगं नमामि ॥६० ॥

द्विरष्टपत्रे जलजान्तराले शीतांशुरश्मिप्रविभक्तगात्रे ।
कामाभिधातुल्यमिहोदितं तु यस्याश्रितेस्तामिह नौमि नित्याम् ॥६१ ॥

बाह्यनिष्ठचतुरस्रदिग्गता मातरोऽष्टककलात्मिका इमाः ।
व्यक्तवर्गतनवः षडश्रगास्तां नमामि परराववचारिणीम् ॥६२ ॥

त्र्यस्रादिचक्रनिवहे प्रथिता सदेव
. . . चक्रमये च देवी ।
निर्वाणधामविभवा परमेशधाम्नि
येयं विराजितवपुः स चितिं नुमस्ताम् ॥६३ ॥

ददाति देवी परसिद्धिवर्गं याऽष्टप्रकारं त्वणिमादिरूपम् ।
ध्याता सती तामिह मध्यधाममार्गे चितां शुद्धचितिं स्मरामः ॥६४ ॥

मुद्राभिरुच्चैर्दशभिश्च धामरूपाभिराशु प्रविभात्यमाया ।
त्रिखण्डमुद्रादिमयाभिराद्या येयं चितिस्तां प्रणमामि नित्याम् ॥६५ ॥

मोदयन्ती स्वचित्स्फारैर्द्रावयन्ती मलानि या ।
मुदं रातीति मुद्राख्याः ख्यातास्ता इह शक्तयः ॥६६ ॥

एकैकया पूजनवैभवेन नानाविचित्रेण बहुस्वभावम् ।
प्रस्फार्य रूपं निजमप्रमेया विराजते तां प्रणतोऽस्मि देवीम् ॥६७ ॥

प्रोद्यम्य पूजाक्रमभेदभङ्गं या देव्यपव्युत्क्रमतः समन्तात् ।
निजस्वरूपप्रतिपादनाय तां नौमि देवीं गुरुमूर्तिमुग्राम् ॥६८ ॥

चिद्विमर्षवपुषो निरन्तरा रश्मयस्त्रिपुरसुन्दरीमयाः ।
भान्ति ते परशिवाम्बरप्रभं मण्डलं तदिह धामवाच[क]म् ॥६९ ॥

रेखाक्रमो भाति विचित्रवृत्तिर्येयं स्म शक्तिः प्रसरप्रदेयम् ।
एकस्य विद्यामतनोरनेकं तवे[ह] सत्यं हृदि पोस्फरीति ॥७० ॥

एकेन वा चक्रवरेण देवीपूर्वोदयं सर्वविकल्पमुक्तम् ।
संसूचयन्ती परभक्तिभाजां तां शक्तिमानन्दतनुं नमामि ॥७१ ॥

दिशादिवृत्तिप्रचयस्वरूपं शरौघमुच्चैरिह पञ्चधा या ।
विभेद देवी नितरामनादिभेदैकमूर्तिं प्रणमाम्यहं ताम् ॥७२ ॥

चैतन्यविस्फारवपुर्विभाति या कामुकं बुद्धिगुणैरहीनम् ।
तां नौमि देवीं परचिद्विकाशरूपेश्वरीं भिन्नविकाशशक्तिम् ॥७३ ॥

आकृष्य पाशेन समस्तदोषान् मोहादिकान् कौण्डलिविग्रहेण ।
भिनत्ति याऽस्त्रेण महाङ्कुशाख्यारूपेण संदारकुलामयेन ॥७४ ॥

तां नौमि देवीं कुलशून्यधाममध्योदिताकारणपञ्चकं च ।
जन्मादिभूम्यन्तगं(गतं) समन्ताद्विलापयन्तीं कमलामवाच्याम् ॥७५ ॥

यद्द्वादशान्तस्थितशैवधाम लब्धास्यहो कालकलाविमुक्ताम् ।
तां नौमि देवीं परशून्यगर्भे मान्तातिशान्तं परमे वहन्तीम् ॥७६ ॥

पीयूषधाराप्रचयेन नित्यामापूर्य जन्मावधि धाम्नि भूयः ।
लब्धप्ररोहप्रभवप्रशान्तिरूपेह तां शक्तिमहं नमामि ॥७७ ॥

आधारमाकुञ्च्य गुरूक्तयुक्त्या प्राणं निरुध्योर्ध्वगतं समस्तम् ।
प्रज्वाल्य मध्यस्थितशक्तितेजःपुञ्जं समाधिं विभजन्ति धन्याः ॥७८ ॥

इत्थं समाविश्य कुलक्रमस्था मुद्रा महातन्त्रमयी सुरायाम् ।
प्रकाशतां याति नभःस्वरूपा येयं पराशक्तिरिह स्तुमस्ताम् ॥७९ ॥

अनेकसद्देशिकसम्प्रदायक्रमोदयेनाश्वनुगम्य तेधा(षा)म् ।
देवी नु तेषां प्रतिभाति मुक्तिः सतां नुता त्री प्रणमाम्यहं ताम् ॥८० ॥

देवीं नुमस्तां परितः स्वसंविद्रूपां पराभक्तिविशेषयोगात् ।
यया मलादित्रितयप्रपञ्चः प्रक्षाल्यते बोधजलप्रपूरैः ॥८१ ॥

पुष्पादिबाह्यव्रततोपचारैर्देव्यर्च्यते भक्तजनैः सदैव ।
आभ्यन्तरा काप्यमितात्र पूजा तस्यां स्वरूपानुगुणां स्थितां याम् ॥८२ ॥

तामेव वक्ष्ये गुरुवक्त्रशक्त्या संक्षेपतः साधुविबोधनाय ।
देवीस्वरूपं विततप्रकाशं पञ्चप्रवाहोदितशक्तिचक्रम् ॥८३ ॥

क्रमोद्धते भावविभावपुष्पैर्याहर्निशं देव्यनुरोधतोऽन्तः ।
समर्च्यते सद्भिरिमां नुमस्तां देवीं महाशक्तिशरीरभाजनम् ॥८४ ॥

ब्राह्माद् बिलादुद्गममोदितेयं शक्तिप्रभा धूमशिखेव भाति ।
यदग्रगां नौमि समस्तभावं संहारशीतां निजचिद्विभूतिम् ॥८५ ॥

अखण्डितस्वात्ममहावभासचित्कुङ्कुमोद्यत्प्रततः प्रमोदः ।
सदाङ्गरागं प्रतिभाति यस्यास्तां नौमि देवीं रमणीयवृत्तिम् ॥८६ ॥

अक्षवर्गमनुनिष्ठितं परं चित्तवर्गभववपुर्निवेदनम् ।
यं श्रियं निरवधिं नमामि तां सुन्दरीं परमबोधबृंहिताम् ॥८७ ॥

चिन्मृगाङ्कसकलच्युतामृतश्रीवसं हृदि महार्घपात्रताम् ।
तर्पणं विततसंस्थितः सदा यत्तमः परममस्ति तां नुमः ॥८८ ॥

जन्मकुण्डगगणोद्गतश्चित्कृशानुरिह नाभिरुत्कटः ।
अक्षयाक्षविषयाहुतीः सदा भक्षयन्निरवधिः क्रमोत्क्रमैः ॥८९ ॥

जाज्वलीति करणेऽपि सप्तगः प्राज्यघस्मरशिखाविराजितः ।
चित्तविभ्रममयेन्धने सदा वह्निकर्म तव देव्यवस्थितम् ॥९० ॥

इयं परंमा(रस्मा)दविभिन्नरूपा शिवा स्वतन्त्रा क्रमतोऽक्रमेण ।
आदौ परेणाऽथ परापराख्यभेदेन पश्चादपरेण देवि ॥९१ ॥

निजस्वरूपं तु विभज्य नित्यं जहाति नैवाप्रतिमप्रभावम् ।
शैवं महः सर्वविभेदमुक्तं निरन्तरं च प्रणमाम्यहं ताम् ॥९२ ॥

चिदङ्कुरं कामकलास्वरूपं बिन्दुं विचिन्त्यामिततेजसेद्धम् ।
अनाहतोन्मेषनिनादवृत्तिं चक्रस्थिते जन्मबिलान्तराले ॥९३ ॥

तस्याधरस्थं शशिसूर्यरूपं बिन्दुद्वयं पार्श्वयुगप्रवाहम् ।
तस्याऽप्यधो वह्निशिखाग्रभागं रेखाकृती द्वे प्रविलाप्य सम्यक् ॥९४ ॥

एतत्परं ध्यानवरं सदैव त्यक्त्या क्रमं सर्वविकल्पमुक्तम् ।
ध्याये महासाधकपुङ्गवोऽहं योऽनन्तसिद्धिं परमां शिवोक्ताम् ॥९५ ॥

मायाचक्रासनस्था हृदयपदगता कामराजस्य साध्यं
ध्यात्वा तद्वाह्यनिष्ठं पुटितमनुपमं वाग्भवं तद्बहिश्च ।
ब्लूंकारं कोणषट्के बहिरपि च ततः स्त्रीस्थितं तुम्बुरुद्धं
कृत्वा क्लींबीजकं यः स्मरति च भुवनं क्षोभयेद्देवि सम्यक् ॥९६ ॥

इदं यन्त्रं समालिख्य हृदि लोके नियोगतः ।
महाकामकलां ध्यात्वा पूजयेद्यः समाहितः ॥९७ ॥

विद्याधरी सुरवरसिद्धपत्नी गन्धर्वदिव्यललनोरगनायिकापि ।
यक्षेश्वरप्रियतमा नरवर्यरामा साधकस्य वशगाः सहसा भवन्ति ॥९८ ॥

ये त्वेकाक्षरसाधनं नरवरास्त्वन्मुक्तिमाद्यां परां
ध्यात्वा ये स्पृहयन्ति साधकवराः कुर्वन्ति तेषां सदा ।
त्वद्ध्यानैकपवित्रितैकमनसां चाद्य स्तुता जायते
सिद्धिः साधकपुङ्गवस्य सततं देवीं नुमस्तां पराम् ॥९९ ॥

विद्युत्पुञ्जनिभां नमामि शिरसा प्राग्भारसूक्ष्मां गिरा-
मुत्थां भग्नमृणालतन्तुनिभया निर्भिद्य लिङ्गत्रयम् ।
प्राप्योर्ध्वं च विसर्गभागमकुलं पीयूष[धा]रारसं
पीत्वा विद्रुतवि[द्रुम]भ्रममयीं शक्तिं परां कौलिकीम् ॥१०० ॥

**॥ इति श्रीविद्यानन्दनाथविरचितायां ज्ञानदीपप्रद(विम)र्शिन्यां श्रीत्रिपुरसुन्दरीपद्धत्यां स्तोत्रपद्धतिरष्टादशी ॥**

# सप्तमं परिशिष्टम्

## द्वीपाम्नायपद्धतिः[1]

अथातः संप्रवक्ष्यामि द्वीपाम्नायं क्रमागतम् ।

सुसमे भूप्रदेशे तु निम्नोन्नतविवर्जिते ॥

पूर्वपाश्चात्यकं सूत्रचतुष्कं विनिवेशयेत् ।

दक्षसौम्यायतामे(ने)व पुनश्च चतुरो न्यसेत् ॥

कोष्ठका नव सिद्ध्यन्ति विन्यसेत् तेषु मातृकाम् ।

मध्यकोष्ठे न्यसेद्युग्मान् स्वरान् पूर्वादितः क्रमात् ॥

कादिपञ्चकमत्रैन्द्र्यां दिक्षु मध्ये च विन्यसेत् ।

आग्नेय्यां चादिकान् पञ्च तद्वदेव प्रविन्यसेत् ॥

याम्ये यादिचतुष्कं च सोम्ये शादिचतुष्टयम् ।

नानयोर्वर्णविन्यासो मध्यवर्णास्यमीश्वरे ॥

एकमेवेति गदितं [त]दिदं श्रीमते यथा ।

पञ्च पञ्च तथा पञ्च पञ्चमान्तर्जलान्तिमम् ॥

चलसौम्ये चतुष्कं तु एकमीशानगोचरे ।
अकारादीन् विसर्गान्तान् दिशासु विदिशासु च ॥

एवं पीठाद्यविन्यासः स द्वीपोऽद्य प्रकीर्तितः ।
अन्योन्यद्वीपपीठानां वेधः सम्प्रति कथ्यते ॥

अकाराकारयुग्मं तु मकारेण विरुध्यते ।
ऊकारोकारेण लकारेण लृ लॄ तथा ॥

ओ औ चैव षकारेण मध्यवेधः प्रकीर्तितः ।
डकारश्च ऋकारश्च विरुध्येते परस्परम् ॥

---

*1. घ-ङ पुस्तकयोर्ग्रन्थान्ते पद्धतिरेषा दृश्यत इति परिशिष्टत्वेनात्र स्थापिता ।*

हकारवच्चटयोर्वेधस्तथा चण्डतयोः स्मृतः।
पधौ भरौ यशौ चापि विरुध्येते परस्परम्।
अरयस्तु समाख्यातास्तेषां योगं विवर्जयेत्।
यथा खण्डारकक्षेत्रे झण्टसिद्धिर्न विन्दति॥
यथा चाषोपक्षेत्रे आदित्याख्यो न सिद्ध्यति।
दीपेष्वेषु विभागोऽपि विज्ञेयः सिद्धिमिच्छता॥
क्षेत्रा ग्रामाः पुराः पीठा नगराश्चैव पञ्चधा।
कादिनान्तं भवेत् क्षेत्रं ग्रामाख्यं तादिनान्तगम्॥
यादिमान्तं पुरं प्रोक्तं पीठा वै यादिवान्तगाः।
शादिदान्तं च नगरा भेदोऽयं परिकीर्तितः॥
एषां नामाक्षरं यच्च आदिभूतं भवेदिह।
तेन तन्नाम जानीयात् क्षेत्रग्रामादिभेदतः॥
क्षेत्रग्रामपुरादीनां नाम्नि यच्छोधिताक्षरम्।
तद्यत्र निपतेत् कोष्ठे तस्यां दिशि मुखं भवेत्॥
करौ तत्पार्श्वगौ कोष्ठौ तदधः कोष्ठयुग्मकम्।
कुक्षाक्षमध्यगं पृष्ठं मध्याधः पुच्छमिष्यते॥
पुच्छपार्श्वद्वयं पादावित्येतत्कर्मसंस्थितिः।
मस्तकस्थानसंस्थायां साधकः सिद्धिमाप्नुयात्॥
स्नानपानं दक्षकरे वामे बन्धुविवर्धनम्।
उच्चाटो दक्षजङ्घायां वामे विद्वेषणं भवेत्॥
पृष्ठेष्वर्धा भवेत् सिद्धिः पुच्छे मृत्युर्न संशयः।
अथान्येन प्रकारेण द्वीपज्ञानं प्रकाश्यते॥

त्रिंशद्द्वीपाद्भवेच्चक्रं चतुर्द्वीपविवर्जितम् ।
पीठपञ्चकयोगेन प्रोद्धरेदुपदेशतः ॥
क्षकारं च णकारं च ङकारं च तृतीयकम् ।
एते वर्ज्याः प्रयत्नेन ञकारश्च चतुर्थकः ॥
एते एकादयो वर्णा हकारान्ता व्यवस्थिताः ।
न्यस्तव्यास्ते प्रयत्नेन तिथिनक्षत्रसंयुताः ॥
द्वीपाक्षरं तथा वारं तिथिनक्षत्रसंयुतम् ।
अस्मिन् चक्रे तु लभ्येत गुरुतो नान्यथा क्वचित् ॥
अस्य चक्रस्य चोद्धारप्रकारं संप्रकाश्यते ।
पुरतः पञ्चपीठानि पङ्क्तिभूतानि कल्पयेत् ॥
एषां यथाक्रमेणैव अ इ उ ए ओ च विन्यसेत् ।
ककारश्च ऋकारश्च उकारश्च तृतीयकः ॥
भवाश्च तिथयश्चात्र प्रतिपत् परिकीर्तिता ।
षष्ठी चैकादशी चैव वारो मङ्गल एव च ॥
नक्षत्रे हस्तमूले च प्रथमा पङ्क्तिरीरिता ।
वकारश्च जकारश्च ढकारो नमसा तथा ॥
तिथिश्चैव द्वितीया च सप्तमी द्वादशी तथा ।
बुधवारो भवेदत्र नक्षत्रं मृगउत्तरा ।
द्वितीया पङ्क्तिराख्याता तृतीया संप्रकाश्यते ॥
गकारश्च झकारश्च तपया वस्तथैव च ॥
तिथयश्च तृतीयाख्या चाष्टमी च त्रयोदशी ।
नक्षत्र उत्तरे चैव वारश्चात्र बृहस्पतेः ॥

तृतीया पङ्क्तिराख्याता चतुर्थी संप्रकाश्यते ।
घकारश्च चकारश्च वकारश्च तथा पुनः ॥
तिथिश्चात्र चतुर्थी च नवमी च चतुर्दशी ।
मघाकृत्तिकनक्षत्रे वारः शुक्रः प्रकीर्तितः ॥
चतुर्थी पङ्क्तिराख्याता पञ्चमी प्रविचक्षते ।
खकारश्च चकारश्च तकारदलभास्तथा ॥
तिथयः पञ्चमी चापि दशी पञ्चदशी तथा ।
तथा शनैश्चरो वारो रोहिणी रेवती तथा ॥
नक्षत्रे पञ्चमी पङ्क्तिरेवमेषा प्रकीर्तिता ।
उदितं प्रथितं चैव भ्रमितं च ततः परम् ॥
साध्यमस्तमितं चैव क्षेत्रनामादिकं [परम्] ।
उदितं बालमाख्यातं प्रथितं वश्यकर्मणि ॥
कुमारं भ्रमितं प्राहुराकर्षणकरं परम् ।
भ्रमितं पौष्टिकं ज्ञेयं कर्मण्यारूढयौवनम् ॥
साध्यं वृद्धमिति प्राहुर्विद्वेषणकरं परम् ।
मारणेऽस्तङ्गतं विद्यादिति शास्त्रे विनिश्चयः ॥
एतल्लपटके चक्रं **कुमारीविजये** तथा ।
**उड्डामरे शाम**(ब)रे च विज्ञीतं **स्वरभैरवे** ॥
संक्षिप्य दर्शितं सर्वं साधकानां हितावहम् ।
चतुस्त्रिंशच्च द्वीपानामुद्देशः क्रियतेऽधुना ॥
ऋण्याद्वीपं सिंहलं च सुवर्णं च तृतीयकम् ।
कर्णप्रवालकं चान्यस्तथा श्वानमुखः स्मृतः ॥

क्रौञ्चमुद्यानकं चैव जलन्धं चैव पादुकम् ।
पार्श्वोलं कुशद्वीपं च शाल्मद्वीपं हलं तथा ॥
कुर्मार्याख्यं यवद्वीपं कामरूपं च पुष्करम् ।
करहाटं चानकं चन्द्रं रत्नद्वीपं त्रिरत्नकम् ॥
गोमेदशैवगर्भोदं सूर्यद्वीपं तथा नवम् ।
मरुद्वीपं वसन्तं च अमृतानन्दकस्तथा ॥
गन्धर्वाग्निस्तथा द्वीपा वङ्गालो नग्न एव च ।
इति द्वीपाश्चतुस्त्रिंशत् क्रमेण परिकीर्तिताः ॥
पालकानामथोद्देशः क्रियते **श्रीमतो**दितः ।
विक्रमश्चाप्यगस्त्यश्च चण्डो यक्षो गणाधिपः ॥
महाबलो जयो नाम महाजिह्वस्त्रिविक्रमः ।
ध्वाङ्क्षश्च जयभद्रश्च दधीचिश्च ततः परम् ॥
कुमारीशो महादंष्ट्रः करालासिधरस्तथा ।
महाध्यक्षो महानन्दी सुगन्धी गोपालकस्तथा ॥
पुष्पदन्तो धनाध्यक्षो विपुलानन्दकारकः ।
शुक्रो विडालवदनो ह्यकारणशुभाननः ॥
रतिप्रियः स्वरप्रियश्चित्राङ्गश्च ततः परम् ।
रसानन्दः समाख्यातस्तथान्यश्च सुदुर्जयः ॥
प्रद्युम्नश्च चतुस्त्रिंशत् कथिताः क्षेत्रपालकाः ।
अथ पूजाप्रकारश्च पालानां संप्रदर्श्यते ॥
आदावष्टदलं पद्मं तद्बाह्ये द्वादशच्छदम् ।
सिन्दूरादिभिरालिख्य तत्र पूजां समारभेत् ॥

द्वादशारे यजेच्छक्तीः स्वैः स्वैर्बीजैः सनामकैः ।
षण्डवर्जस्वरैर्युक्ता द्वीपवर्णाः प्रकीर्तिताः ॥
शक्तीनां मन्त्रकाः प्रोक्ता यथावद्देशिकोत्तमैः ।
अष्टारदण्डधारादीन् पूजयेन्मातृभिः सह ॥
पालकान् कर्णिकामध्ये पूजयेदुपचारतः ।
दण्डधरः प्रचण्डश्च त्रिजटः शङ्खतुण्डकः ॥
कराली त्रिशिराश्चैव दंष्ट्राली वज्रतुण्डकः ।
दण्डधरादयस्त्वेते ब्राह्म्याद्याश्चात्र मातरः ॥
आदौ बीजं समुच्चार्य पुनर्द्वीपस्य नाम च ।
सप्तम्यन्तं प्रयोज्याथ षष्ठ्यन्तं क्षत्रपाह्वयम् ॥
पादुकां पुनरुच्चार्य पूजयेत् सर्वपालकान् ।
बीजोद्धारं प्रवक्ष्यामि यथोक्तं **श्रीमतागमे** ॥
द्वीपाक्षरं तथा वारं तिथिनक्षत्रसंयुतम् ।
साधकाद्यक्षरोपेतं कूटमेतत् समुद्धरेत् ॥
द्वीपाक्षरस्य ग्रहणप्रकारः संप्रकाश्यते ।
न गुरुर्नादिमं नान्तं न मध्यं पीठसंयुतम् ॥
न ग्राह्यं केवलं ग्राह्यं द्वीपाण्डं सर्वसिद्धिदम् ।
केवलं तु पदा नैव सविते वा तदागमम् ॥
मध्ये वा पीठसंयुक्तमन्त्यं वा तद्युतं भवेत् ।
द्विगुणार्णं गुरुः प्रोक्तमभिधानादिमं तथा ॥
अभिधानादिमन्त्यं स्यात्तन्मध्यं मध्यमं भवेत् ॥
द्वीपाक्षरमिदं शुद्धं वारं प्राणं प्रकीर्तितम् ।
तिथिर्जीवः समाख्यातो नक्षत्रं रेत उच्यते ॥

साधकस्यादिमोपेतं बीजमेतदुदाहृतम् ।
वारेणोकारमपि च बिन्दुस्तिथ्या च कथ्यते ॥
दीपाक्षरं भवेच्छुद्धं वारः प्राणः प्रकीर्तितः ।
तिथिसंज्ञा सकारस्य नक्षत्रं रेफ उच्यते ॥
साधकाद्यक्षरोपेतमेकीकृत्य वरानने ।
दशमेकादशेनैव संयुक्तं कूटमुच्यते ॥
तस्मिन्नेव भवेन्मन्त्रं पालकानां समर्चने ।
एवं यो वेत्ति मन्त्राणां द्वीपानां पालकस्य तु ॥
याथातथ्यं वरारोहे स भवेत् कूटनन्दकः ।
कूटसाधकनामाद्यवर्णयोगः प्रकाश्यते ॥
तत्पीठं पीठयुक्तं वा कूटेनैव सहोच्चरेत् ।
केवलं यदि लब्धं स्यात्तदा कूटेन योजयेत् ॥
इति कूटस्य स्वच्छस्य समुद्धारः प्रदर्शितः ।
दूतीनां नाममालाऽथ पालकानां च वर्णशः ॥
ध्यानयुक्ता यथोद्देशं विस्तरेणाभिधीयते ।
मनोहरा च कारुण्या वित्रीपी च तथा तथा ॥
चित्राङ्गा चित्ररेखा च विचित्रा चित्रिणी शुभा ।
चित्राक्षी चित्ररूपा च सुताद्रा कामदा तथा ॥
ककारस्य इमा देव्यः कन्याद्वीपं समाश्रिताः ।
क्षेत्रपालो महारौद्रो विक्रमो नाम नामतः ॥
चतुर्भुजो महातेजा नीलजीमूतसंनिभः ।
त्र्यक्षः किरीटी भीमश्च वनमालाविभूषितः ॥

गदाकाद्यधरो वामे शूलं चक्रं च दक्षिणे ।
शक्तयस्तादृशाः सर्वा द्वादशारेऽधिदेवताः ॥
क्रूरा च पिङ्गला चैव खड्गीका लम्पटा तथा ।
दंष्ट्राली राक्षसी ध्वाङ्क्षी लोलुपा लोहितामुखी ॥
बह्वाशी च विरूपाक्षी तथा चैवामिषप्रिया ।
खकारस्य इमा देव्यः सिंहलद्वीपसंस्थिताः ॥
क्षेत्रपालो महायोगी अगस्त्यश्च महाबलः ।
चतुर्भुजो महारौद्रस्त्रिनेत्रो भैरवाननः ॥
कपालमालाभरणो भस्मोद्धूलि[त]विग्रहः ।
काद्यकण्ठधरो वामे मीनं खड्गं च दक्षिणे ॥
शक्तयस्तादृशास्तस्य द्वादशारे प्रपूजयेत् ।
पालकं कर्णिकामध्ये पूजयेत् पिशितासवैः ।
रक्ता रक्ताम्बरधरा रक्तमाल्यानुलेपनाः ॥
पाशाङ्कुशौ बीजपूरकपालौ दधतं करैः ।
एवं च पालकाः सर्वे ध्येयास्तेषां च शक्तयः ॥
सुप्रकीर्णा प्रकीर्णा च लम्बा लम्बमुखी शुभा ।
लम्बोष्ठी दीर्घदंष्ट्रा च लज्जा च प्राणहोन्मुखी ॥
धृतकर्णी सुकर्णी च महाकाली सुभीषणा ।
वातवेगरता घोरा गकारे देवता इमाः ॥
स्वर्णद्वीपाधिकारिण्यश्चण्डनाथो महाबलः ।
घनदावा घोरघोषा महाघोषातिघोषिकाः ॥
घण्टा घण्टेश्वरी घोरा महाघण्टा सुघण्टिका ।
अतिघण्टातिघोरा च कराला रावराविणी ॥

घकारे देवता एता कर्णप्रावृतमण्डले ।
यक्षराजो महादेवः क्षेत्रपालो महाबलः ॥
विभूतिर्भोगदा कान्तिः स्रग्विणी पद्मिनी तथा ।
गन्धारी योगमाता च स्वधारूपा समुज्ज्वला ॥
संहारी मांसहारी च प्राणहारी बलापहा ।
ऋच्छिका गृद्धकण्ठी च रेवती चाङ्गसङ्गिका ॥
ङकारे संस्थिता देव्यश्चामुखे मण्डले स्थिताः ।
राज्यं पालयते देशे कवर्गे उत्तरापथे ॥
क्षेत्रपालो गणपती रक्षां कुर्वन्तु साधके ।
चण्डा चण्डमुखी चैव चण्डवेगा महारवा ॥
भृकुटी चण्डवीर्या च चण्डभ्रूश्चण्डनायिका ।
चञ्चला चलवेगा च चलज्जिह्वा चलेश्वरी ॥
चकारदेवता ह्येताः कुलूतद्वीपमाश्रिताः ।
राज्याधिकारी देवेशि क्षेत्रपालो महाजयः ॥
कालरात्री च वेताली कङ्काली च कलङ्किनी ।
किङ्किणी चण्डघोषा च अट्टहासा महारवा ॥
चण्डा मातङ्गी चण्डाली सूकरी कुर्क्षुटी तथा ।
गन्धारी डोम्बी चाण्डाली छकारे देवताः स्मृताः ॥
नायिका ओडियाणे तु क्षेत्रपालो महाभृगुः ।
ज्वालिनी ज्वलिनी चैव महाज्वालावली प्रभा ॥
तेजा तेजोवती वह्निः सुतेजा निर्मलोज्ज्वला ।
ज्वालावली कराली च विस्फुलिङ्गी शिखी शिखी ॥

जकारे देवता एताः सर्वसत्त्ववशंकराः ।
[१]जालन्धरे तु देवेशि महाजित् क्षेत्रपालकः ॥
सुभद्रा भीमभद्रा च भद्रा चैव सुभाषना(णा) ।
भीमा भीमावती कान्तिः कङ्काली च कपालिनी ॥
भद्रकाली सुकाली च विकटा कङ्कटेति च ।
चर्वाकी लम्पटा चेति झकारे देवताः स्मृताः ॥
मण्डले एकपादे तु महामाया बलोत्कटा ।
चित्रसेनो महावीरः क्षेत्रपालो भयानकः ॥
सुभटोद्भटा च विकटा कुटिला चैव कर्कटा ।
वीरमाता सुवीरा च शङ्खिनी शूलिनी खगी ॥
छुछुन्दरी विला चैव ञकारे देवतागणाः ।
पारसे तु महादेवी अधिकारं प्रकुर्वते ॥
ध्वाङ्क्षनामेति विज्ञातः क्षेत्रपालो भयानकः ।
राजा दक्षिणदेशे तु चवर्गे परमेश्वरी ॥
मृगा च शशिरेखा च हरिणी रोहिणी तथा ।
अमृतोत्तरा च पूर्णाङ्गी जीवरक्षा सुजीविका ॥
हरिणाक्षी सुजीवा च चन्द्रोदयाऽमृतोद्भवा ।
टकारे देवता ह्येताः कुशद्वीपे व्यवस्थिताः ॥
जयभद्रः क्षेत्रपालः कुशद्वीपप्रपालकः ।
व्योमनी व्योमरूपा च व्योमव्यापी शुभोदया ॥
ग्रहाचारी सुचारी च विषहारी विषात्मिका ।
जृम्भोपमा च फेत्कारी दुर्जया कालदुर्जया ॥

---

१. 'जालन्धरे महाजिह्वः क्षेत्रपालो महाबलः' इति पाठातरम्– ङ. ।

ठकारे देवताः पूज्याः शाल्मलीद्वीपमाश्रिताः ।
क्षेत्रपालो महादिव्यः कपाली च महाबलः ॥
चञ्चला चपला चण्डो डमरी डामरी शुभा ।
दण्डिनी मुण्डिनी मुण्डा साकिनी डाकिनीति च ॥
राकिनी काकिनी देवी भञ्जनी साकि[नी] तथा ।
डकारे देवता ह्येताश्चीनद्वीपे व्यवस्थिताः ॥
दधीचिः क्षेत्रपालस्तु तत्र देशे प्रपूजयेत् ।
भीमदंष्ट्रा महादंष्ट्रा अस्त्रमाला करालिका ॥
विकराली करालास्या तालजङ्घातिजङ्घिका ।
लोहजङ्घातिजङ्घा च महावेगातिवेगिनी ॥
वज्रसखी नटी चैव बला चैव तथापरा ।
ढकारे देवता नाम कुमारीद्वीपमाश्रिताः ॥
क्षेत्रपालः कुमारीशो रक्षपालस्तथैव च ।
बला चातिबला चैव अजिता चापराजिता ॥
जया च विजया चैव जम्भनी स्तम्भनी तथा ।
अन्वनी मोहनी माया निगला नीलिनी तथा ।
णकारे देवता ह्येताः कामरूपनिवासिनः ।
यवद्वीपे स्थिता देव्यो ह्यधिकारं प्रकुर्वते ॥
महादंष्ट्रस्तु विख्यातः क्षेत्रपालो महाबलः ।
चलजिह्वोग्रनेत्रा च रुद्राहङ्कारिका तथा ॥
खादिनी रूपनामा च हाकारी च क्षयान्तिका ।
दन्तुरा रौद्रमाला च शुभ्रमाला कुला शुभा ॥

जिह्वोग्रनेत्रा हुङ्कारी दक्षरूपा सनातना ।

रन्विना पसिना चैव महाग्रासी नृत्तान्तिका ॥

तकारदेवता ह्येताः पुष्करद्वीपमाश्रिताः ॥

नायिका देवता नाम क्षेत्रपालः श्रुतिधरः ।

डम्भारी डिम्भडिम्भा च कैवर्ती च जलेलिका ॥

द्रवणी द्रावणी क्षोभा प्लवनी प्लावनीति च ।

मदोत्कटा मदक्षोभा मदोन्मत्ता मदावहा ॥

कामसन्दीपिनी देवी अतिरूपा मनोहरा ।

थकारे देवता नाम संस्थिताः पत्युरन्तिके ॥

क्षेत्रपालो महाध्वाङ्क्षः खड्गहस्तो महाबलः ।।

अरुणा घोषरूपा च रेवती भोगदायिका ॥

घोरा घोरतराऽघोराऽतिघोरा विकटानना ।

वानरी कोष्टकी चैव सुरासवमधुप्रिया ॥

दकारे देवता ह्येतास्त्रिणदेशनिवासिनः ।

क्षेत्रपालो महानन्दी शूलहस्तो महाबलः ॥

भीमरावा सुरावा च शान्तारी समरार्तिहा ।

स्तम्भिनी रोहनी रौद्री रुद्रवत्या छलापहा ॥

महाशक्तिः सुशीला च कहुण्डी च वृकोदरी ।

धकारे देवता ह्येताः पूजनीयाः प्रयत्नतः ॥

क्षेत्रपालः सगन्धी च गन्धर्वो वीणहस्तकः ।

चन्द्रद्वीपाधिकारिण्य आर्तानामार्तिहारिकाः ॥

क्रन्दवी रञ्जकाली च कालसर्वान्तिकी तथा ।

अनुष्कीला प्रतिष्ठा च शान्तिपुष्टिकरी तथा ॥

जया धृतिकरी सौम्या कामदा शुभा तथा ।
सुतेजा कामशीला च नकारे देवताः शुभाः ॥
यवद्वीपरता नित्यं साधकानां तु सर्वदा ।
क्षेत्रपालस्तु गोपालो धर्मज्ञोऽसत्यबाधकः ॥
धर्मा धर्मवती शीला पापहा धर्मबर्न्धनी ।
धर्मरक्षा च माता च धर्मा धर्मवतीति च ॥
धर्मशीला च धर्मज्ञा धर्मदेहा धनङ्करी ।
पकारे देवता ह्येता रत्नद्वीपार्णवे स्थिताः ॥
क्षेत्रपालो महाकालस्तस्मिन् द्वीपाधिपो महान् ।
सुमतिर्दुमतिर्मेधा शुद्धबुद्धिर्मनोजवा ॥
बला चातिबला भीमा प्राणवृद्धिकरी तथा ।
निर्लेपा निर्घृणा माया सर्वपापक्षयङ्करी ॥
फकारे देवता एताः शरद्वीपनिवासिनः ।
पुष्पदन्त इति ख्यातः क्षेत्रपालो महाबलः ॥
रक्ता चैवातिरक्ता [च] उद्वेगा शोकवर्धनी ।
कामतृष्णा क्षुधा मोहा निद्रालस्यभयाजरा ॥
सुतृष्णा रोहिणी कुम्भा मलाद्युच्छिष्टनाशिनी ।
बकारे देवता ह्येताः स्थिता गोमेधमण्डले ॥
धनदो नाम विख्यातः क्षेत्रपालो महायशाः ।
तृष्णा च कामभोगा च दुःखदा सुखदा तथा ॥
आनन्दा च सुनन्दा च महानन्दा शुभङ्करी ।
वीतरागा मनोत्साहा जितरागा मनोरमा ॥

भकारे देवता ह्येताः स्थिता गर्भोदमण्डले ।
विपुलो नाम विख्यातः क्षेत्रपालो भयानकः ॥
मनोन्मनी मनःक्षोभा मदोन्मत्ता महाकुला ।
मदोद्गता मदोन्मादा कामदा मदविह्वला ॥
महावेगा सुवेगा च महावेगक्षणापहा ।
क्रमणी वामनामा च क्रामणी च तथा परा ॥
मकारे देवता ह्येताः सूर्यद्वीपे व्यवस्थिताः ।
महानन्देति विख्यातः क्षेत्रपालो महोत्कटः ॥
भयवेगा सुवेगा च अतिवेगावती तथा ।
चक्रवेगा विरुद्धा च चलचित्तवती स्मृताः ॥
रोदक्षोणी क्षोदनी बलाऽतिरोषा कलिप्रिया ।
विद्युद्रुता त्रासणी देवी मनोवेगी च चञ्चला ॥
यकारे देवता एता आसवद्वीपमाश्रिताः ।
शुक्रो नाम्ना च विख्यातः क्षेत्रपालो महाबलः ॥
विद्युज्जिह्वा महाजिह्वा शृङ्गाटकुटिला स्थिता ।
ज्वाला चैव तु सुज्वाला महाज्वाला तथैव च ॥
ज्वालावती विस्फुलिङ्गा ज्वालाभिः सक्षयन्तका ।
रेफमध्यगता देव्यो मरुदेशाधिपो महान् ॥
विलालः क्षेत्रपालश्च महाबलपराक्रमः ।
हल्लेखा च पताका च भोगा भोगवती तथा ॥
महाभोगातिभोगा च भोगाढ्या भोगपारगा ।
ऋद्धिर्वृद्धिर्धृतिः कान्तिर्लकारे देवताः शुभाः ॥

वसन्तद्वीपवासिन्यो योगिन्यस्ता महाबलाः ।
क्षेत्रपालाधिकारी च सुपर्णश्च महाबलः ॥
अमृता च वरा दिव्या वरिष्ठा फलदायिनी ।
हरिणाक्षी सुपर्णा च कनका रेणुपिञ्जरा ॥
रत्ना च रत्नद्वीपा च रत्नमाला सुदीपिका ।
रत्नशोभा महाशोभा रामशोभा परद्युतिः ॥
वकारे देवता ह्येताः शरद्वीपनिवासिनः ।
क्षेत्रपालस्तु विख्यातः शुभाननो बलोत्कटः ॥
शबरी सर्वरी गृध्री वटकर्णी वरानना ।
हयग्रीवा सुजङ्घा च सर्वग्राही कृतान्तका ॥
सर्वाशी च महामत्ता महादंष्ट्राऽतिरौद्रिका ।
शकारदेवता ह्येताः कथितास्तु महायशाः ॥
अमृतद्वीपमध्ये तु क्षेत्रपालो रतिप्रियः ।
रागा रागवती क्रुद्धा महाभोगा च रौरवी ॥
क्रुन्दनी रोदिनी कलही कालकाली कलान्तिगा ।
दुर्भेद्या दुर्भिदा चैव दुर्निरीक्ष्या सुभीषणा ॥
यमान्तिका कलिर्माता षकारे देवताः शुभाः ।
आनन्दद्वीपवासिन्यो देव्यो ह्यक्षय्ययौवनाः ॥
देवश्च क्षेत्रपालोऽत्र सुराप्रियो वरप्रदः ।
नटी नाटी कुनाटी च नाटकी चिटी . . . ॥
कटङ्कटा च विकटा [१]चर्वटोद्भटनायिका ।
सकारे देवता ह्येता गान्धर्वद्वीपसंस्थिताः ॥

---

१. 'सुभटा' इति पाठान्तरम्—ङ. ।

वीणावंशरता देव्यः सह क्रीडन्ति किन्नरैः ।
चित्राङ्गः क्षेत्रपालश्च मेरूर्ध्वं चालये स्थितः ॥
नादाक्षी नादरूपा च सर्वाकारी गमागमा ।
अनुच्चारी सुचारी च ऊर्ध्वनादा सुनादिनी ॥
संयोगा च वियोगा च हंसाख्या च विलासिनी ।
अङ्गारद्वीपवासिन्यो हकाराक्षरसम्भवाः ॥
विपुलो नाम विख्यातः क्षेत्रपालो महाबलः ।
प्रलयाम्बुदवर्णाभः सर्पाभरणमण्डितः ॥
मुद्गरं पात्रहस्तं च तर्जनीबिन्दुमेव च ।
नानाविघ्नहरो देवो लोकपूज्यो महेश्वरः ॥
श्रीश्रीदेवतायुक्तः पद्मलः क्षेत्रपालकः ।
सर्वगाशक्तिसंयुक्तोऽनङ्गद्वीपे समास्थितः ॥
क्षकारे संस्थिता देव्यः सर्वगाद्या महाबलाः ।
इति कादिक्षान्तवर्णानां क्षेत्रोपक्षेत्रपालकाः ॥

अथाऽऽदिषोडशार्णसंख्यक्षेत्रपालका उच्यन्ते । यथा—

अजर आपकुम्भश्च इडा चान्यस्तथैव च ।
ईन्द्रमूर्तिश्च उल्हा च ऊन्माद ऋपुसूदनः ॥
ॠमुक्तो लृप्तकायश्च लॄलापो एकदंष्ट्रकः ।
ऐरावतश्च ओद्यावोयुरौषधी घनदस्तथा ॥
अङ्कं बाहुरनन्तश्च चिन्त्यतां तत्समासतः ।
नामभ्रष्टास्तु क्षेत्रेशास्तेषां नाम ततः शृणु ॥
एकलिङ्गे च हूङ्कारः श्मशाने च महावहः ।
महालक्ष्मीवने घोरे ज्वालामुख इति श्रुतः ॥

एकवृक्षवटे वापि विडालवदनोज्ज्वलः ॥
घण्टारावो गुहावासे पद्मषण्डे जलाम्बरः ।
सङ्गमे भूरिभावोद्यः पर्वते संभृतश्च सः ॥
निर्झरश्रवणे विन्ध्यान्निधाने मणिभद्रकः ।
शरक्षेत्रे धनाध्यक्षो यज्ञवाटे तु कोष्ठकः ॥
अरण्ये शबरो ज्ञेय उद्याने मधुसूदनः ।
चतुष्षष्टिः स्थिता वीर्यैर्व्यापयित्वाखिलं जगत् ॥

**॥ इति श्रीविद्यानन्दनाथदेवविरचितायां श्रीज्ञानदीपविमर्शिन्यां श्रीत्रिपुरसुन्दरीपद्धत्यां द्वीपाम्नायपद्धतिः पञ्चविंशतिः ॥**

षडाम्नायमहापद्मवनषण्डविहारिणा ।
श्रीविद्यानन्दनाथेन परमहंसेन धीमता ॥

■

# अष्टमं परिशिष्टम्

ॐ नमस्त्रिपुरायै

कल्याणवृष्टिभिरिवामृतपूरिताभि-
लक्ष्मीस्वयंवरणमङ्गलदीपिकाभिः ।
सेवाभिरम्ब तव पादसरोजमूले
नाकारि किं मनसि भक्तिमतां जनानाम् ॥१ ॥

एतावदेव जननि स्पृहणीयमास्ते
त्वद्वन्दनेषु[1] सलिलस्थसरोजनेत्रे ।
सान्निध्यमुद्यदरुणाम्बुजसोदरस्य
त्वद्विग्रहस्य सुधया परयाप्लुतस्य ॥२ ॥

ईषत्प्रभावकलुषाः कति नाम सन्ति
ब्रह्मादयः [2]प्रतिदिनं प्रलयाभिभूताः ।
एकः स एव जननि स्थिरसिद्धिरास्ते
यः पादयोस्तव सकृत्प्रणतिं करोति ॥३ ॥

लब्ध्वा सकृत्त्रिपुरसुन्दरि तावकीनं
कारुण्यकन्दलितकान्तिभरं कटाक्षम् ।
कन्दर्पभावसुभगास्त्वयि भक्तिभाजः
सम्मोहयन्ति तरुणीं भुवनत्रयेऽपि ॥४ ॥

ह्रींकारमेव तव नाम गृणन्ति [3]वेदा
मातस्त्रिकोणनिलये त्रिपुरे त्रिनेत्रे ।
त्वत्संस्मृतौ यमभटाभिभवं विहाय
दीव्यन्ति नन्दनवने सह लोकपालैः ॥५ ॥

---

१. नेन–ङ. । २. तिभुवं–ङ. । ३. 'वेदा' इत्यस्य स्थाने 'ये वा'–म.पू. ।

हन्तुः पुरामधिगलत्परि[१]घूर्णमानः
क्रूरः कथं न भविता गरलस्य वेगः ।
नाश्वासनाय यदि मातरिदं तवार्ध-
देहस्य शश्वदमृताप्लुतशीतलस्य ॥६ ॥

सर्वज्ञतां सदसि वाक्पटुतां प्रसूते
देवि त्वदङ्घ्रिसरसीरुहयोः प्रणामः ।
किञ्च स्फुरन्मुकुटमुज्ज्वलमातपत्रं
द्वे चामरे च महतीं वसुधां [२]ददाति ॥७ ॥

कल्पद्रुमैरभिमतप्रतिपादनेषु
कारुण्यवारिधिभिरम्ब भवत्कटाक्षैः ।
आलोकय त्रिपुरसुन्दरि मामनाथं
त्वय्येव भक्तिभरितं त्वयि [३]दत्तदृष्टिम् ॥८ ॥

हन्तेतरेष्वपि निधाय मनांसि चान्ये
भक्तिं वहन्ति [४]कलया परदैवतेषु ।
त्वामेव देवि मनसाहमनुस्मरामि
त्वामेव नौमि शरणं जननि त्वमेव ॥९ ॥

लक्षेषु सत्स्वपि तवाक्षिविलोकनाना-
मालोकय त्रिपुरसुन्दरि मां कथञ्चित् ।
नूनं मया च सदृशं करुणैकपात्रं
जातो जनिष्यति जनो न च जायते वा ॥१० ॥

ह्रीं ह्रीं[४] हृदि प्रतिदिनं जपतां तवाख्यां
किं नाम दुर्लभमिह त्रिपुवारा[५]धिवासे ।

---

१.रिपूर्ण–म.पू.। २.दधाति–म.पू.। ३.'दत्त' इत्यस्य स्थाने 'बद्ध'–म.पू.। ४.'कलया' इत्यस्य स्थाने 'किल सा'–म.पू.। ५.राभिधाने–म.पू.।

मालाकिरीटमदवारणमाननीयां-
स्तान् सेवते मधुमती स्वयमेव लक्ष्मीः ॥११ ॥

सम्पत्कराणि सकलेन्द्रियनन्दनानि
साम्राज्यदानकुशलानि सरोरुहाक्षि ।
त्वद्वन्दनानि दुरितोद्धरणोद्यतानि
मामेव मातरनिशं कलयन्तु नान्यम् ॥१२ ॥

कल्पोपसंहरणकल्पितताण्डवस्य
देवस्य खण्डपरशोः परभैरवस्य ।
पाशाङ्कुशैक्षवशरासनपुष्पबाणाः
सा [1]साक्षिणी विजयते तव मूर्तिरेका[2] ॥१३ ॥

लग्नं सदा भवतु मातरिदं त्वदीयं
तेजः परं बहुलकुङ्कुमपङ्कशोणम् ।
भास्वत्किरीटममृतांशुकलावतंसं
रूपं त्रिकोणमुदितं परमामृताक्तम् ॥१४ ॥

ह्रींकारत्रय[3]सम्पुटेन महता मन्त्रेण [4]सन्दीपितं
स्तोत्रं यः प्रतिवासरं तव पुरो मातर्जपे[5]न्मन्त्रवित् ।
तस्य क्षोणिभुजो [6]भवन्ति वशगा लक्ष्मीश्चिरं स्थायिनी
वाणी निर्मलसूक्तिभावभरिता जागर्ति दीर्घं यशः ॥१५ ॥

[इति] मन्त्रोद्धारः ।

**इति श्रीत्रिपुरसुन्दरीदेव्याः शङ्कराचा[र्य] विरचिताक्षरमालास्तोत्रं समाप्तम् ॥**

---

१. साकिनी–ङ. । २. रेषा–ङ. । ३. यसंयुतेन–ङ. । ४. संजीवितं–ङ. । ५. न्यन्त्र–ङ. । ६. भजन्ति–म. पू. ।

मादनं तदधः शक्तिस्तदन्तर्बिन्दुमालिनी ।
ऐन्द्रमाकाशबीजस्थमधस्ताज्ज्वलनाक्षरम् ॥
मायाबिन्द्वीश्वरयुक्तं सर्वोपरि नियोजितम् ।
अयं स [वाग्]भवो देवि वागीशत्वप्रवर्तकः ॥
शिवबीजं त्रिधा युक्त्वा सृष्टिस्थितिलयक्रमैः ।
आदिमध्यावसानेष्टद्वयमाद्येन संयुतम् ॥
आद्येन आदिवर्णेन आद्याधो मदनाक्षरम् ।
मध्यस्थितिशिवाद्धस्तमिन्द्रबीजं नियोजयेत् ॥
तथा लयशिवाधोऽपि ज्वलनेन महेश्वरि ।
मायाबीजस्वरयुक्तमर्धचन्द्रेण भूषितम् ॥
एवमेतन्महाबीजं कामराजं महोदयम् ।
मायाबीजं महेशानि मादनं शक्रसंयुतम् ॥
चन्द्रबीजं केवलं तु शक्तिबीजं समुद्धरेत् ।
त्यक्त्वा सृष्टिक्रमं देवि प्रागुच्चारक्रमेण तु ।
एवमेषा महादेवी महात्रिपुरसुन्दरी ॥

ॐ नमस्त्रिपुरायै ।

पुस्तकाभिकरां वामे दक्षेऽक्षवरधारिणीम् ।
शुक्लां त्रिनयनामाद्यां बालां श्रीत्रिपुरां श्रये ॥

त्रैलोक्यमोहनचक्रस्य ध्यानम् ॥१ ॥

पाशाङ्कुवराभीति भान्वत्यनि(धारयन्ती) चतुष्टयम् ।
शुक्लां वर[धरां] द्यक्षा(त्र्यक्षां) नमामि त्रिपुरेश्वरीम् ॥

सर्वासा(शा)प्रतिपूरकचक्रस्य [ध्यानम्] ॥२ ॥

पाशाभयप्रदां वामे दक्षे सृणिवरप्रदाम् ।
रक्तवर्णां भजे नित्यां त्र्यक्षां त्रिपुरसुन्दरीम् ॥

सर्वसंक्षोभकचक्रस्य [ध्यानम्] ॥३ ॥

इन्दीवरं दोर्द्वन्द्वाभ्यां तथा पाशाङ्कुशद्वयम् ।
दधानां हारतां भासा संश्रये त्रिपुरवासिनीम् ॥

सर्वसौभाग्यचक्रस्य [ध्यानम्] ॥४ ॥

पद्मद्वयवराभीति सेभमाना भुजा स्वजा ।
शुक्लपद्मासनां त्र्यक्षां श्रये श्रीत्रिपुरां श्रियम् ॥

सर्वार्थसाधकचक्रस्य [ध्यानम्] ॥५ ॥

सृणिं पाशं शिताम्भोजं मातुलुङ्गं च बिभ्रतीम् ।
नीलवर्णां त्रिनेत्रां च श्रये त्रिपुरमालिनीम् ॥

सर्वरक्षाकरचक्रस्य [ध्यानम्] ॥६ ॥

सुवर्णा वर्णपितस्था जटाजूटेन्दुमण्डिता ।
वन्देऽहं त्रिपुरासिद्धां पाशाङ्कुशवराभयाम् ॥

सर्वरोगहरचक्रस्य [ध्यानम्] ॥७ ॥

मुण्डमालागलां रक्तां पुस्तकाक्षवराभयाम् ।
शुकप्रेतासनां त्र्यक्षां वन्दे श्रीत्रिपुराम्बिकाम् ॥

सर्वाशाप्रतिपूरकचक्रस्य [ध्यानम्] ॥८ ॥

बर्वुकपुष्पसङ्काशां पञ्चवक्त्रां च प्रेतगाम् ।
पाशाङ्कुशवराभीतिमुण्डमालां गलस्रजम् ॥
विद्यामन्त्रपटा(प्रदां) देवीं महात्रिपुरभैरवीम् ।
नित्यां नवमचक्रस्थां नायिकां नवमीं श्रये ॥

सर्वसिद्धिमयचक्रस्य [ध्यानम्] ॥९ ॥

महाचक्रवरस्यान्तः पद्मरागसमप्रभाम् ।
पाशाङ्कुशौ शरांश्चापं धारयन्तीं भजाम्यहम् ॥

सर्वानन्दमयचक्रस्य [ध्यानम्] ॥१० ॥

वेदशास्त्रपुराणाद्याः सामान्यगणिका इव ।
या पुनः शाम्भवी विद्या गुप्ता कुलवधूरिव ॥
गुप्ते सिद्धिं समादत्ते हानिं मन्त्रप्रकाशने ।
तस्मात् सर्वप्रयत्नेन गोपयेन्मातृजारवत् ॥
प्रथमे त्रिपुरा देवी द्वितीये त्रिपुरेश्वरी ।
तृतीये सुन्दरी चैव चतुर्थे त्रिपुरवासिनी ॥
पञ्चमे [त्रिपु]राश्रीश्च षष्ठे त्रिपुरमालिनी ।
सप्तमे त्रिपुरासिद्धा अष्टमे त्रिपुराम्बिका ॥
नवमे तु महेशानि महात्रिपुरसुन्दरी ।
प्रकटाथो ततो गुप्ता गुप्ता गुप्ततरा परा ॥
सम्प्रदायक्रमायाता तथान्याक्षरकौलिनी ।
महानिगर्भयोगेन रहस्यस्था परापरा ॥
परमापि रहस्यस्था पूर्वं त्रिभुवनेश्वरी ।
तत्र प्रकटयोगिन्यश्चक्रे त्रैलोक्यमोहने ॥

■

## ग्रन्था ग्रन्थकाराश्च

# सङ्केतसूची

| | |
|---|---|
| आ. | आगमः, आगमान्तरम् |
| आ. त्रिं. | आद्यवर्णत्रिंशिका |
| उ. प. | उद्दयाकरपद्धतिः |
| का. क. | कालिकाकल्पः |
| के. आ. | केशवाचार्यः |
| क्र. स्तो. | क्रमस्तोत्रम् |
| तन्त्रा. | तन्त्रालोकः |
| त्रि. अ. | त्रिपुरार्णवः |
| त्रि. क. | त्रिपुरसुन्दरीकल्पलता |
| त्रि. द. | त्रिपुरसुन्दरीदण्डकम् |
| दे. सं. | देवीसंस्थानागमः |
| नि. षो. | नित्याषोडशिकार्णवः |
| नि. षो. टि. | .नित्याषोडशिकार्णव-टिप्पणी |
| नित्या. अर्थ. | नित्याषोडशिकार्णव-अर्थरत्नावली |
| नित्या. ऋजु. | नित्याषोडशिकार्णव-ऋजुविमर्शिनी |
| प्र. सा. | प्रपञ्चसारः |
| भ. गी. | भगवद्गीता |
| म. पू. | महात्रिपुरसुन्दरीपूजापद्धतिः |
| या. सा. | यागसारः |
| यो. हृ. | योगिनीहृदयम् |
| यो. हृ. दी. | योगिनीहृदयदीपिका |
| र. सं. | रससारसंग्रहः |

| | |
|---|---|
| ल. कु. | लघुचर्चाकुलम् |
| ल. स्त. | लघुस्तवः |
| वि. ना. | विद्यानन्दनाथः |
| शा. ति. | शारदातिलकम् |
| शा. स्त. | शान्तिस्तवः |
| शि. शा. | शिवशासनम् |
| ष. भ. | षट्सहस्त्रभट्टारकः |
| स. प. | सङ्केतपद्धतिः |
| सि. पा. | सिद्धनाथपादः |
| सुभगो. | सुभगोदयः |
| सौ. स्तो. | सौभाग्यहृदयस्तोत्रम् |

# श्लोकार्धसूची

# न्यासविस्तरः (मूलग्रन्थे)

| क्र.सं. | 'ख' | पृ.सं. | 'ग' | पृ.सं. | 'घ-ङ' (अत्र क्रमभेदो दृश्यते) | पृ.सं. |
|---|---|---|---|---|---|---|
| १. | करशुद्धिन्यासः | ४३ | | | करशुद्धिन्यासः (प्राणायामश्च) | ५२ |
| २. | आसनषट्कन्यासः | ४३ | | | आसनषट्कन्यासः (भूतशुद्धिश्च) | ५२ |
| ३. | कामकलान्यासः | ४४ | कामकलान्यासः | ४४ | कामकलान्यासः | ५५ |
| ४. | नवनादन्यासः | ४६ | नवनादन्यासः | ४६ | | |
| ५. | आयुधन्यासः | ४७ | आयुधन्यासः | ४७ | आयुधन्यासः | ५६ |
| ६. | मातृकान्यासः | ४७ | मातृकान्यासः | ४७ | मातृकान्यासः | ५३ |
| ७. | अङ्गन्यासः (हृदयादिन्यासः) | ४८ | हृदयादिन्यासः | ४८ | कराङ्गन्यासः षडङ्गन्यासश्च | ५३ |
| ८. | पुर्यष्टकन्यासः | ४८ | पुर्यष्टकन्यासः | ४८ | | |
| ९. | वशिन्यादिन्यासः | ४९ | वशिन्यादिन्यासः | ४९ | वशिन्यादिन्यासः | ४९ |
| १०. | चतुष्पीठन्यासः | ५० | चतुष्पीठन्यासः | ५० | चतुष्पीठन्यासः | ५०,५४ |
| ११. | तत्त्वन्यासः | ५० | तत्त्वन्यासः | ५० | तत्त्वन्यासः | ५० |
| १२. | | | | | अक्षरन्यासः | ५४ |

# न्यासविस्तरः (परिशिष्टे)

| क्र.सं. | 'ख' | पृ.सं. | 'ग' | पृ.सं. | 'घ-ङ' (अत्र क्रमभेदो दृश्यते) | पृ.सं. |
|---|---|---|---|---|---|---|
| १. | कुङ्कुमन्यासः | २०९ | | | | |
| २. | भूतलिपिन्यासः | २०९ | | | | |
| ३. | विघ्नरतिन्यासः (गणेशन्यासः) | २१० | गणेशन्यासः | २१५ | गणेशन्यासः | २१५ |
| | | | | | कामरतिन्यासः | २११ |
| ४. | कामरतिन्यासः | २११ | | | श्रीकण्ठन्यासः | २१२ |
| ५. | श्रीकण्ठादिन्यासः | २१२ | | | | |
| ६. | ग्रहन्यासः | २१७ | ग्रहन्यासः | २१७ | ग्रहन्यासः | २१७ |
| ७. | नक्षत्रन्यासः | २१८ | नक्षत्रन्यासः | २१८ | नक्षत्रन्यासः | २१८ |
| ८. | योगिनीन्यासः | २१९ | योगिनीन्यासः | २१९ | योगिनीन्यासः | २१९ |
| ९. | राशिन्यासः | २२२ | राशिन्यासः | २२२ | राशिन्यासः | २२२ |
| १०. | पीठन्यासः | २२३ | पीठन्यासः | २२३ | पीठन्यासः | २२३ |
| ११. | चक्रन्यासः | २२५ | चक्रन्यासः | २२५ | चक्रन्यासः | २२५ |
| १२. | पुर्यष्टकन्यासः | २३७ | | | | |
| १३. | पीठचतुष्टयन्यासः | २३७ | | | | |
| १४. | तत्त्वन्यासः | २३७ | | | | |
| १५. | | | | | कामिनीन्यासः | २४१ |
| १६. | | | | | नवयोनिन्यासः | २४१ |
| १७. | | | | | आन्तरन्यासः | २४२ |

# मातृकासूद्धृताः पद्धतयः

| पद्धतिनाम | क. | प. सं. | ख. | पृ. सं. | ग. | प. सं. | घ. | प. सं. | ङ. | प. सं. |
|---|---|---|---|---|---|---|---|---|---|---|
| नमस्कारपद्धतिः | गुरुध्यानान्तर्गता | २नि. | | | | | | | | |
| गुरुध्यानपद्धतिः | प्रथमा | २सा. | प्रथमा | ३ | प्रथमा | २ सा. | प्रथमा | २ नि. | प्रथमा | २ सा. |
| मन्त्रध्यानपद्धतिः | द्वितीया | ३सा. | द्वितीया | ४ | द्वितीया | ४ नि. | द्वितीया | २ नि. | द्वितीया | ३ नि. |
| स्नानपद्धतिः | तृतीया | ५सा. | तृतीया | ६ | तृतीया | ६ नि. | तृतीया | ३ नि. | तृतीया | ४ सा. |
| सन्ध्यावन्दनपद्धतिः | चतुर्थी | ८नि. | चतुर्थी | १० | चतुर्थी | ८ सा. | चतुर्थी | ४ नि. | चतुर्थी | ७ नि. |
| तर्पणपद्धतिः | पञ्चमी | ९सा. | पञ्चमी | ११ | पञ्चमी | ९ सा. | पञ्चमी | ४ सा. | पञ्चमी | ८ नि. |
| सूर्यपूजापद्धतिः | षष्ठी | ११सा. | षष्ठी | १४ | षष्ठी | ११ सा. | षष्ठी | ५ नि. | षष्ठी | १० नि. |
| मण्डपवर्णनपद्धतिः | × × | × | × × | × | (सप्तमी) | १२ सा. | मण्डललक्षणम् | ५ सा. | मण्डललक्षणम् | १० नि. |
| द्वारपालार्चनपद्धतिः | सप्तमी | १३सा. | सप्तमी | पृ. १७ | अष्टमी | १५ नि. | सप्तमी | ६ सा. | सप्तमी | १३ सा. |
| चक्रोद्धारपद्धतिः | अष्टमी | १६सा. | अष्टमी | पृ. १९ | अष्टमी (नवमी) | १६ सा. | अष्टमी | ७ सा. | अष्टमी | १५ नि. |
| अर्घ्यसाधनपद्धतिः | नवमी | २०नि. | नवमी | पृ. २५ | दशमी | २१ सा. | नवमी | ९ सा. | नवमी | १९ नि. |
| मन्त्रोद्धारपद्धतिः | दशमी | २२नि. | दशमी | पृ. २७ | एकादशी | ३९ नि. | एकादशी | १९ नि. | एकादशी | ३९ नि. |
| मन्त्रोद्धारपद्धतिः | × × | × | × × | × | एकादशी (द्वादशी) | ३९ सा. | × × | × | × × | × |
| न्यासपद्धतिः | × × | × | एकादशी | ५३ | त्रयोदशी | ५० सा. | × × | × | × × | × |
| करन्यासपद्धतिः | × × | × | × × | × | पञ्चदशी | ५७ सा. | × × | × | × × | × |
| बाह्यन्यासपद्धतिः | × × | × | × × | × | × × | × | द्वादशी | २६ नि. | द्वादशी | ५३ सा. |
| आन्तरन्यासपद्धतिः | × × | × | × × | × | × × | × | त्रयोदशी | २६ नि. | त्रयोदशी | ५४ नि. |
| पीठार्चनपद्धतिः | × × | × | × × | × | × × | × | चतुर्दशी | २६ सा. | चतुर्दशी | ५५ सा. |

| पद्धतिनाम | क. | प. सं. | ख. | पृ. सं. | ग. | प. सं. | घ. | प. सं. | ङ. | प. सं. |
|---|---|---|---|---|---|---|---|---|---|---|
| सामान्यार्घ्यपात्रविधिः | × × | × | × × | × | × × | × | पञ्चदशी | २८ नि. | पञ्चदशी | ६० नि. |
| ध्यानपद्धतिः | × × | × | द्वादशी | ५६ | षोडशी | ६१ नि. | षोडशी | ३० सा. | षोडशी | ६७ नि. |
| दूतीयागपद्धतिः | × × | × | × × | × | सप्तदशमी | ६५ नि. | दशमी | ११ नि. | दशमी | २२ नि. |
| पूजापद्धतिः | त्रयोदशी | २८नि. | त्रयोदशी | ८० | अष्टादशमी | ८० सा. | × × | × | × × | × |
| मुद्रापद्धतिः | चतुर्दशी | २८सा. | चतुर्दशी | ८० | एकोनविंशतिः | ८१ नि. | × × | × | × × | × |
| होमपद्धतिः | पञ्चदशी | ३२सा. | पञ्चदशी | ८४ | विंशतिः | ८४ सा. | × × | × | × × | × |
| जपपद्धतिः | षोडशी | ३२सा. | षोडशी | ८५ | एकविंशतिः | ८५ नि. | × × | × | × × | × |
| अक्षमालापद्धतिः | सप्तदशी | ३३नि. | सप्तदशी | ८६ | द्वाविंशतिः | ८५ सा. | × × | × | × × | × |
| चक्रार्चनपूजाहोमजापपद्धतिः | × × | × | × × | × | × × | × | सप्तदशी | ४१ नि. | सप्तदशी | ९३ नि. |
| स्तोत्रपद्धतिः | अष्टादशी | ३४सा. | अष्टादशी | ९६ | त्रयोविंशतिः | ८७ नि. | अष्टादशी | ४५ सा. | अष्टादशी | १०८ नि. |
| पवित्रपद्धतिः | एकोनविंशतिः | ३८नि. | एकोनविंशतिः | १०१ | चतुर्विंशतिः (अपूर्णा) | ९०नि. | विंशतितमी | ४७ नि. | विंशतितमी | ११३ सा. |
| दमनकपद्धतिः | विंशतिः | ४१सा. | विंशतिः | १०६ | **मातृकाऽवसिता** | | एकविंशतितमी | ४८ सा. | एकविंशतितमी | ११८ सा. |
| (कामविधान)पद्धतिः | एकविंशतिः | ४१सा. | × × | × | | | द्वाविंशतिः | ४९ सा. | द्वाविंशतिः | १२० नि. |
| काम्यपद्धतिः | एकविंशतिः | ५६नि. | × × | × | | | × × | × | × × | × |
| दीक्षापद्धतिः | द्वाविंशतिः | ५४नि. | एकविंशतिः | ११५ | | | त्रयोविंशतिः | ५२ सा. | त्रयोविंशतिः | १२७ नि. |
| पारम्पर्यपद्धतिः | (दीक्षापद्धत्यन्तर्गता) | | मध्यमपद्धतिः | | | | चतुर्विंशतिः | ५४ नि. | चतुर्विंशतिः | १३० नि. |
| द्वीपाम्नायपद्धतिः | × × | × | **सम्पूर्णा** | | | | पञ्चविंशतिः | ५९ नि. | पञ्चविंशतिः | १४२ नि. |

